तदेव द्विशताधिकसहस्रतया समग्राहि । पुनरपि जगतो हिताय तन्त्रं संक्षिप्य रौरवसूत्रसंग्रहो रुरुणा व्यरचीति भणितमस्ति । उपलभ्यमानेऽस्मिन् रौरवसूत्रसंग्रहे आहत्य ३३९ श्लोका दृश्यन्ते ।

शिवज्ञानबोधाख्यो द्वादशसूत्रात्मको ग्रन्थः कश्चन शैवसिद्धान्तानुगामिभिः प्रमाणत्वेनाद्रियते । तद्व्याख्यात्रा सदाशिवाचार्येण[1] तच्छिष्यपरंपरागतेन शिवाग्रयोगिना[2] च स्वस्वव्याख्याने सूत्राणामेतेषां रौरवागमान्तर्गतत्वं प्रतिपाद्यते । तदनुसृत्य बहुभिर्द्राविडदेशीयव्याख्यातृभिः शिवज्ञानबोधो रौरवागमादुद्धृत इति व्यवह्रियते । कैश्चिद्विशिष्य रौरवागमत्रिसप्ततितमपटले द्वादशाध्यायोक्तद्वादशसूत्रमिति निर्दिश्यते । अस्ति कश्चनान्यो व्याख्याता शिवज्ञानबोधस्य[3] । यः स्वीयोपोद्घाते एवं वक्ति—"तत्र तावदेतद्ग्रन्थकर्ता को वेति जिज्ञासायां तावदेतानि शिवशक्तिव्यक्तिभूमिभृतानि सन्ति । परोक्षत्रिपदार्थज्ञानात्मकमात्मचिच्छक्त्यर्थक्रियाभूतं त्रिपदार्थविषयत्वेऽपि शिवप्रधानत्वाच्छिवविषयं दीक्षायोगाङ्गत्वेन बोधयन्ति व्यञ्जयन्तीति शिवज्ञानबोधाख्यानि रौरवप्रादेशिकानि द्वादशसूत्राणीति द्राविडदेशीयलोकवादत्वेन तत्रत्यैः शिवाचार्यैः स ग्रन्थकर्ता रौरवकर्तृत्वाच्छिव इति विवक्षितः ।................शिवेन प्रोक्तज्ञानमागमचतुष्पादमध्यविद्यमाने ज्ञानपादे यथाकथंचित्पादान्तरेषु च संभूतसारार्थसंक्षेपनिक्षेपसंग्रहस्वशब्दैः शिवज्ञानबोधाख्येन श्रीमता केनचिदाचार्येण कृतानि द्वादश सूत्राणि । अतः शिवज्ञानबोधाख्यानीति कर्णाटकदेशीयलोकवादत्वेन तत्रत्यैः शैवाचार्यैः स ग्रन्थकर्ता शिव इत्युक्तिः काल्पनिकीति शिवज्ञानबोधाख्यः कश्चिदाचार्य इति विवक्षितः । स तु को वा भवतु" इति ।

अत्र विमर्शने क्रियमाणे सन्त्येते वक्तव्यांशाः—शिवज्ञानबोधसूत्राणि सिद्धान्तसूत्राणि अथवा शैवसिद्धान्तसूत्राणि इत्यपराभिधेयानि रौरवागमादुद्धृतानीति वामदेवशिवाचार्यसंप्रदायप्रवर्तकमणिकर्णिकामठनिवासिसदाशिवाचार्यः प्रथमतया स्वव्याख्यायां निर्दिशति । तदनु तदनुसृत्य तदीयशिष्यपरंपरागतः शिवाग्रयोग्यपि स्वभाष्ये तदनुवदति पश्चादितरे शैवाचार्याश्च । तथा चैतन्मूलकोऽयं व्यवहारः । अस्मिन्विषये विवाद आसीदित्ययमंशः पूर्वमुल्लिखितात्तृतीयव्याख्यानभागात्स्पष्टं भवति ।

रौरवागमीयज्ञानपादस्य संग्रहरूपो रौरवसूत्रसंग्रहो दशपटलात्मको रौरवागमप्रथमभागेऽस्माभिः प्रकाशितः । संपूर्णोऽयं भागः । तत्र शिवज्ञानबोधसूत्राणि न लब्धानि । पाशविमोचनाख्यपटलोऽपि नास्माभिरुपलब्धः । पाशविमोचनपटले द्वादशाध्याये इत्येतादृशो विभागो मूलागमेषु नैव दृश्यते । तत्र चत्वारः पादाः, पादेषु पटलाः इतीदृशो विभागः सुप्रसिद्धः । नैव पटलेष्वध्यायविभागः ।

---

1 रौरवागमान्तस्थपाशविमोचनपटलपठितानि शिवज्ञानबोधसिद्धान्तसूत्राणि — सदाशिवाचार्यव्याख्या पृ. ३

2. श्रीकण्ठनाथः........अनन्तेशेन स्वस्मै बोधितं रौरवतन्त्रान्तर्गतं शिवज्ञानबोधाख्यं शास्त्रमुपदिशति —शिवाग्रभाष्ये पृ. ७

3 अस्मत्कोशागारस्थः Re 25188 इत्यङ्कितताळपत्रकोशः ।

किंच शिवज्ञानबोधस्यान्तिमसूत्रे "एवं विद्याच्छिवज्ञानबोधे शैवार्थनिर्णयम् ।" इति समाप्तिवचनाच्छिवज्ञानबोधाख्योऽयं कश्चन स्वतन्त्र एव ग्रन्थ इत्येव प्रतीतिर्जायते । एवमेतादृशैर्बहुभिः कारणैः शिवज्ञानबोधः रौरवागमादुद्धृत इति दृढं वक्तुं न पार्यते । सदाशिवाचार्याः केन प्रमाणेनैवं निर्दिशन्तीति न ज्ञायते । किं कर्णपरंपरया श्रुतमुल्लिखितवन्तः उत कुत्रचिदागममातृकाधारेण । इदानीमुपलभ्यमानासु रौरवागममातृकासु न कुत्रचिदपि शिवज्ञानबोधसूत्राण्युपलभ्यन्ते । शिवज्ञानबोधकर्तृविषये प्राक्कालादेवासीद्विवाद इति परमिदानीं वक्तुं शक्यते ।

रौरवागमस्य द्वितीये क्रियापादे षट्चत्वारिंशत्पटलाः सन्ति । तेषु षड्विंशतिः पटलाः प्रथमे भागे प्रकाशिताः । अवशिष्टः सप्तविंशप्रभृति षट्चत्वारिंशपटलान्तोंऽशो द्वितीयेऽस्मिन्भागे मुद्रितः ।

आद्ये भागे प्रथमादारभ्यैकोनविंशतितमान्ताः पटला नित्यक्रियाप्रतिपादकाः । विंशात्प्रभृति षड्विंशतितमान्ता नैमित्तिकक्रियाबोधकाः । द्वितीये भागे सप्तविंशादारभ्य त्रिचत्वारिंशान्तेषु पटलेषु प्रतिष्ठाभागो वर्ण्यते । चतुश्चत्वारिंशपञ्चचत्वारिंशौ प्रायश्चित्तप्रतिपादकौ । षट्चत्वारिंशे चान्त्येष्टिर्वर्ण्यते ।

तत्र प्रथमे पटले मन्त्रोद्धारः संक्षेपेण प्रोच्यते । आगमान्तरमन्त्रोद्धारस्यात्रत्यस्य च भेदो निरूपितः टिप्पण्याम् ।

द्वितीये पूजाकर्मोपयुक्तोऽष्टत्रिंशत्कलान्यासः प्रतिपाद्यते । अयं पटलस्तथा रौरवसूत्रसंग्रहे पञ्चमसप्तमपटलयोरेकदेशश्च गद्यपद्यात्मकतया विद्यते । अचिन्त्यविश्वसादाख्येऽपि गद्यपद्यात्मकभागो दृश्यते । अत्र पटले प्रतिपाद्यमानो विषयो रौरवसूत्रसंग्रहे षष्ठे पटले पञ्चब्रह्मकलाविधिरिति पद्यात्मना वर्णितः । आगमान्तरेषु दृश्यमानः कलानामभेदः टिप्पण्यां सम्यग् दर्शितः ।

तृतीये शिवपञ्चाक्षरविधानं संग्रहेण न्यरूपि ।

चतुर्थे मन्त्रजपविधानप्रकारो रुद्राक्षमहिमा च प्रतिपादितौ । पञ्चमे षष्ठे च शौचाचमने समासेन निरूपिते । सप्तमेऽष्टमे च वारुणस्नानभस्मस्नाने प्रोच्येते । शिवार्चनविधौ प्रसङ्गान्मन्त्रस्नानस्य च वर्णनं विद्यते । स्नानविषये मृगेन्द्रागमे सप्तविधस्नानं, तथा कामिकाजितयोः षड्विधं, कारण-किरण-दीप्त-मकुट-योगज-वीर-सुप्रभेद-कालोत्तरेषु पञ्चविधस्नानं च वर्णितमस्ति । चिन्त्ये वारुणाग्नेय-मानसमिति त्रिविधस्नानं दृश्यते । रौरवे वारुणाग्नेयमन्त्रस्नानरूपस्य त्रिविधस्य परमुक्तिरिति भेदोऽवगन्तव्यः ।

नवमे अर्चनोपयुक्तानां पाद्याचमनार्घ्यगन्धपुष्पधूपदीपद्रव्याणां निर्देशः प्रतिसंधि कर्तव्यानां कर्मणां कालक्रमश्च प्रत्यपादि ।

दशमे पञ्चशुद्धिपुरस्सरं शिवपूजा कर्तव्येति विहिता। अत्र शुद्धिविषये सर्वत्र क्रियाकलापोऽतीव संक्षिप्य बोधितः। मन्त्रविषयेऽपि संक्षेपो दृश्यते। आगमान्तरेषु मन्त्रक्रियाबाहुल्यं वर्ण्यते। यथा स्थानशुद्धिविषये रौरवे मार्जनालेपनं शिवाम्भःप्रोक्षणमेव विहितम्। मन्त्रो नोक्तः। कामिके तु तालत्रयकरणमस्त्रेण प्राकारकल्पनं, तद्बहिः कवचेन परिघाकल्पनं, विघ्नोत्सारणाय अस्त्रजालन्यासः कर्तव्य इति समन्त्रकं क्रियाकलापो वर्णितः। एवं कारणागमे भूमिदेवीध्यानं, हृदयमन्त्रेण गन्धादिभिस्तस्या अर्चनमस्त्रेण दिग्विरेचनं च स्थानशुद्धौ प्रोक्तानि। अजितागमे नाराचास्त्रप्रयोगेन दिग्बन्धः, तालत्रयकरणं कवचेनावकुण्ठनं चाभिहितम्।

द्रव्यशुद्धौ पाद्यादिपात्रसाधनं, तेषामस्त्रमन्त्रेण प्रोक्षणं परं रौरवे प्रोक्तम्। अजितागमे पाद्याचमनार्घ्यपात्रविषयेऽस्त्रमन्त्रेण तेषां क्षालनं, तेषु गन्धाम्बुपूरणं, मन्त्रसंहितया तत्तद्द्रव्यनिक्षेपः, प्रणवेनाभिमन्त्रणं, धेनुमुद्राप्रदर्शनं कवचेनावकुण्ठनं च कर्तव्यतया बोध्यते। गन्धपुष्पादिद्रव्येषु हेतिना प्रोक्षणं कवचेनाभ्युक्षणं, मन्त्रसंहितयालभनं चेति समन्त्रकं क्रियाकलापो विधीयते। कारणागमे पाद्याचमनार्घ्यपात्राणां पूजोपयुक्तानां शङ्खादीनां पात्रान्तराणां च अस्त्रेण क्षालनं, हृदयेन निरीक्षणं, कवचेनावकुण्ठनं तेनैवोन्मीलनं च वर्णितम्। तथा वर्धन्या शङ्खेन वा पात्रेषु शिवाम्भःपूरणं, तत्र तोये पञ्चब्रह्मषडङ्गन्यासः, दक्षहस्तेन पिधानं, दशबीजन्यासः, लिङ्गमुद्रापद्ममुद्रयोः प्रदर्शनं चेति क्रियाबाहुल्यं निर्दिष्टम्। किं च पात्राणां शङ्खतोयेन हृन्मन्त्रेण सर्वत्र प्रोक्षणं कार्यमिति च प्रतिपाद्यते। क्षीरदधिघृतगन्धपुष्पधूपादीनां पुरुषमन्त्रेण वर्धनीतोयप्रोक्षणं च द्रव्यशुद्धौ क्रियाकलापो बहुधा विहितो दृश्यते।

लिङ्गशुद्धौ पूजापर्युषितानां हृदयेन विसर्जनं, सद्योजातेन शिरसि पुष्पन्यासः, निर्माल्यस्य चण्डेशाय प्रदापनम्, अभिषेक इत्यादिक्रियाकलापो विहितो दृश्यते आगमान्तरेषु। रौरवे तु पूर्वोक्तक्रियाविधानं न दृश्यते। शिवास्त्रेण लिङ्गशुद्धिः, पाशुपतास्त्रेण पीठशुद्धिः, विद्याङ्गास्त्रेण लिङ्गपीठस्थलशुद्धिरिति परं वर्णितम्। अत्र विषये अजितागमे लिङ्गेऽस्त्रेण क्षालनमिति दृश्यते। पीठस्थलशुद्धिविषये मन्त्रो विशिष्य न निर्दिष्टः। सुप्रभेदे दीप्ते च अस्त्रेण लिङ्गक्षालनं पाशुपतेन पीठक्षालनं चोदितम्। स्थलशुद्धिविषये मन्त्रो न विहितः।

मन्त्रशुद्धौ अन्यूनाधिकवर्णं यथास्वरं मन्त्रोच्चारणमेव रौरवे कर्तव्यतया प्रोच्यते। स्वरहीने विपत्तिः, वर्णहीने मृत्युः, वर्णाधिक्ये शोकश्च संभवेदिति विशिष्य प्रोक्तं रौरवे। दीप्ते ओंकारदीपिता नमस्कारान्ताश्च सर्वे मन्त्राः प्रयोक्तव्या इति प्रोच्यते। अजिते च ओंकारदीपितान्नादान्तान्मन्त्रानुच्चारयेदिति विधिर्दृश्यते।

द्वारपूजायां कारण-कामिकाजित-चिन्त्य-सुप्रभेदेषु नन्दिगङ्गयोर्महाकालयमुनयोः सहितयोरेव पूजा प्रतिपादिता। रौरवे तु केवलयोर्नन्दिकालयोरेव पूजा चोदिता। एवं वृषभस्य पूजागमान्तरेषु

द्वारपूजाविषये दृश्यते। रौरवे वृषभो न निर्दिष्टोऽत्र विषये। सुप्रभेदेऽपि रौरववद्वृषभस्य द्वारपूजायां गणनं नास्ति।

लिङ्गे सदाशिवध्यानविषये रौरवसुप्रभेदयोः शक्तिसहितस्य सदाशिवध्यानं दृश्यते। अजिते, वीरेऽचिन्त्यविश्वसादाख्ये च शक्तिप्रस्तावो न विद्यते।

पञ्चावरणविषये रौरवे विद्यमानो विशेषः टिप्पण्यां प्रादर्शि।

अष्टकालेषु पुष्पदानस्य, तथा त्रिषु कालेषु गन्धदानस्य, सप्तसु कालेषु वारिदानस्य च कर्तव्यता कामिकरौरवसुप्रभेदेषु प्रोच्यते। अर्घ्यविलेपनस्नानेषु गन्धदानमित्यागमत्रयेऽपि चोदितम्। तथा आवाहनार्घ्य-पाद्य-स्नान-धूप-विलेपन-नैवेद्य-विसर्गेषु पुष्पदानस्य च वक्तव्यताऽऽगमत्रयेऽपि समानतया विद्यते। वारिदानविषये परं भेदो विद्यते—

पुष्पदानार्घ्यपाद्येषु स्नाने चाचमने तथा।
क्षालने प्रोक्षणे चैव वारि सप्तसु योजयेत्॥ इति कामिके[1]।

आवाहने तथा चार्घ्ये पाद्ये स्नाने तथैव च।
आचमने निवेद्ये च विसर्गे सप्त वारि वै॥ इति रौरवे[2]।

सुप्रभेदे पुष्पदानोक्तकालः आवाहनस्थाने परिगणितः।

एकादशे पटले पश्चिममुखद्वारहर्म्ये कर्तव्योऽर्चनाप्रकारो यथाविधि संक्षेपेण कथितः।

द्वादशे पटले पूजोपयुक्तो नैवेद्यविधिः प्रोच्यते। अत्र धान्यानां मानविषये ग्रन्थान्तरेभ्योऽत्रत्यो भेदो दर्शितः टिप्पण्याम्। अत्र पञ्चमुखेषु हविःप्रदानविषये शुद्धान्न-गुलौदन-कृसरान्न-मुद्गान्न-पायसानि इति पञ्च अजितागमे कारणागमे च प्रोक्तानि। रौरवे पूर्वोक्तेषु कृसरान्नं वर्जयित्वा तत्र हरिद्रान्नं चोदितम्। तथा ईशाने रौरवाजितयोः शुद्धान्नदानं कारणे मुद्गान्नदानं चोक्तम्। तत्पुरुषे कारणे शुद्धान्नं, रौरवे हरिद्रान्नं अजिते गुलौदनं च देयमिति विहितम्। अघोरे रौरवकारणयोः पायसान्नदानं, अजिते कृसरान्नदानमिति भेदो दृश्यते। वामे रौरवकारणयोर्गुलान्नं अजिते मुद्गान्नं च निवेदनीयमिति वर्णितम्। तथा सद्योजाते रौरवे मुद्गान्नदानं, अजिते पायसान्नदानं, कारणे कृसरान्नदानमिति च व्यत्यासो वर्तते।

---

1 पूर्वकामिके 4, 412b-413a

2 रौरवे क्रियापादे 10, 58b-59a

त्रयोदशे पटले प्रतिसंवत्सरं क्षेत्रादाहृतस्य नूतनधान्यादिकस्य भगवन्निवेदनप्रकारो नवनैवेद्यविधौ प्रोच्यते। अत्र च कश्चन विशेषो वर्ण्यते। समुद्रान्तिके देशे जलशुद्धितानां तण्डुलानां पाकं विना गुलनालिकेर-फलेक्षुखण्डसहितं निवेदितव्यमन्यत्र पक्वस्य तण्डुलस्योपदंशसहितस्य निवेदनमिति।

चतुर्दशे पटले पूजाङ्गस्याग्निकार्यस्यावश्यकानां कुण्डानां लक्षणं विधीयते। अत्रागमान्तरेषु कुण्डाष्टकमेव प्रायेण प्रोच्यते। रौरवे परं कुण्डदशकस्योक्तिरिति विशेषो दृश्यते। यथा किरणसुप्रभेदाजितेषु चतुरश्र-धनुर्वृत्त-पद्म-योनि-त्रिकोण-षट्कोणाष्टकोणानामष्टानां कुण्डानां निर्देशः, वीरे चतुरश्र-योनि-धनु-स्त्रिकोण-वृत्त-पञ्चकोण-सप्तकोणाष्टकोणानां कुण्डाष्टकानां वर्णनं दृश्यते। रौरवे वेदाश्र-योनि-खण्डेन्दु-त्रिकोण-वृत्त-पञ्चाश्र-षडश्र-सप्ताश्राष्टकोण-पद्मानां दशानां निर्देशो विद्यते।

पञ्चदशे पटले पूर्वोक्तकुण्डेषु पूजादिकार्येषु करणीयस्याग्निकार्यस्य कथनम्। अत्रागमान्तरेषु दृश्यमानो विशेषः टिप्पण्यां न्यदर्शि।

षोडशे पटले पूजायामग्निकार्यानन्तरं कर्तव्यत्वेन विहितस्य नित्योत्सवस्य वर्णनम्। अत्र चास्त्रमूर्ति-चन्द्रशेखरयोरेव चोत्सवे विनियोगो रौरवे विधीयते। अजिते नवप्रकारतयोत्सवस्य वर्णनं विद्यते। रौरवे अस्त्रलिङ्गपात्रप्रतिमादीनां पतनादिसंभवे कर्तव्यस्य प्रायश्चित्तस्यापि नित्योत्सवपटल एव वर्णनं कृतमिति विशेषोऽवगन्तव्यः।

सप्तदशे पटले स्थापन-संप्रोक्षण-स्नपनेषु तथान्येषु मङ्गलकार्येषु च पूर्वं कर्तव्यस्याङ्कुरार्पणस्य संक्षेपेण वर्णनम्।

अष्टादशे पटले महोत्सवविधिर्वर्ण्यते। अत्र शान्तिक-पौष्टिक-जयद-धनद-सार्वकामिकमिति क्रमेण, एकाह-त्र्यह-पञ्चाह-सप्ताह-नवाहेषु करणीयतया पञ्चधोत्सवभेदो न्यरूपि। एषां प्रत्येकमङ्ग-संख्या च प्रोच्यते। आगमान्तरेषु प्रायेणैवं न दृश्यते। तत्र सप्तदशाङ्गसहितस्य नवाहकर्तव्यस्योत्सवस्य विधिर्विशिष्याभिहितः। अत्र तीर्थे वैवाह्यमूर्तेर्माहिन्या सह स्नानं कारयितव्यमिति भण्यते। पाषाणैस्तरण-मिति किमप्यपूर्वमङ्गं निर्दिष्टम्। तत्र स्पष्टतया विवृतम्।

एकोनविंशतितमे पटले स्नाने, नित्योत्सवे, महोत्सवे, स्नपने, स्थापने, प्रोक्षणे च कर्तव्यत्वेन शुद्धनृत्तविधिः प्रत्येकपटलेन वर्ण्यते। आगमान्तरेषु प्रायेणैवं नैवोच्यते।

विंशादारभ्य चतुर्विंशतितमपटलपर्यन्तं पञ्चसु पटलेषु क्रमेण नवकलशस्नपन-पञ्चविंशतिकलश-स्नपन-एकोनपञ्चाशत्कलशस्नपन-अष्टोत्तरशतकलशस्नपन-नवाधिकसहस्रकलशस्नपनानि चतुरश्रपदेषु कर्तव्यतया विहितानि। तेषां सर्वेषामपि स्नपनानां सूत्रपातक्रमः, आवरणक्रमः, द्रव्यक्रमः, देवताक्रमश्चाभिहिताः। नवाधिकसहस्रस्नपने परं देवतानामानि केषुचिदावरणेषु प्रणष्टानि। स्नपनविषये आगमान्तरेभ्योऽत्र विद्यमानो भेदः टिप्पण्यां विशिष्य न्यदर्शि।

पञ्चविंशतितमे पटले आचार्यसंकरादिदोषनिवारकं मन्त्रलोपादिदोषहरं संवत्सरकृतपापापहरं च पवित्रारोपणाख्यं कर्म विधीयते। पवित्रारोपणमिदं पञ्चत्वारिंशे पटलेऽपि वर्तते।

षड्विंशे कृत्तिकादीपविधिः सप्रपञ्चं न्यदर्शि।

अस्मिन्पुस्तके प्रथमे भागेऽनुबन्धतया सूर्यपूजाविधिपटलः संघटितः। तस्यानुबन्धतया घटने कारणं तत्रैव टिप्पण्यां निरूपितम्। अत्र च सूर्यपूजाविधौ सूक्ष्मपीठस्थूलपीठात्मकसूर्यचक्रविधानं प्रोच्यते। सूर्यपूजाकरणप्रकारश्च साङ्गं न्यरूपि।

द्वितीये भागे सप्तविंशपटलात् प्रभृति षट्चत्वारिंशान्ताः पटलाः सन्ति। तत्र सप्तविंशे पटले नूतनप्रतिष्ठायां प्रायश्चित्तार्थके जीर्णोद्धारादौ च कर्तव्यस्य बाललिङ्गस्थापनस्य निरूपणं विद्यते। अत्र बाललिङ्गस्थापनस्य नूतनविषये जीर्णोद्धारादौ चावश्यकर्तव्यता विशिष्य विधीयते। कामिके ग्रामे नूतनप्रतिष्ठायां बाललिङ्गस्थापनस्य वैकल्पिकत्वं प्रोच्यते।। अजिते च नूतने लिङ्गप्रतिष्ठाविषये बाललिङ्गस्थापनप्रस्तावो न दृश्यते। स्थापितस्य बाललिङ्गस्य विसर्जनमवश्यं करणीयम्। तन्न पुनः कुत्रापि स्थापनार्हमिति च वर्णितम्। तथा स्थापिते राष्ट्रग्रामनाशो भवेदिति प्रत्यवायश्च बोधितः।

अष्टाविंशे पटले लिङ्गस्थापनं प्रोच्यते। अत्र लिङ्गलक्षणं पीठलक्षणं च प्रतिपाद्यते। समखण्ड-वर्धमान-शिवाधिक-स्वस्तिकानां चतुर्णां लिङ्गानां लक्षणं न्यरूपि। कारणे त्रैराशिकमिति भेदान्तरं विद्यते। तथा लिङ्गशिरोवर्तनविषये रौरवेऽर्धचन्द्राकारशिरोवर्तनमेकमेव वर्णितम्। अजिते कारणे च कुक्कुटाण्डछत्राकारार्धचन्द्राकारत्रपुषाकारमिति प्रकारचतुष्टयं विद्यते। पीठविषये भद्रपद्मपीठयोरेव कथनं रौरवेऽस्ति। अजिते दशधा पीठाकृतिः प्रोक्ता। किरणेऽष्टधा पीठाकृतिरभिहिता। लिङ्गस्थापनप्रकारो विशिष्य वर्णितोऽस्ति।

एकोनत्रिंशे पटले जीर्णपिण्डिकामुत्सृज्य पिण्डिकान्तरस्थापनप्रकारो विशिष्य न्यदर्शि।

त्रिंशे पटले उपरतानां शिवभक्तानां समाधौ करणीयो लिङ्गस्थापनप्रकारो वर्ण्यते। तटाक-वापी-नदी-समुद्रतीरेषु, पर्वताग्र-वनान्तर-श्मशानेषु शिवालये चेति स्थानाष्टकेषु दैविकार्षक-गाणप-मानुषेषु चतुर्षु लिङ्गेष्वेकं स्थापनीयम्। एषु च दैविकस्य लिङ्गस्य स्थापने श्रेष्ठता, तथा स्थानाष्टकेषु श्मशानस्योत्कृष्टत्वं च प्रतिपादितम्। आलयः सार्वकामिको जयदो वा भवेत्। पश्चिमाननतया लिङ्गं स्थापनीयम् प्रतिमा वा स्थाप्या। प्रतिमा चेद्दक्षिणाभिमुखा स्थापनीया। शिवालये यदि लिङ्गं स्थाप्यते तदा मध्यहारायां मर्यादौ महामर्यादौ च स्थाप्यम्। तत्रापि मध्यहारायां मर्यादौ च परिवारं विना स्थापनीयम्। महामर्यादौ सपरिवारं लिङ्गं स्थाप्यमिति च वर्ण्यते। शिवालये पूर्वाग्निदक्षिणनिर्ऋतिपश्चिमेषु पञ्चसु

भागेषु स्थापने रोगाद्यशुभफलं भवेत् । वायुसौम्येशानभागेषु स्थापने शत्रुनाशादि शुभफलं स्यादिति च प्रोक्तम् । क्षेत्रलिङ्गस्थापने क्रियाभागः समग्रतया विशेषेण रौरवे विहितो वर्तते ।

एकत्रिंशे देवीस्थापनवर्णनम् । तत्र अंशुमदागमे स्वतन्त्रं केवलमिति शक्तिद्वयं प्रोच्यते । परिवारादिभिर्युतं वीरं स्वतन्त्रं, परिवारादिहीनं केवलमिति च लक्षणमुच्यते । पूर्वकारणे शम्भुं विना यत्र गौरीस्थापनं तत्केवलम् । भवानीशम्भ्वोः सहैव स्थापनं सहजम् । पूर्वं देवं स्थाप्य पश्चात्काले देवीस्थापनं पौष्यमिति भेदत्रयं प्रतिपादितम् । सुप्रभेदे शम्भुं विना शक्तेः परं यत्र स्थापनं तदेकम् । पूर्वं देवं स्थाप्य पश्चात्काले देवीस्थापन युक्तम् । सहैव देवदेव्योः स्थापनं सहेति भेदत्रयं वर्ण्यते । रौरवे तु गौर्याः परं स्थापनं वीरम् । शम्भुना सह गौर्याः स्थापनं योगम् । प्राकारे शयनस्थाने गौर्याः स्थापनं क्रम इति त्रयो भेदाः प्रोक्ताः । रौरवे प्रतिष्ठानन्तरं सर्वासामर्चायां विवाहकर्म कर्तव्यमिति भण्यते । कामिके स्वयंप्रधानायाः सहजायाश्च कल्याणकर्म निषिध्यते । सुप्रभेदे युक्ते विवाहकर्म प्रोच्यते । पूर्वकारणे पौष्यस्य कल्याणकर्म करणीयं नान्ययोरिति च भणितमस्ति । अत्र पटले गौरीस्थापने क्रियाकलापः समग्रतयोपवर्णितः ।

द्वात्रिंशे पटले द्वारपालानामष्टानां सलक्षणं स्थापनप्रकारो वर्ण्यते । रौरव-दीप्त-योगज-वीर-सुप्रभेदेषु पञ्चस्वागमेषु पूर्वादिचतुर्दिक्षु स्थापनार्हाणां द्वारपालानां स्थाननामलक्षणादिकं वर्णितमस्ति । तत्र प्रतिविषयं व्यत्यासो विद्यते । यथा—सर्वत्रापि पूर्वद्वाराधिपौ नन्दिमहाकालावेव । दक्षिणद्वारे दीप्तरौरववीरेषु त्रिषु दण्डिमुण्डौ इति, योगजसुप्रभेदयोरनन्तः पशुपतिरिति च प्रोक्तौ । पश्चिमद्वारे रौरवे विजयो भृङ्गिरिति, दीप्ते भृङ्गी विजय इति, वीरे भृङ्गिणा विजय इति च निर्दिश्येते । योगजसुप्रभेदयोर्दण्डिमुण्डी इति निर्दिष्टौ । उत्तरद्वारे वीरे दीप्ते च अनन्तः पशुपतिरिति प्रोक्तौ । रौरवे गोपतिरनन्त इति निर्दिष्टौ । योगजसुप्रभेदयोः विजयो भृङ्गीश इति प्रोच्येते । इत्थं स्थाने नाम्नि च भेदो वर्तते । **नन्दी** श्यामाभः सर्वत्र । **कालः** कुङ्कुमाभ इति दीप्तं विना चतुर्षु प्रोक्तः । दीप्ते परं धूम्राभ इति कथ्यते । **दण्डी** इन्द्रगोपनिभ इति वीरे रौरवे च भण्यते । किं तु रौरवे कण्ठे मयूराभ इति विशेषो निर्दिष्टः । योगजसुप्रभेदयोरिन्द्रचापाभ इति, इन्द्रनीलाभ इति दीप्ते च प्रोच्यते । दण्डिरिति इकारान्तत्वेन वीररौरवयोर्निर्देशोऽस्य विद्यते । **मुण्डी** अयं रौरवं विना चतुर्षु श्वेतवर्ण इति भण्यते । रौरवे परमिन्द्रगोपनिभः, कण्ठे मयूराभ इति च निर्दिश्यते । मुण्डिरिति इकारान्तत्वेन निर्देशोऽस्य वीररौरवयोर्विद्यते । **भृङ्गी** अयं मयूरग्रीवाभ इति वीरे दीप्ते च वर्णितः । भृङ्गवर्ण इति योगजसुप्रभेदयोः प्रोक्तः । नीलाभ इति रौरवे दृश्यते । अयं वीरे भृङ्गिण इति, भृङ्गिरिति रौरवे च व्यपदिश्यते । भृङ्गीश इति योगजसुप्रभेदयोर्व्यवह्रियते । **विजयः** रौरवे पद्मरागाभ इति रक्तवर्ण इति परत्र चतुर्षु च वर्णितः । **पशुपतिः** रौरवं विना चतुर्षु नीलवर्ण इति व्यपदिष्टः । रौरवे परमयं गोपतिरिति श्वेताभ इति च निर्दिष्टः । **अनन्तः**

रौरवदीप्तयोः कालाभ इति वर्ण्यते। वीरे कनकाभस्तथा योगजसुप्रभेदयो रक्तवर्ण इति च व्यवह्रियते। इत्थं वर्णविषये भेदोऽवगन्तव्यः । तथायुधविषये भेदा निरूप्यते । **नन्दी** योगजं विनान्यत्र चतुर्षु दण्डहस्त इति प्रोक्तः। योगजे तु वामे परशुहस्तो दक्षिणे वेणुदण्डयुगिति हस्तद्वयेऽपि प्रोक्तमायुधमस्य। **कालः** अयं वटवृक्षायुध इति वीरे, परशुहस्त इति सुप्रभेदे दीप्ते च, गदाहस्त इति रौरवे च प्रोक्तः। योगजे परं नन्दिवदस्य परशुवेणुदण्डयुगिति हस्तद्वयेऽपि प्रोक्तमायुधमिति ज्ञेयम् । **दण्डी** दीप्तं विनान्यत्र चतुर्षु खड्गायुध इति व्यपदिश्यते दीप्ते परं दण्डहस्त इति निर्दिष्टः। **मुण्डी** भिण्डिपालहस्त इति रौरवं विना चतुर्षु निर्दिश्यते, रौरवे त्रिशूलहस्त इति भण्यते। **भृङ्गी** योगजसुप्रभेदयोः क्षुरिकायुध इति, वीरे शक्त्यायुध इति, रौरवे वेत्रहस्त इति दीप्ते खड्गहस्त इति च प्रोच्यते । **विजयः** अयं रौरवं विनान्यत्र चतुर्षु शूलहस्त इति प्रोक्तः । रौरवे परं भिण्डिपालायुध इति व्यपदिश्यते । **पशुपतिः** दीप्तवीरयोः पाशायुध इति, योगजसुप्रभेदयोः शक्तिहस्त इति च वर्ण्यते। रौरवे परमयं नाम्ना गोपतिरिति गदाहस्त इति च व्यवह्रियते। **अनन्तः** अयं पञ्चस्वपि वज्रहस्त इत्येव वर्णितः । इत्यायुधविषये भेदो निरूपितः ।

सर्वे द्वारपालाश्चतुर्भुजाः । तत्र द्वारपार्श्वहस्ते आयुधं परेऽञ्जलिः, परहस्तयोः पूर्वे सूची, अपरे हरपल्लव इति स्पष्टं चतुर्भुजानामुपपादनं दृश्यते रौरवे। एवं सर्वे सदंष्ट्रकाः अतिरौद्रा इति च प्रोक्तं रौरवे। वीरे आयुधमेकं व्यपदिष्टम् । नैव स्पष्टतया हस्तसंख्योदिता । सुप्रभेदे चतुर्भुजा वा द्विभुजा वा स्युः, सर्वे निर्देशहस्तकाः हलपल्लवहस्ता इति परं भणितम् । अत्रापि न स्पष्टतया प्रतिपादनं दृश्यते । योगजे नन्दिकालयोः परं हस्तद्वये निक्षेप्यमायुधं निगदितम्। अन्येषामेकमेवायुधं प्रोक्तमिति नात्रापि स्पष्टता हस्तविषयेऽस्ति। दीप्ते सर्वे चतुर्भुजा इति परं प्रोक्तम् । प्रत्येकमायुधमेकं निर्दिष्टमिति हस्तविषये स्पष्टतात्रापि न विद्यते । एवं द्वात्रिंशपटलार्थसंक्षेपः।

त्रयस्त्रिंशे पटले परिवारस्थापनं वर्ण्यते । रौरवे परिवाराष्टकस्यैव विधानं दृश्यते । अजितकामिकदीप्तेषु परिवाराष्टकषोडशकद्वात्रिंशत्कानां विधानं दृश्यते । तथा कारणयोगजवीरेषु परिवाराष्टकषोडशकयोरेव वर्णनमिति भेदो ज्ञेयः । परिवाराणामालयकरणप्रकारो वर्ततेऽजितकारणादिषु । रौरवे तत्प्रकारो नोक्तः। परिवाराणां प्रतिमाभावे कल्पनीयस्य पीठस्य लक्षणं वर्णितम् । द्वितीयेऽन्तर्हाराख्यप्राकारे परिवाराष्टकस्थापनं कल्पनीयमिति दीप्तकारणयोरुदितम् । रौरवे तु अन्तर्मण्डलमध्ये बाह्ये वा, अन्तर्हारमध्ये बाह्य वा, अन्तर्हारमध्ये वा मध्यहारे वा परिवाराष्टकं स्थाप्यमिति दृश्यते । योगजेऽपि अन्तर्मण्डले वा अन्तर्हारे वा कल्पनीयमिति भणितम् । अजिते अन्तर्मण्डले परिवाराष्टकं भवेदित्यभिधीयते। रौरवे वृषभ-दुर्गा-चामुण्डी-गणेश-षण्मुख-ज्येष्ठा-विष्णु-भानूनां गणनं परिवाराष्टके दृश्यते । दीप्ते मातृगणस्य परिगणनं विद्यते । रौरवे मातृगणो न परिगणितः । परं तु मातृगण-

स्थचामुण्डायाः परं ग्रहणमिति दीप्तरौरवयोः परिवाराष्टकविषये भेदोऽवगन्तव्यः । अजिते वृष-ब्रह्म-मातृगण-विनायक-स्कन्द-ज्येष्ठानां तथा दुर्गाविष्ण्वोरन्यतरो रविश्चेति परिवाराष्टककथनं दृश्यते । कारणे वृषभागस्त्य-दुर्गा-विनायक-ब्रह्म-षण्मुख-विष्णु-रवीनां परिवाराष्टकेषु गणनमिति व्यत्यासोऽधिगन्तव्यः । एवं योगजे वृषभ-दुर्गा-मातृगण-विनायक-स्कन्द-ज्येष्ठा-विष्णु-चण्डेशानां परिगणनमिति विशेषो दृश्यते । एवं वीरे योगजप्रोक्तेषु चण्डेशं विनान्येषां गणनं चण्डेशस्थाने भास्करस्योक्तिरिति च भेदो ज्ञातव्यः । अत्र पटले वृषभ-त्रिशूल-महापीठानां त्रयाणां लक्षणं प्रतिपादितम् । सर्वेषां च स्थापनप्रकारोऽतीव संक्षेपेण बोधितः । इति त्रयस्त्रिंशपटलविषयसंग्रहः ।

चतुस्त्रिंशे पटले सोमेशस्थापनं प्रोच्यते । गर्भगेहे लिङ्गस्य पश्चाद्भागे भद्रपीठे सोमेशः स्थापनीय इति कथनमागमान्तरेषु प्रायेण न दृश्यते । इदानीं दृश्यमानेषु पल्लवकालीन-देवालयेषु कुत्रचिल्लिङ्गपश्चाद्भागे भित्तौ सोमास्कन्दबिम्बमुपलभ्यते । न सोमेशबिम्बम् । तस्मान्मतान्तरमिदमिति भाति । अत्र विमर्शनीयोऽयमंशः । यदत्र पटले त्रयोदशतमश्लोकानन्तरं लेखकेन श्लोकार्धोपक्षेपः कृतः यत्रोच्यते उमेशयोर्मध्ये स्कन्दोऽपि स्यादिति । श्लोकार्धमिदं मतान्तरदर्शनेन वा पल्लवकालीनदेवालय-दर्शनेन वाकृष्टेन लेखकेन कृतमिति भाति । अन्यथा सोमेशलक्षणप्रतिपादकेऽत्र पटले का वा प्रसक्तिः स्कन्दस्य । सोमास्कन्दलक्षणमुत्तरत्र पञ्चत्रिंशे पटले सम्यक्प्रतिपाद्यते । सोमेश्वरलक्षणमत्र पटले वर्णितम् । अस्मिन्पटले शूल-रज्जुबन्ध-कल्कबन्ध-पटाच्छादन-वर्णलेपनानि पश्चाद्वक्ष्यन्ते इति भणितम् परं तु परत्र नोदितानि । सोमेश्वरस्थापनक्रियाकलापो सम्यग्वर्णितः । अत्र बिम्बस्य वर्णलेपनमार्गेण कर्तव्यतोक्ता । तदनुसारेण जलाधिवासादिकर्माणि दर्पणे करणीयतया विहितानि । प्रतिमालक्षणोक्त-प्रकारेण परमेश्वरः करणीय इत्युच्यते । समनन्तरपटले सुखासनमूर्तेर्विषये सर्वं लक्षणं विस्तरेण प्रतिपा-दितमस्ति । उमेशमूर्त्योः अजिते आसीने स्थिते च प्रकारद्वयं प्रतिपादितम् । रौरवे आसीनप्रकार एव वर्णित इति चतुस्त्रिंशपटलार्थसंक्षेपः ।

पञ्चत्रिंशे प्रतिमालक्षणं वर्ण्यते । अत्र चतुर्दशप्रतिमानां प्रतिज्ञा विद्यते । परं तु नामनिर्देशो विग्रहाष्टकस्यैव विद्यते । ते च सुखासन-सोमेश-सोमास्कन्द-वृषारूढ-त्रिपुरारि-चन्द्रशेखर-कालहारि-कल्याणसुन्दरा इति अष्टावेव नाम्ना निर्दिष्टाः । लक्षणकथने नृत्तमूर्ति-भिक्षाटन-कङ्काल-देव्यर्ध-दक्षिणामूर्तीनां नाम दृश्यते । एवं च त्रयोदश विग्रहा एवाभिहिताः । एकः प्रणष्टः । स च क इति ज्ञातुं न शक्यते । सुप्रभेदे द्वादश प्रतिमाः, दीप्ते षोडश, अंशुमत्काश्यपे कारणे चाष्टादश, अजिते विंशति-रिति प्रत्यागमं भेदो दृश्यते । कामिके त्रयोविंशतिप्रतिमाः परिगणिताः । पञ्चविंशतिरूपाणां लक्षणं दृश्यते । वातुलशुद्धाख्ये पञ्चविंशतिरूपाणां गणनमस्ति । सुप्रभेदागमे (1, 34, 72-75a) रौरवे दृष्टाः सोमस्कन्द-कल्याण-कङ्काल-दक्षिणामूर्तयो न विद्यन्ते । परं हर्यर्ध-कामरि-लिङ्गोद्भवाख्यमूर्ति-

त्रयमधिकं वर्तते । दीप्तागमे (16, 117b-121) सोमास्कन्द-कङ्कालौ न स्तः। सदाशिव-चण्डेश्वरप्रसाद-कामारि-हर्यर्ध-लिङ्गोद्भवाख्याः पञ्च मूर्तयोऽधिका दृश्यन्ते । कारणागमे (I, 11, 150b-155a) सोमास्कन्दमूर्तिर्नास्ति । गङ्गाधर-चण्डेशानुग्रह-मुखलिङ्ग-कामारि-हर्यर्ध-लिङ्गोद्भ-वाख्यषण्मूर्तयोऽधिकाः । अंशुमत्काश्यपे (55, 17b-22a) रौरवोक्तसोमेशमूर्तिर्नास्ति । गङ्गाधर-गजारि-पाशुपत-हर्यध-चण्डेश्वरप्रसाद-लिङ्गोद्भवाख्याः षडधिकाः । अजितागमे (36, 175-181) चक्रप्रसाद-कामारि-हर्यर्ध-त्रिमूर्ति-लिङ्गोद्भव-जलंधरवध-विषसंहरणाख्यमूर्तिसप्तकमधिकम् । कामिकागमे चक्रप्रसाद-कामारि-हर्यर्ध-त्रिमूर्ति-लिङ्गोद्भव-सदाशिव-बलिभर्तृ-शरभेश-चण्डेशानुग्रह-नन्दीशानुग्रह-भक्तानुग्रह-गङ्गाधराख्यमूर्तिद्वादशकमधिकम् । वातुलशुद्धाख्ये (1, 126b-134) कामारि-जलंधरवध-गजारि-वीरभद्र-हर्यर्ध-किरात-चण्डेशानुग्रह-विषापहरण-चक्रदान-विघ्नप्रसाद-एकपाद-लिङ्गोद्भवाख्यमूर्तिद्वादशकम-धिकम् ।

प्रतिमालक्षणेऽस्मिन्प्रतिमानां गर्भगेहतो लिङ्गवशाद्द्वारतश्च त्रिधा मानभेदो न्यरूपि । जात्यंशयोजन-प्रकारः, आयादिविधिश्च दर्शितः । आयादिविधिकथने व्यय-योनि-नक्षत्र-वारशुद्धिप्रतिपादको ग्रन्थो नष्टः । उत्तमदशतालमनुसृत्य सुखासनमूर्तिलक्षणं प्रत्यवयवं सम्यग्वर्णितम् । अंशुमत्काश्यपोक्तसूत्रपातक्रमस्य रौरवोक्तसूत्रपातक्रमस्य च प्रमाणविषये भेदो वर्तते ।

**वृषारूढविग्रहे** आभङ्गसमभङ्गातिभङ्गेष्वन्यतमप्रकारेण कार्यमिति विकल्पो गदितः । अंशुमत्काश्यपे समभङ्गातिभङ्गयोरन्यतरप्रकारतया कल्पनीयमिति भणितम् । चतुर्भुजो द्विभुजो वा देवः कल्पनीय इत्यप्यभिहितम् । एवमजिते उत्तरकारणे च दृश्यते । **त्रिपुरारिमूर्तेर**पि भङ्गत्रयेष्वन्यतमेन प्रकारेण प्रतिमा कार्येत्युक्तम् । अस्मिन्विषये भङ्गत्रयस्यापि लक्षणमुपवर्णितम् । रौरवे त्रिपुरारिश्चतुर्भुजोपेततया एकप्रकार एव वर्णितः । एवमेव कारणसुप्रभेदयोरपि वर्तते । अजिते कामिके च चतुर्भुजो द्विभुजो वा कार्य इति विकल्पोऽभिधीयते । **चन्द्रशेखरे** केवल-गौरीसहितालिङ्गमिति भेदत्रयं रौरवे विद्यते । एवमंशुमत्काश्यप-कामिकयोरपि दृश्यते । कारण-सन्तानसंहिता-सुप्रभेदेषु केवलस्यैव कथनं, तथाजिते गौरीसहितस्यैकस्यैवेति भेदोऽवगन्तव्यः । **कालहारिमूर्तौ** अंशुमत्काश्यपे रौरवे च चतुर्भुजाष्टभुजभेदेन द्वैविध्यं दृश्यते । अजिते दीप्ते च देवीसहितस्य चतुर्भुजस्यैकस्यैव वर्णनं, तथा देवीरहितस्य चतुर्भुजस्यैकस्यैव कथनं कामिककारणसुप्र-भेदेष्विति विशेषो ज्ञेयः। **नृत्तमूर्तौ** अंशुमत्काश्यपे नवधा नृत्तमूर्तिभेदवर्णनं विद्यते । अजिते भुजङ्गत्रास-संध्या-नृत्त-दण्डपादनृत्तमिति भेदत्रयं वर्ण्यते । रौरवे तु भुजङ्गत्रासनृत्तम् उद्दण्डनृत्तम् अत्युद्दण्डनृत्तमिति मूर्तित्रय-मिति विशेषोऽधिगन्तव्यः । कामिके भुजङ्गत्रास-भुजङ्गललितमिति मूर्तिद्वयमेव दृश्यते । तथा कारणे भुजङ्गत्रासमित्येकमेव कथितम् । भुजङ्गत्रासविषये देवस्य वामे गौरी कल्पनीयेति परं कारणाजितयो-

दृश्यते । रौरवे तु गौरी-दुर्गयोरुभयोरपि स्थितिरुच्यते । कामिके तु गौरी यथाविधि वामे कल्पनीया । अथवा भृङ्गिरिटिर्भद्रकालो वा कल्पनीयेति विकल्प उच्यते । उद्दण्डनृत्ते भुजाष्टकमुक्तम् । अत्र स्कन्दयुक्तगौर्याः परं स्थितिरुक्ता । चर्ममुण्डायाः कथनं नास्ति । अत्युद्दण्डनृत्ते षोडशभुजाः प्रोक्ताः । अत्र स्कन्दयुक्तगौर्याश्चर्ममुण्डायाश्च वामे दक्षिणे च स्थितिरुच्यते । अजिते परं विंशतिहस्तयुक्तनृत्तरूपं दण्डपादनृत्तमिति वर्तते । **भिक्षाटनमूर्तौ** अजितेंऽशुमत्काश्यपे, कारणे, कामिके, दीप्ते, सुप्रभेदे च चतुर्भुज एक एवोक्तः । रौरवे परं चतुर्भुजो द्विभुजो वा कल्पनीय इति विकल्पो दृश्यते । **अर्धनारीश्वरे** चतुर्बाहुर्द्विबाहुरिति द्विविधत्वकथनमंशुमत्काश्यपे रौरवे च वर्तते । अन्यत्रैवं प्रकारद्वयकथनं नोपलभ्यते । अंशुमत्काश्यपे, सुप्रभेदे, रौरवे चार्धनारीश्वरमूर्तौ वृषस्य निवेशः प्रोच्यते । अजिते वृषयुक्तो वा वृषहीनो वेति विकल्पो वर्ण्यते । कारणदीप्तयोर्वृषस्योक्तिर्न विद्यते । एवं कामिकेऽपि वृषो नोक्तः । **दक्षिणामूर्तौ** रौरवे योगमूर्तिर्वर्णिता । कामिके व्याख्यायुग्, गेयी, योगी चेति त्रिधा दक्षिणामूर्तिभेदो वर्ण्यते । तथा कारणे व्याख्यान-गेयमूर्तिद्वयमुच्यते । अंशुमत्काश्यपे तु व्याख्यान-ज्ञान-वीणाधर-योगमूर्तीनां चतुर्णां प्रतिपादनमिति विशेषो ज्ञेयः । अजिते दक्षिणपादस्य लम्बनं वामपादस्य लम्बनमिति पादव्यत्यासेन भेदद्वयमुपपादितम् ।

एवमत्र पटले प्रतिमानां लक्षणमुक्त्वा सर्वासां स्थापनप्रकारश्च वर्णितः । तत्र रत्नन्यासनेत्रोन्मीलनयोः कर्मणोरुक्तिर्वर्तते । तदनन्तरं कर्तव्यस्य क्रियाभागस्य प्रतिपादको भागो मातृकासु प्रणष्टः । कुम्भाभिषेकप्रतिपादकभागः परमुपलभ्यते ।

षट्त्रिंशे विष्णुस्थापनं वर्ण्यते । अत्र ग्रामादिषु विष्ण्वालय-योग्यस्थानं, विष्णुमूर्तिलक्षणं, प्रतिमामानं, प्रतिमाकरणद्रव्यकथनं च प्रदर्शितानि । ततः स्थापनप्रकारः कथ्यते । तत्र प्रथमं विष्णुमन्त्रवर्णनं ततो रत्नन्यासादिकुम्भाभिषेकान्तः क्रियाकलापश्च प्रोच्यते । विष्णोः परिवाराश्च निर्दिष्टाः ।

सप्तत्रिंशे मोहिनीस्थापनम् । अत्र प्रथमतो मोहिन्युत्पत्तिकथनं ततस्तन्मन्त्रवर्णनं, ग्रामादिषु मोहिनीस्थापनयोग्यस्थाननिरूपणं, प्रतिमामानं, प्रतिमाकरणयोग्यद्रव्यकथनं च प्रदर्शितानि । मोहिनीलक्षणं तस्या दक्षिणभागे स्थापनीय-देवलक्षणं च प्रत्यपादि । देवस्य सोमेश्वरवदाकृतिर्द्विभुजत्वं चतुर्भुजत्वं वा भवितव्यति वर्ण्यते । देवरहितापि केवला मोहिन्यपि स्थापनीयेत्यपि चोक्तम् । केवलमोहिनीस्थापनप्रकार एवात्र निरूप्यते । गर्भगृहद्वारे बाह्यद्वारे च पार्श्वयोः स्थापनीया द्वारपालिकाः सलक्षणं प्रतिपादिताः । तत्र षोडशपरिवारदेवतानां नामानि चोपवर्णितानि । ततो यागमण्डपप्रकारो रत्नन्यासादिकुम्भाभिषेकान्तः क्रियाकलापश्च संग्रहेण न्यरूपि । अत्र होमे कुम्भाभिषेकानन्तरनिवेदने च अजमांसस्य कथनं रौरवकारणयोर्विद्यते । सूक्ष्मागमे होमे मांसस्य स्थाने गोधूमो विहितः । निवेदनविषये तत्स्थाने धूपदानं विहितमस्ति । प्रतिष्ठानन्तरं विशेषतो नवाहं सप्ताहं पञ्चाहं वा उत्सवः करणीय इति

तदुत्सवप्रकारश्च वर्ण्यते। तत्र मोहिन्यायुधानि पञ्च, तथा संधिदेवताश्च विशिष्य प्रदर्शिताः। उत्सवे बलिविधावपि बस्तरुधिरमांसयोर्विधानं दृश्यते।

अष्टत्रिंशे पटले नागराजस्थापनम्। अत्र प्रथमं नागराजमन्त्रवर्णनं ततो विशिष्य प्रतिमालक्षणप्रतिपादनं च विद्यते। तत्र पञ्चफणावृतपञ्चमूर्धादिसहितनागराजप्रतिमालक्षणं, ततो पादद्वययुक्तमभयवरदसहितभुजद्वययुक्तं नागपञ्चफणशिरस्कं प्रतिमान्तरमपि भण्यते। रत्नन्यासादिकुम्भाभिषेकान्तः क्रियाभागश्च प्रादर्शि।

एकोनचत्वारिंशे प्रासादलक्षणम्। पटलेऽस्मिन् प्रथमतलादारभ्य षोडशतलान्तानां विविधानां प्रासादानां तुङ्गविस्तारादिमाननिरूपणादि, तथा षट्त्रिंशत्प्रकाराणां प्रासादानां प्रकारः, तत्र प्रथम-द्वितीय-तृतीय-तुरीयसप्तकानां क्षुद्र-आभास-विकल्प-छन्दा इत्याख्या, अवशिष्टानामष्टानां सदनानां जातिरित्याख्या च बोध्यते। तथा अधिष्ठान-पाद-प्रस्तर-कण्ठ-शिखा-स्तूपीनां मानव्यत्यासेन शान्तिक-पौष्टिक-जयद-अद्भुत-सार्वकामिकमित्यभिधानमित्यादि संक्षेपेण प्रतिपाद्यते। प्रासादालंकाराणां गृहपिण्ड्यादीनां नामानि परं निगद्यन्ते। न लक्षणं प्रोक्तम्। तेषां स्थानानि प्रतिपादितानि। गर्भगृहवर्णनं, प्रतितलं षड्वर्गनिरूपणं चातीव संक्षेपेण प्रादर्शि। आगमान्तरेषु नागरवेसरद्राविडानां त्रयाणां विमानानां निरूपणं विद्यते। रौरवे द्राविडविमानलक्षणं न दृश्यते। अधिष्ठाने प्रतिबन्धपादबन्धद्वयमेव नामतो निर्दिष्टम्। तथा स्तम्भविषये ब्रह्मकान्त-विष्णुकान्त-रुद्रकान्ताख्यानां त्रयाणामेव नामतो लक्षणं विना निर्देशो वर्तते। आगमान्तरेषु विषयोऽयं बहुधा निरूप्यते। अजिते १३, १४ पटलयोः टिप्पण्यामयं विषयो न्यदर्शि। प्रस्तरोपरि वृषाणां भूतानां च कल्पनप्रकारो, विमाने दिशामूर्तिकल्पने हर्म्यमुखे स्कन्दस्य विनायकस्य वा कल्पनं कार्यमिति रौरवे वर्ण्यते। अंशुमत्काश्यपे मण्डपे दक्षिणे पार्श्वे विनायककल्पनमिति, मण्डपपार्श्वे तथा कल्पनमिति च सामान्येन दोससुप्रभेदयोर्दृश्यते।

चत्वारिंशे मण्टपलक्षणम्। मुखमण्टपसमाश्रमण्टपायताश्रमण्टपानां कल्पनप्रकारो न्यरूपि। मण्टपेषु कल्पनीयस्यान्तरालाख्यस्य विशिष्य कथनं विद्यते।

एकचत्वारिंशे अन्तर्मण्डल-अन्तर्हार-मध्यहार-मर्यादा-महामर्यादाख्यानां पञ्चविधानां प्राकाराणां प्रासादमानेन हस्तमानेन च कल्पनारीतिः प्रकाशिता। भित्तिकल्पनप्रकारः मालिकाकल्पनप्रकारश्च वर्णितः। तत्र छत्राभं बुद्बुदाकारम्, अर्धचन्द्राकृति च शिरः कर्तव्यमिति प्रोच्यते। तदुपरि वृषा वा भूता वा ओजस्संख्यया कल्पनीय इति च प्रादर्शि।

द्विचत्वारिंशे पटले गोपुरविधानम्। पञ्चसु सालेषु गोपुरकल्पने मानं निरूपितम्। प्रासादवदनेकभूम्यादयः करणीया इति भृशं संक्षेपतो लक्षणकथनं विद्यते। गोपुरालंकारतया शालाकारं, हर्म्याकारं, लुपारोहशिरः, सहारकमण्टपाकारं, छत्राकारं वा शिरः कार्यमिति वर्णितम्।

त्रिचत्वारिंशे प्रतिमासु योजयितव्यानां भूषणानां विधिरुच्यते । तत्र मकुटलक्षणं तथा स्वर्ण-पुष्प-गोलका-पट्ट-कर्णकुण्डल-चन्द्रखण्ड-गङ्गानां च लक्षणं प्रतिपादितम् । एवं प्रतिमायोग्यानामुत्तरीयहार-यज्ञोपवीतानां च लक्षणं दर्शितम् । ततः प्रभाया लक्षणं विशिष्य वर्णितम् । एतेषां भूषणादीनां प्रतिमासु योजने कर्तव्यः शुद्धिप्रकारः शान्तिहोमः, देवानां तदा कर्तव्यं स्नपनं च वर्ण्यन्ते ।

चतुश्चत्वारिंशे लिङ्गप्रतिमाप्रासादानां तदङ्गानां च पतनादिसंभवे, जीर्णोद्धारणे, चण्डला-दिस्पर्शदोषे, पूजादीनां वैकल्यसंभवे, उत्सवविषये संजातवैकल्यादौ च कर्तव्यप्रायश्चित्तविधिर्वर्णितः । उत्पातविषये कर्तव्यं प्रायश्चित्तं चाभिहितम् ।

पञ्चचत्वारिंशे पटले पवित्रारोपणविधिः प्रतिपाद्यते । अयं पञ्चविंशे पटलेऽपि विद्यते । एवं पटलद्वयमस्मिन्विषयेऽशुमदागमेऽपि दृश्यते । पटलद्वयोदाहृतश्लोका अपि "तदुक्तं रौरवे" इति निबन्धेषूदाहृता दृश्यन्ते । विषयमेकमधिकृत्य कुतो वा पटलद्वयमित्यत्र समीचीनकारणमभ्यूहितुं नास्ति काचन सूची । विषयोऽयं पञ्चविंशे पटले टिप्पण्यां विमर्शितः ।

अत्र पवित्रारोपणकालः प्रथमं निरूप्यते । कुण्डवेदीसहितयागमण्डपकल्पनं तदलंकारश्च प्रोक्तः । ततोऽङ्कुरार्पणविधानं, पवित्रसूत्रादानं, तच्छुद्धिर्गन्धपवित्रकरणप्रकारश्च वर्ण्यन्ते । ततः पवित्राधिवासस्तत्र कर्तव्यहोमविधानं च प्रदर्शितम् । ततो यागधामानलकुण्डादीनामन्यानां देवानां स्रुक्स्रुवाणां, सौरादिगुर्वन्तानां च गन्धापवित्रारोपणप्रकारो देवदेवे गन्धपवित्रारोपणप्रकारश्च न्यदर्शि । पवित्ररक्षादिप्रकारः, पवित्राधिवासानन्तरकर्तव्यक्रियाप्रकारश्च वर्णितः । गङ्गावतारपवित्रारोपणप्रकारादिः, चण्डेशे निर्माल्यपवित्रारोपणप्रकारश्च निरूपितः । अन्ते चाचार्यपूजा प्रोक्ता ।

अत्र शिवाय पवित्रारोपणविषये भुक्तिकामे आत्मतत्त्वाच्छिवान्तमन्त्रः, तथा मुक्तिकामे शिवतत्त्वाद्यात्मतत्त्वान्तमन्त्र इति रौरवे प्रोच्यते । कामिके, अचिन्त्यविश्वसादाख्ये च आत्मतत्त्वाच्छिवान्त-मन्त्रो मुक्तिकामे, शिवतत्त्वाद्यात्मतत्त्वान्तमन्त्रो भुक्तिकामे प्रोक्त इति च विशेषोऽवगन्तव्यः ।

षट्चत्वारिंशे पटलेऽन्त्येष्टिविधानं वर्ण्यते । तत्रादौ जीवात्मनो योगमार्गेण परतत्वे शिवे प्रवेशनमेवान्त्येष्टिशब्दार्थ इति निर्वचनं कृतम् । ततो विपन्नस्य स्नानालंकारादिकरणं, चूर्णोत्सवविधानं च निगद्यते । चूर्णोत्सवो गृहद्वाराग्रतो वा चितास्थाने वा विधातव्य इति चिन्त्यागमे वर्ण्यते । रौरवे तथा विकल्पो न दृश्यते । ततो विपन्नमासन्दिकामारोप्य श्मशानप्रापणविधिरुच्यते । श्मशाने कुण्डवेदीसहितया-गमण्डपविधानं, तत्र कुण्डाग्नेयभागे चिताकल्पनं, तत्र मण्डलकल्पनं च भणितम् । ततस्तिलसर्षपकुशा-दिद्रव्याणां संपादनं, तेषां शुद्धीकरणं वेदिकायामस्त्रवर्धनीपूजनं च विधीयते । तथा चितायां वास्तुपूजाविधानं च निगदितम् । मण्टपे करणीयः शिवपूजाविधिः सप्रपचं न्यरूपि । ततोऽग्निकार्यविधानवर्णनं च

भणितम्। समयिनं विनान्येषामाचार्यसाधकपुत्राणामध्वशुद्धिसहितान्त्येष्टिकथनं विहितम्। अध्वशुद्धिप्रकारो विस्तरेण प्रोक्तः। तत्र शान्तिकलाशोधनकथनभागे मातृकायां ग्रन्थपातो दृश्यते। ततः शिखाच्छेद-विधिरात्मयोजनविधानादिकमुक्तम्। तथा दहनविधिस्तदनन्तरकरणीयवर्धनीताडनादिकं च कर्माभिहितम्। एतावानेव क्रियाभागोऽत्रान्त्येष्टिविधावुच्यते। अस्थिसंचयनादिकमत्र नोपपादितम्॥

अस्मिन्द्वितीये भागे अनुबन्धतया पञ्चसादाख्यविधिः संघटितः। उपलब्धासु मातृकासु पूर्णप्राये मातृकाद्वये षड्विंशपटलानन्तरं पञ्चसादाख्यविधिरिति पटलः कश्चनोपलभ्यते। कुतः कारणादयमत्र प्रक्षिप्त इत्यभ्यूहितुमपि नास्ति सूचना काचित्। रौरवागमीयोऽयं पटलो नेति परं सुष्ठु ज्ञायते। यतो रुरुप्रोक्तत्वादयं रौरवागमः। श्लोकेषु तत्र तत्र रुरुरेव संबोधितः। पटलेऽस्मिन् षण्मुखः संबोधितः। अत्रत्याः श्लोकाः प्रायेण वातुलशुद्धाख्यादुद्धृताः। मूर्तिपरिसंख्यायां च वातुलशुद्धा-ख्यानुसारेण पञ्चविंशतिरूपाणि संख्यातानि। रौरवे चतुर्दशरूपाण्येव संख्यातानीति पूर्वापरविरोधः। पटलान्त्ये "शैवोत्पत्तिविधिं शृणु" इत्यनन्तरपटलसूची दत्ता। रौरवे शैवोत्पत्ति-पटलो न दृश्यते। इत्येतैः कारणैः पटलोऽयं रौरवागमीयो नेति निश्चित्य मातृकाद्वयोपलब्धतया अनुबन्धत्वेन घटितः।

प्रकाशितोऽयमागमो नूनं बृहतो रौरवागमस्य संग्रह इति भाति। यस्मात्सर्वेषु पटलेषु विषया अतीव संग्रहेणैव निरूपिताः। आगमेऽस्मिन्साधारणतया विशिष्टा विषयाः प्रथमभागस्योपोद्घाते दत्ता इति नात्र पुनर्निर्दिष्टाः। आगमन्तरेभ्यो व्यत्यासे तत्र तत्र टिप्पण्यां तादृशव्यत्यासः सूचितः।

उपलब्धासु रौरवागममातृकासु यावन्तो पटला उपलब्धास्ते सर्वेऽधुना भागद्वये प्रकाशिताः। एतासु मातृकास्वनुपलब्धाः केचन पटला निबन्धेषु तत्र तत्र उदाहृता दृश्यन्ते। तादृशांस्तान्संकलय्य तृतीयभागे प्रकाशयिष्यामः।

रौरवागमस्योपागमत्वेन प्रसिद्धस्य रौरवोत्तराख्यस्य ग्रन्थस्य मातृका उपलब्धाः। सोऽयं ग्रन्थोऽचिरादेव प्रकाशयिष्यते।

अन्येष्वस्मत्संपादितपुस्तकेष्विवात्राप्यालेख्यानि दत्तानि। तत्र शिवमूर्तिविषये दत्तेष्वालेख्ये-ष्वेतद्ग्रन्थोक्तमानाद्यनुरोधेन मूर्तेः स्थित्यासीनाद्यवस्थाया हस्तेष्वायुधादिस्थितेश्च प्रदर्शनं मुख्यतयाभिमतम्। आभरणाद्यलंकारसामग्री संप्रदायानुगतमूर्तिशिल्पानुयायिनी। नात्र विषये ग्रन्थस्याधारता।

अस्य ग्रन्थस्य मातृकादानेनोपकृतवद्भ्यो कीळ्वेलूर् अक्षयशिवाचार्य-धर्मपुरस्वामिनाथशिवा-चार्य-कुत्रकुटिसुब्रह्मण्यशिवाचार्यवर्येभ्यस्तथा अडयार्ग्रन्थागार-मद्रपुरीराजकीयप्राच्यकोशागार-महिषूरपुरी-प्राच्य-

कोशागार-वाराणसीसंस्कृतकलाशालासंबन्धिसरस्वतीभवनानामध्यक्षमहाशयेभ्यस्तथा मातृकाप्रतिलिप्यादिकरणेन ग्रन्थस्यास्य प्रकाशने उपकृतवद्भ्यो ब्रह्मश्रीनीलकण्ठशर्म-रामानुजाय्यङ्गार्वर्येभ्यः, आलेख्यपर्यवेक्षणेनोपकृतवद्भ्यो ब्रह्मश्रीनागस्वाम्यार्येभ्यस्तथा आलेख्यप्रतिलिप्यादिकरणेनोपकृतवद्भ्यो सुब्रह्मण्यशर्म-राजगोपालस्थपतिवर्येभ्यश्च हार्दिककृतज्ञतां समर्पयामः ।

परतो मास्तु मतिर्मे
निरता सास्त्वनिशमीश! तव पदयोः ।
पुरतः स्फुर मे सततं
परितः करुणामृतं समावर्षन् ॥




श्री:

# रौरवागमः

## [क्रियापादः]

## [सप्तविंशः पटलः][1]

## [बाललिङ्गस्थापनविधिः][2]

### [बाललिङ्गस्थापने द्वैविध्यम्][3]

अतः परं प्रवक्ष्यामि बालस्थानविधिं परम्[4] । द्विविधं [5]तद्विनिर्दिष्टमाद्यं चैव[6] द्वितीयकम् ॥ १ ॥
आद्यमादौ[7] तु बालस्य[8] [9]स्थापनं मुक्तिहेतुकम् । [10]प्रायश्चितार्थकं यत्तु स्थापितं [11]तद्द्वितीयकम् ॥ २ ॥

### [बालस्थापनस्यावश्यकता][12]

[13]मूलालयं तु निश्चित्य बालस्थानं ततः कुरु । बालस्थानं विना मूलस्थापनं मृत्युहेतुकम् ॥ ३ ॥
आदौ तु [14]तरुणं कल्प्य मूलं पश्चात्प्रकल्पयेत्[15] । भोगमोक्षप्रदं विद्यात्तयोस्त्विष्टं[16] समाचरेत् ॥ ४॥

---

[1] A la suite du *paṭala* 26, et avant le *paṭala* 27, tous les manuscrits utilisés pour cette édition, à l'exception de deux, E et F (manuscrits R No 16840 et R No 11362 déposés à la Madras Government Oriental Manuscripts Library), contiennent deux *paṭala* intitulés *Pañcasādākhyavidhiḥ* et *Piṇḍikāsthāpanam.* Le premier d'entre eux sera publié comme Appendice No 1, et nous donnerons alors en note les raisons de ce rejet. Le second sera placé après le *paṭala* suivant, *Liṅgasthāpanavidhiḥ*. En effet le premier *śloka* de ce *paṭala* contient la déclaration suivante : प्रागुक्तलक्षणोपेतं पीठं कुर्यात्तु शैलजम्. Or la définition de *pīṭha* se trouve dans les *śloka* 71a-80 du *Liṅgasthāpanavidhipaṭala.* Il apparaît donc que le *Piṇḍikāsthāpanavidhipaṭala* doit venir après le *Liṅgasthāpanavidhipaṭala* et non avant.

[2] Pour बाललिङ्गस्थापनविधि voir *Aṃśumadāgama, paṭala* 46, *Kāmika* I 32, *Kāraṇa* I 135, *Cintya, paṭala* 20, *Yogaja, paṭala* 18, *Vīra, paṭala* 90, *Suprabheda* I 26, et *Sūkṣma, paṭala* 58

[3] Cf. *Aṃśumadāgama* 26, 1-4a:
बालस्थानविधिं वक्ष्ये श्रूयतां रविसत्तम । आद्यं द्वितीयमेवं तु द्विविधं तरुणालयम् ॥
आद्यं बालगृहं कल्प्य मूलगेहमतः परम् । मूलबिम्बं प्रतिष्ठाप्य पश्चाद्बालगृहं त्यजेत् ॥
एवमाद्यगृहं प्रोक्तं द्वितीयं चाधुना शृणु । प्रायश्चित्तार्थकं यत्र स्थाप्यते बालबिम्बकम् ॥
द्वितीयमिति विज्ञेयम् ''

cf. *Kāraṇāgma* I 135, 1-5a:

बालस्थानप्रतिष्ठां तु प्रवक्ष्यामि विशेषतः। द्विधा बालालयं प्रोक्तं प्रथमं च द्वितीयकम् ॥
ग्रामे वा नगरे वापि पत्तने राजधानिके। एतेष्वन्येषु देशेषु मूलस्थानस्य यत्पुरा ॥
वास्तुनिर्देशनादन्ते कल्पितं प्रथमं भवेत्। विश्लिष्टे च तथा पीठे लिङ्गे च पतिते तथा ॥
शिल्पिना कारिते हर्म्ये भिन्ने च पतितेऽपि च। यन्नवीकरणार्थं तु कर्तव्यं बालहर्म्यकम् ॥
द्वितीयमिति विख्यातं बालालयं प्रजापते।

cf. *Yogajāgama* 18, 1-5a:

द्विधा बालालयं प्रोक्तं प्रथमं च द्वितीयकम्। ग्रामे वा नगरे वापि पट्टणे राजधानिके ॥
एतेष्वन्येषु देशेषु वास्तु निश्चित्य कालके। देवालयं तु निश्चित्य सद्यो बालालयं कुरु ॥
प्रथमं तरुणाख्यं च द्वितीयं सौम्य वक्ष्यते। विश्लिष्टे च तथा पीठे लिङ्गे तु चलिते तथा ॥
जीर्णोद्धारे तु कर्तव्यं लिङ्गपीठविहीनके। शिल्पिकर्मान्तरे हर्म्ये भिन्ने च पतितेऽपि वा ॥
एतेष्वन्यतमे तेषु द्वितीयं तरुणालयम्।

[4] B (manuscrit de Dharmapuram) विधिक्रमम् pour विधिं परम्

[5] B et F (manuscrit n° 11362 de Madras Government Oriental Manuscripts Library) तत्समुद्दिष्टम्

[6] C (manuscrit de Kunrakkuḍi) omet व dans चैव

[7] A (manuscrit de Kīlvelūr): आद्यौ pour आदौ

[8] C : बाल्यस्य

[9] A et B : स्थापनस्य विशेषत:

[10] C et F omettent le demi-*śloka* 2b.

[11] B : स्याद् pour तद्

[12] Cf. *Kāmikāgama* I 32, 1b-3a:

बाललिङ्गं विना विद्वान्मूलस्थानं न कारयेत्। बाललिङ्गादिहीनं तु मूललिङ्गादिकं न हि ॥
अयं विभागो ग्रामस्य प्रारम्भेऽन्यत्र चान्यथा। बाललिङ्गादिहीनं वा तद्युक्तं वा समाचरेत् ॥

cf. *Kāraṇāgama* I 135, 8-9:

निश्चित्य मूलहर्म्यं तु कारयेत्तरुणालयम्। बाललिङ्गं प्रतिष्ठाप्य मूलं तु स्थापयेत्ततः ॥
बालहर्म्यं विना पूर्वं मूलस्थानं न कारयेत्। विना चेद्बालहर्म्येण पुत्रपौत्रविनाशनम् ॥

cf. *Cintyāgama* 20, 11b-13a:

लिङ्गसंस्थापनात्पूर्वं स्थापयेद्बाललिङ्गकम्। बाललिङ्गं विना कुर्यान्मूललिङ्गं न कारयेत् ॥
अन्यासां देवतानां च हर्म्ये चाङ्गविहीनके। शिल्पिकर्मप्रवृत्ते तु स्थापयेद्बाललिङ्गकम् ॥

cf. *Suprabhedāgama* I 26, 4-6a:

मूलस्थानं विनिश्चित्य बालस्थानं तु कारयेत्। बाललिङ्गं प्रतिष्ठाप्य पश्चान्मूलं प्रतिष्ठयेत् ॥
बालस्थानं विना पूर्वं मूलस्थानं न कारयेत्। बालस्थानं विना यत्र पुत्रपौत्रविनाशनम् ॥
तस्मात्सर्वप्रयत्नेन बालस्थानं तु कारयेत्।

[13] C et F omettent le *śloka* nò 3

[14] A et E : तरणं

[15] A, C, E, F : प्रकल्पितम

[16] A : तयोः स्विष्टं pour तयोस्त्विष्टं

[तरुणालयस्थानं तल्लक्षणं च[1]]

मूलालयाग्रतो वैशे[2] कल्पयेत्तरुणालयम्। [3]त्रिचतुःपञ्चहस्तं वा [4]तरुणालयविस्तृतम्॥ ५॥
[5]समाग्रं तत्समं तत्र [6]त्रिपादं [7]वाग्रमण्डपम्। [8]विस्तारसममुत्सेधं त्रिपादं [9]वार्धमेव वा[10] ॥ ६ ॥
मृदा [11]पक्वेष्टकाभिस्तु कल्पयेदेवमेव तु। उच्चार्धं [12]कुडयतुङ्गः [13]स्यात्तत्समं [14]तु लुपोदयम्॥७॥
तृणाद्यैरूर्ध्वमाच्छाद्य कवाटार्गलसंयुतम्।

---

[1] Cf. *Kāmikāgama* I 32, 3b-8a:
मूलस्थानस्य चैशान्यामुत्तरे पूर्वयाम्ययोः। आग्नेय्यामिष्टदेशे वा कुर्याद्बालगृहं गुरुः॥
नवदण्डं व्यपोह्यैव कुर्याद्धाम महान्तरम्। त्रियुगेन्द्रियषड्ढस्तैः सप्तहस्तेन वा गृहम्॥
यद्वा करद्वयेनैव मूलस्थानं प्रकल्पयेत्। बालस्थानमथार्धेन गर्भगेहात्तथा भवेत्॥
मूलभागविशालेन भित्तिर्द्वित्रिगुणा मता। शेषं तु गर्भगेहस्य मण्डपं वा सभाकृति॥

cf. *Kāraṇāgama* I 135, 10-12:
मूलस्थानाग्रके कुर्यादीशाने वाथ सौम्यके। प्राकारे तु तृतीये वा चतुर्थे पञ्चमेऽपि वा॥
मध्यमे तु प्रकर्तव्यं बालस्थानं क्रमेण तु। त्रिहस्ताभ्यां[धर्ति?]समारभ्य द्वादशाङ्गुलवर्धनात्॥
सार्धसप्तकरान्तं तु बालालयमिति स्मृतम्। तेष्वेकं तु समारभ्य कारयेत्तरुणालयम्॥

cf. *Cintyāgama* 20, 13b-14a:
मूलहर्म्यस्य चैशान्ये पावके याम्यसौम्ययोः। बालबिम्बस्य हर्म्यं तु लक्षणोक्तं तु कारयेत्॥

cf *Vīrāgama* 90, 10-12a:
प्रासादस्यैशदिग्भागे आग्नेय्यां पुरतोऽपि वा। वारुणे वापि कर्तव्यं बालस्थानमिहोच्यते॥
कूटं वा मण्टपं वापि प्रासादं वाथ कारयेत्। त्रिहस्तं पञ्चहस्तं वा सप्तहस्तमथापि वा॥
समं त्रिपादमर्धं वा मुखमण्टपमिष्यते।

cf *Suprabhedāgama* I 26, 6b-7, 13b:
यस्मिन्काले यदा क्षेत्रे कृते भूमिपरिग्रहे। तस्याग्रे चोत्तरे वापि अग्रे वामेऽप्रदक्षिणे॥
ईशाने वा विशेषेण कारयेत्तरुणालयम्। ...सप्तपञ्चत्रिहस्तं वा कर्तव्यं तरुणालयम्॥

cf. *Sūkṣmāgama* 58, 4:
प्रासादपूर्वदिग्भागे दक्षिणे चोत्तरेऽथ वा। ईशाने पावके वाथ बालगेहं प्रकल्पयेत्॥

[2] A, B, E: अग्रतश्चैव pour अग्रतो वैशे [3] B: त्रिश्चतुः
[4] A: तरुणालयमिति स्मृतम्; B: तरुणालयमुच्यते
[5] A: समन्तात्तत्समं; B: तत्समन्तात्समं; C, G: (manuscrit de Vārāṇasi) समग्रं तत्समं
[6] B: त्रिपदं [7] B: च pour वा [8] A: विस्तारं सममुत्सेधं [9] C, F, G: वा स एव वा
[10] A: च pour वा [11] B: पक्वेष्टकायां तु; C, F, G: पक्वेष्टकाभ्यां तु
[12] A, B: तुङ्गकुण्डं pour कुडयतुङ्गः [13] B: तु pour स्यात्
[14] A: तुल्यपोदयम्; B: कल्पयोदयम

[बाललिङ्गम्[1]]

सप्ताङ्गुलं समारभ्य द्विद्व्यङ्गुलविवर्धनात् ॥ ८ ॥
त्रयोविंशतिमात्रान्तं लिङ्गोच्चं नवधा भवेत् । आयामसदृशं नाहं [2]सुवृत्तं छत्रशीर्षकम् ॥ ९ ॥
याज्ञिकैस्तरुभिर्वाथ[3] शिलाभिर्वाथ कारयेत् । [4]तन्नाहसदृशं [5]पीठं व्यासं चैवोच्छ्रयं समम ॥ १० ॥
[6]पीठोच्चदीर्घभागं वा[7] [8]भूमिनिम्नं तु मध्यतः । [9]लिङ्गव्याससमव्यासं दारुजं सौधजं तु वा ॥ ११ ॥
[10]किञ्चिन्नालसमायुक्तं छादितं तु [11]दलादिभिः ।

[मण्डपः[12]]

चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् ॥ १२ ॥

---

1 Cf. *Kāraṇāgama* I 135, 13-18 :
शिलादारुमृण्मयं वा लिङ्गं बालगृहस्य तु । अश्वत्थोदुम्बरप्लक्षैः शमीवृक्षैश्च खादिरैः ॥
मधुकेनाथ वा कुर्याद्बाललिङ्गं सलक्षणम् । विकाराङ्गुलिमायाममधमाधममुच्यते ॥
अङ्गुलाङ्गुलवृद्ध्या तु रन्ध्रलिङ्गानि कल्पयेत् । लिङ्गोदयं तु नाहं स्यात्सर्ववृत्तमिहोच्यते ॥
शिरसो वर्तनं कुर्याच्छत्राकारं विशेषतः । सतुर्यश्राब्जवृत्तं मा त्रिधा पीठाकृतिः स्मृता ॥
लिङ्गनाहं तु विस्तारमुत्सेधं स्यात्तदर्धकम् । इष्टकाभिः सुपक्वाभिः पीठं कुर्यात्तु तद्द्वयोः ॥
रत्नन्यासं प्रकर्तव्यं पादशैलादिवर्जितम् । ब्रह्मसूत्रं विना कुर्याद्देवस्य प्रथमस्य तु ॥
cf. *Virāgama* 93, 3b-9:
शैलजं दारुजं वापि बाललिङ्गं करोत्विह । द्वारोच्चं नवधा भज्य एकैकं प्रतिमोच्छ्रयम् ॥
पूजांशोच्चं न वा कुर्याद्विष्णुभागान्विते तु वा । तालमानं प्रवक्ष्यामि चतुस्तालं तु चोत्तमम् ॥
त्रितालं मध्यमं प्रोक्तमधमं तु द्वितालकम् । एवमेव प्रकारेण बाललिङ्गं तु कारयेत् ॥
तेन मानेन कर्तव्यं लिङ्गस्य भागमुत्तमम् । लिङ्गतारत्रिभागस्तु पीठविस्तार उच्यते ॥
अधमो ब्रह्मभागः स्यान्मध्यमो विष्णुरुच्यते । ऊर्ध्वे तु शिवभागः स्याच्छत्राकारः शिरो भवेत् ।
लिङ्गसूत्रं तु कर्तव्यं नालं चैव तु कल्पयेत् । अश्वत्थोदुम्बरं वापि बिल्वं चैव शमी तथा ॥
बाललिङ्गं प्रकर्तव्यमेवमेव क्रमेण तु ।

2 A, B, E : सुवृत्तं च त्रिशीर्षकम्  3 C : भूरुहैः pour तरुभिः  4 C : तन्नाक pour तन्नाह

5 A : पीठव्यासं ; C : व्याससमं ; F : व्यासं चैवाच्छायसमं भवेत्  6 A : पीठोच्चे pour पीठोच्च

7 B : दीर्घभागं स्याद् ; K, G: दीर्घभांशं वा pour दीर्घभागं वा ; F : दीर्घभागांशं

8 B : भूमिनिम्नान्तमध्यत ; F : भूमिनाम्नान्तमध्यतः  9 C, F, G : लिङ्गं व्याससमं व्यासं

10 E : कश्चिन्नाल pour किञ्चिन्नाल  11 A : तलादिभिः; E : जलादिभिः

12 Cf. *Kāraṇāgama* I 135, 21-26a :
बालालयाग्रे कर्तव्यं मण्टपं चतुरश्रकम् । विकारस्तम्भसंयुक्तं भानुस्तम्भयुतं तु वा ॥
पङ्क्तित्रयसमायुक्तं चतुर्द्वारं सतोरणम् । दर्भमालासमायुक्तं वितानध्वजसंयुतम् ॥

दर्भमालासमायुक्तं वितानध्वजभूषितम्। मण्डपं तु त्रिधा भज्य मध्ये [1]वेदिविशालकम्॥ १३॥
[2]तत्त्रिभागैकभागं तु तुङ्गं दर्पणसन्निभम्। [3]वेदाग्निविस्तृतोच्चं[4] तु मात्रं स्यादुपवेदिका॥ १४॥
[5]तुर्यांश्रं तु धनुर्वृत्तं[6] त्रिकोणं पद्ममेव वा[7]। [8]इन्द्राद्यैशानपर्यन्तमग्निकुण्डानि कल्पयेत्[9]॥ १५॥

---

मध्यांशे वेदिकां कुर्यात्तच्चतुर्थांशकोन्नताम्। वेदिकायाश्च परितश्चोपवेदिं प्रकल्पयेत्॥
वस्वङ्गुलं तु विस्तारमुत्सेधं चतुरङ्गुलम्। तस्याश्च परितश्चाष्टदिक्षु कुण्डानि कल्पयेत्॥
दिशासु चतुरश्राणि कोणेष्वब्जानि कल्पयेत्। ईशानशक्रयोर्मध्ये प्रधानं वृत्तकुण्डकम्॥
मण्टपस्योत्तरे पार्श्वे स्नानश्वभ्रं प्रकल्पयेत्।

cf *Virāgama* 90, 12b-13:

बालस्थानस्य चाग्रे तु प्रपां कृत्वा तु पूर्ववत्। मध्यमे वेदिकां कुर्यात्परितः कुण्डमुच्यते॥
वृत्तं वा चतुरश्रं वा अष्टकुण्डानि कारयेत्।

cf. *Sūkṣmāgama* 58, 14-17a:

बालधामाग्रके कुर्यान्मण्डपं चतुरश्रकम्। षोडशस्तम्भसंयुक्तं चतुर्द्वारसमन्वितम्॥
चतुस्तोरणसंयुक्तं दर्भमालाभिरावृतम्। मण्डपं पञ्चधा भज्य मध्यभागेन वेदिकाम्॥
अरत्निमात्रमुत्सेधं दर्पणोदरसंनिभम्। उपवेदीं ततः कृत्वा चतुरङ्गुलतः समाम्॥
नवपञ्चैककुण्डं वा स्थण्डिले वापि होमयेत्।

[1] B : वेदी pour वेदि

[2] C : तं त्रिभागं तु . . तुङ्ग० ; E : तत्रिभागं तु . . . तुङ्गं ; F : तत्त्रिभागं तु तुङ्गोच्च मध्यं

[3] C, G : वेदाग्नि pour वेदाग्नि [4] C, G : ऊर्ध्वं pour उच्चं ; F : ऊर्ध्वं

[5] A : तुर्याग्रं ; B : तुर्याग्निं [6] A, B : धनुर्मूर्ति [7] A, B : च pour वा [8] A : इन्द्रादैशान०

[9] Les vers qui donnent la définition du *jalādhivāsa* manquent dans les manuscrits. Nous donnons ici en note des passages correspondants d'autres āgama.

cf. *Kāmikāgama* I 32, 31-35 :

पश्चाच्छिल्पिनमुद्वास्य पुण्याहं वाचयेत्ततः। जलमध्ये प्रपां कुर्यात्सर्वलक्षणसंयुताम्॥
प्रक्षाल्य पञ्चगव्येन लिङ्गं चास्त्रेण देशिकः। शुद्धतोयेन गन्धाद्यैः संस्नाप्य च हृदार्चयेत्॥
वस्त्रयुग्मेन संवेष्ट्य लम्बककूर्चसमन्वितम्। जले तु शाययेल्लिङ्गं सद्येनैव कुशोपरि॥
त्रिरात्रं द्व्येकरात्रं वा वेदयामावसानकम्। प्रभूतपञ्चगव्येन स्नपनं वा समाचरेत्॥
परितः कलशानष्टौ लोकपालाधिदैवतान्। सवस्त्रान्सहिरण्यांश्च ससूत्रान्सापिधानकान्॥

cf *Kāraṇāgama* I 135, 26b-30a :

ततः शिल्पिनमुद्वास्य पुण्याहं तत्र कारयेत्। जलमध्ये प्रपां कुर्यात्सर्वालंकारसंयुताम्॥
प्रक्षाल्य पञ्चगव्यैश्च लिङ्गं चास्त्रेण देशिकः। शुद्धतोयेन संस्नाप्य गन्धादिभिर्हृदार्चयेत्॥
वेष्टयेद्वस्त्रयुग्मेन लम्बकूर्चसमायुतम्। जलेषु शाययेल्लिङ्गं सद्येनैव कुशोपरि॥
त्रिरात्रं चैकरात्रं वा वेदयाममथापि वा। जलाधिवासनं कुर्यात्कण्ठमात्रजलेषु च॥

cf *Suprabhedāgama* I 26, 24b-25a, 28b:

पीठस्य मध्यमे न्यस्त्वा कण्ठमात्रे जले तथा। त्रिरात्रमेकरात्रं वा जले चैवाधिवास्य च॥
उषितं लिङ्गम्"

## [शयनाधिवासः, कुम्भस्थापनं च[1]]

पर्यग्निकरणं कृत्वा पुण्याहं कारयेत्ततः। स्थण्डिलं शालिभिः कृत्वा [2]तण्डुलैः समलंकृतम्॥ १६॥

---

cf. *Sūkṣmāgama* 58, 20b-21 :
बालबिम्बं समादाय जले चैवाधिवासयेत्। पञ्चरात्रं त्रिरात्रं वा एकरात्रमथापि वा॥
यामं वा चार्धयामं वा जले स्नानमथापि वा।

[1] Cf. *Kāmikāgama* I 32, 36-51:
ब्राह्मणान्भोजयेत्तत्र मण्डपे समलंकृते। वास्तुहोमं ततः कुर्यात्प्रासादे मण्डपेऽपि वा॥
पर्यग्निकरणं कृत्वा वास्तुहोमस्थवह्निना। जलादानीय लिङ्गं तु स्थानश्वभ्रोपरि न्यसेत्॥
वस्त्रं विसृज्य लिङ्गे तु पूर्ववच्छुद्धिमाचरेत्। कौतुकं बन्धयेद्धीमान्हृदयेन तु मन्त्रतः॥
वस्त्रेण वेष्टयेल्लिङ्गं वामदेवेन देशिकः। शालिभिर्वेदिकामध्ये अष्टद्रोणार्धनिर्मितैः॥
तण्डुलैश्च तिलैर्दर्भैः पुष्पैश्च सुपरिस्तरेत्। शयनं कल्पयेन्मध्ये चर्मजाद्यैरनुक्रमात्॥
सर्वातोद्यसमायुक्तं स्तोत्रमङ्गलवाचकैः। सर्वलक्षणसंयुक्तस्त्वादिशैवः सशिष्यकः॥
दिव्यगन्धानुलिप्ताङ्गः पुष्पमालाविभूषितः। शुक्लवस्त्रश्च सोष्णीषः शुक्लवस्त्रोत्तरीयकः॥
पञ्चाङ्गभूषणोपेतः सकलीकृतविग्रहः। ईदृशैर्लक्षणैर्युक्तस्त्वाचार्यश्चोत्तराननः॥
वेद्यूर्ध्वे शाययेल्लिङ्गं प्राक्शिरस्कमधोमुखम्। अभ्यर्च्य हृदयेनैव गन्धाद्यैरुपचारकैः॥
द्रोणाम्बुपूरितं सूत्रवेष्टितं कूर्चसंयुतम्। पञ्चरत्नसमायुक्तं सापिधानं सवस्त्रकम्॥
शिवकुम्भं न्यसेत्तस्य मूर्ध्निदेशे तु वर्मणा। वर्धनीं वामतः स्थाप्य सूत्रकादिभिरन्विताम्॥
शिवमन्त्रं न्यसेद्ध्यात्वा देवदेवं सदाशिवम्। अष्टत्रिंशत्कलोपेतं पूजयेन्मूलमन्त्रतः॥
पूजयेत्तु स्वमन्त्रेण वर्धनीं तु मनोन्मनीम्। मुकुलीं पद्ममुद्रां च लिङ्गमुद्रां प्रदर्शयेत्॥
अभितस्तु घटानष्टौ द्रोणार्धोदकपूरितान्। सूत्रादिभिः समोपेतान्हेमटङ्कसमायुतान्॥
इन्द्रादिषु क्रमेणैव स्थापयेद्देशिकोत्तमः। अनन्तादिशिखण्ड्यन्तान्स्वस्वमन्त्रैर्घटेषु च॥
विन्यस्य गन्धपुष्पाद्यैर्नैवेद्यान्तं हृदार्चयेत्। परिवारघटानष्टौ चोपवेद्युपरि न्यसेत्॥

cf. *Sūkṣmāgama* 58, 17b-25a :
गोमयालेपनं तत्र भूसुरान्भोजयेत्ततः। वास्तुहोमं ततः कृत्वा पर्यग्निकरणं नयेत्॥
पुण्याहप्रोक्षणं कुर्यान्मण्डपं संप्रपूजयेत्। वेद्यूर्ध्वे स्थण्डिलं कृत्वा चाष्टद्रोणैश्च शालिभिः॥
तदर्धैस्तण्डुलैर्भूष्य तदर्धैश्च तिलैरपि। लाजैः पुष्पैः परिस्तीर्य शयनं संप्रकल्पयेत्॥
बालबिम्बं समादाय जले चैवाधिवासयेत्। पञ्चरात्रं त्रिरात्रं वा एकरात्रमथापि वा॥
यामं वा चार्धयामं वा जले स्नानमथापि वा। कौतुकं बन्धयेद्विद्वाञ्शयने चाधिवासयेत्॥
नवकुम्भान्समादाय तन्तुना वेष्टयेद्बुधः। क्षालयेदस्त्रमन्त्रेण जलेनैव तु पूरयेत्॥
सहिरण्यं सवस्त्रं च सकूर्चं पल्लवान्वितम्। कुम्भान्विन्यस्य वेद्यूर्ध्वे पूजयेद्देशिकोत्तमः॥
मध्यकुम्भे शिवं यष्ट्वा वर्धन्यां च मनोन्मनीम्। अभितः कलशानष्टौ विद्येशावरणान्यजेत्॥

[2] A : तण्डुलैश्च समं करेत् ; B : तण्डुलैश्च समं कुरु ; C, F, G : तण्डुलैः समलंकृते

अर्चयित्वा तु गन्धाद्यैः [1]पञ्चब्रह्मेण मन्त्रतः । [2]अण्डजाद्यैः सुसंस्तीर्य[3] प्रोक्षयेद्धोरमन्त्रतः ॥ १७ ॥
लिङ्गं [4]गव्यैः कुशाद्भिश्च क्षालयेद्धृदयेन तु । [5]कूर्चवस्त्रसमायुक्तं गन्धैः पुष्पैरलंकृतम्[6] ॥ १८ ॥
शयने शाययेल्लिङ्गं प्राक्शिरश्चोर्ध्ववक्त्रकम् । [7]शिरोऽन्ते शिवकुम्भं तु वस्त्रकूर्चसमन्वितम् ॥ १९ ॥
[8]पञ्चरत्नसमायुक्तं [9]सूत्रयुक्तं सुपूरितम् । नानागन्धसमायुक्तं सापिधानं निधापयेत् ॥ २० ॥
वर्धनीं तस्य सौम्ये तु[10] तद्वदेव विशेषतः । परितश्च[11] घटानष्टौ विन्यसेत्सहिरण्यकम् ॥ २१ ॥
[12]सवस्त्रं कूर्चसंयुक्तं [13]सतोयं गन्धसंयुतम् । [14]पद्ममुद्रां प्रदर्श्याथ [15]लिङ्गमुद्रां प्रदर्शयेत् ॥ २२ ॥
[16]शिवं ध्यायेच्छिवे कुम्भे गन्धादिभिस्समर्चयेत् । [17]वर्धन्यां चाप्युमां ध्यात्वा [18]विद्येशानावृते घटे ॥ २३
ध्यात्वा गन्धादिभिः पूज्य [19]तत्तन्मूलमुदाहरेत् । [20]दिशास्वध्ययनं कुर्यादृग्यजुस्सामाथर्वणः ॥ २४ ॥

---

[1] La forme grammaticale correcte est पञ्चब्रह्मणा ; mais le mètre ne serait pas respecté. La meilleure lecture semble être पञ्चब्रह्माख्यमन्त्रेण.

[2] Pour अण्डजादि voir *Rauravāgama, kriyāpāda, paṭala* 28 *śloka* 39b-40 et *Ajitāgama paṭala* 18 *śloka* 117-121.

[3] A : अण्डजाद्यैस्तु तत्तीर्यं

[4] A, B, C, G : गव्यकुशाद्भिश्च

[5] A : कूर्चं चैव pour कूर्चवस्त्र ; B : कूर्चेनैव

[6] A : अलंकरेत् ; F : अलंकृते

[7] A, F : शिरोन्तिके pour शिरोन्ते ; C : शिरोन्त्ये

[8] Pour पञ्चरत्न voir *Ajitāgama, paṭala* 22, *śloka* 49b-50a

[9] A : सूत्रयुक्ताम्बुपूरितान् ; B : सूत्रयुक्तं प्रपूरितम् ; सूत्रयुक्त्याम्बुपूरितम्

[10] A : च pour तु

[11] A : तु pour च

[12] B : सवस्त्रकूर्चं

[13] A : सतोयं सहिरण्यकम् ; B : सतोयं च सरत्नकम्

[14] Pour la पद्ममुद्रा voir *Ajitāgama, paṭala* 27 *śloka* 16-17

[15] Pour la लिङ्गमुद्रा voir *Ajtāgama, paṭala* 27, *śloka* 23-25

[16] B : शिवकुम्भे शिवं ध्यायेद्

[17] A, B : वर्धन्यां तु उमां

[18] A : विद्येशानामृते घटे

[19] A : तत्तद्ब्रह्ममुदाहरन् ; B : तत्तन्मूलमुदाहरन्

[20] Cf. *Kāmikāgama* I 32-35 :

ऋगाद्यध्ययनं कुर्युः संस्कृता वेदवित्तमाः । एकं वा सर्ववेदांश्च पठेत्स्वस्वदिशि स्थिताः ॥
तदभावे त्वजाताद्या जप्तव्या मूर्तिपैः सह । सद्योजातस्तु ऋग्वेदो वामदेवो यजुः स्मृतः ॥
अघोरः सामवेदस्तु अथर्वः पुरुषः स्मृतः । अष्टोत्तरशहस्रं वा तदर्धं वा तदर्धकम् ॥
अष्टोत्तरशतं वापि जपेद्वैदिकसिद्धये । मूर्तिधाराद्यलाभे तु देशिकः सर्वमाचरेत् ॥

[1]पञ्चब्रह्म [2]शिवस्याङ्गं [3]क्षुरिकाबीजमुख्यकम् । कोणेष्वध्ययनं कुर्याच्छिवव्रत[4]शिवद्विजाः ॥ २५ ॥

[होमः[5]]

ततो होमं प्रकुर्वीत पञ्चसंस्कारपूर्वकम् । समिदाज्यचरूँल्लाजान् [6]सक्तुबिल्वतिलांस्तथा[7] ॥ २६ ॥
[8]सर्षपांश्च यव[9]व्रीहीन्कदलीफलमेव च । हृदादीशानपर्यन्तैः[10] प्रत्येकं तु शताहुतिः ॥ २७ ॥
[11]व्याहृतीश्च ततो हुत्वा बीजमुख्येन संस्पृशेत् । क्षुरिकेण ततो हुत्वा द्रव्यान्ते पञ्चविंशतिः ॥ २८ ॥

---

[1] **पञ्चब्रह्म**मन्त्राः-ओं हों ईशानमूर्धाय नमः, ओं हें तत्पुरुषवक्त्राय नमः, ओं हुं अघोरहृदयाय नमः, ओं हिं वामदेवगुह्याय नमः, ओं हं सद्योजातमूर्तये नमः

[2] **शिवस्याङ्गमन्त्राः**—ओं हां हृदयाय नमः, ओं हीं शिरसे नमः, ओं हूं शिखायै नमः, ओं हैं कवचाय नमः ओं हौं नेत्रेभ्यो नमः, ओं हः अस्त्राय नमः ।

[3] क्षुरिकाबीजम्—ओं शिं छिं क्षुरिकास्त्राय फट् ।

[4] B : शिवमन्त्र pour शिवव्रत

[5] Cf. *Kāraṇāgama* I 135, 50-56 :
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् । खादिराश्वत्थ बिल्वाश्चोदुम्बरश्च वटस्तथा ॥
मायूरार्कपलाशाश्च पूर्वादिसमिधः क्रमात् । पलाशश्च प्रधानस्य सर्वेषामिध्ममुच्यते ॥
समिदाज्यान्नसिद्धार्थं तिललाजयवांस्तथा । सक्तुं माषं च शालिं च वैणवं च क्रमेण तु ॥
सद्यादीशानपर्यन्तं मन्त्रैरेवं क्रमाच्चरेत् । शतमर्धं तदर्धं वा प्रत्येकं होममाचरेत् ॥
द्रव्यं प्रति विशेषेण व्याहृत्याहुतिमाचरेत् । त्र्यम्बकेण मन्त्रेण हुत्वा स्पृष्ट्वा तु लिङ्गकम् ॥
आपो राजेतिमन्त्रेण हुत्वा लिङ्गं स्पृशेत्ततः । पूर्णाहुतिं च शिरसा स्विष्टमग्नेति होमयेत् ।
स्तोत्रमन्त्रजपध्यानै रात्रिशेषं व्यपोह्य च ॥

cf. *Suprabhedāgama* I 26, 37b-42b :
नव पञ्च तथा त्रीणि एकहोममथापि वा । कृत्वाग्निमुखसंस्कारं पूर्वोक्तविधिना ततः ॥
खदिरं वटबिल्वौ च प्लक्षाश्वत्थावुदुम्बरम् । शमीवैकङ्कतं चैव समित्पूर्वादितः क्रमात् ॥
पलाशस्तु प्रधानस्य होमयेद्धृदयेन तु । औदुम्बरसमिद्भिर्वा सर्वेषां चैव कारयेत् ॥
समिदाज्यान्नकैर्मन्त्रैर्होमं कृत्वा पृथक् पृथक् । समिधं हृदयेनैव मूलेनैव घृतं हुनेत् ॥
शिवगायत्रिमन्त्रैश्च चरुं हुत्वा विशेषतः । स्पर्शाहुतिं शिवाङ्गेन हुत्वाङ्गानि च संस्पृशेत् ॥
शिवाग्नियजनं कुर्यात्समिदाज्यान्नलाजकैः । माषशालितिलैर्विद्वान्हुत्वा सद्याच्छिरोऽन्तिकम् ॥
खादिरं बिल्वमश्वत्थं पालाशं वह्निशाखिकम् । पूर्वादिषु चतुर्दिक्षु समिद्धोमं प्रकल्पयेत् ॥
आग्नेय्यां वटवृक्षं स्यान्नैर्ऋत्यां प्लक्षशाखया । औदुम्बरं वायुदेशे त्वर्कमीशानगोचरे ॥
औदुम्बरसमिद्भिर्वा सर्वहोमं समाचरेत् । द्रव्यं प्रति विशेषेण पूर्णाहुतिमथाचरेत् ॥
सर्वद्रव्यैः सकृद्धुत्वा हव्यवाहेति मन्त्रतः ॥ रात्रौ जागरणं कुर्यात् ''

[6] A : सक्थुं pour सक्तुं

[7] B : तिलैः सह pour तिलांस्तथा

[8] B : सर्षपैश्च

[9] B, C, E : व्रीहि pour व्रीहीन

[10] A : पर्यन्ते pour पर्यन्तैः ; B : पर्यन्तं

[11] A : व्याहृतिं च

पूर्णाहुतिस्तु कर्तव्या कवचेन तु मन्त्रतः । [1]प्रासादाभ्यन्तरे पूर्वं वास्तुहोमं [2]समाचरेत् ॥ २९ ॥

[वास्तुहोमः[3]]

स्थण्डिलं पांसुभिः कुर्याद्धस्तमात्रप्रमाणतः । संप्रोक्ष्य [4]व्योमव्याप्याग्निं हृदयेनैव निक्षिपेत् ॥ ३० ॥

समिधो [5]हृदयेनैवाप्याज्यं वै शिरसा विदुः । चरुं वै [6]शिखया हुत्वा प्रत्येकं तु शताहुतिः ॥ ३१ ॥

ततो ब्रह्मादिदेवानां पापराक्षसिकान्तकम् [7] । पूजयेद्गन्धपुष्पाद्यैः [8]स्वस्वनाम्नैव मन्त्रतः ॥ ३२ ॥

स्वस्वानम्नैव मन्त्रेण [9]प्रतिसप्ताहुतिं चरेत् । ततः पूर्णाहुतिं कुर्यात्पर्यग्निकरणं ततः ॥ ३३ ॥

[अधिवासानन्तरकृत्यम्[10]]

एवं जागरणं रात्रौ प्रभाते स्नानमाचरेत् ।

---

[1] A : प्रादादाभ्यन्तरे पूर्वं ; B : पादादारभ्य पूर्वे वा [2] C, E, F : तु कारयेत्

[3] Cf. *Aṃśumadāgama* 7, 24-34a:

बलिमण्डलपूर्वे तु अग्निकार्यं समाचरेत् । आधानादि विवाहान्तमग्निकार्येण मार्गतः ॥
वह्निमध्ये विशेषेण कल्पयेदासनं क्रमात् । ब्रह्मादिवास्तुदेवानां समभ्यर्च्य विशेषतः ॥
दशाहुतिं प्रधानस्य अन्येष्वेकैकमाहुतिम् । पलाशसमिधेनैव हुत्वा ब्रह्मादिमन्त्रतः ॥
त्र्याधिकं च पञ्चाशद्देवानां स्वस्वनामतः । घृतं तत्संख्यया हुत्वा चरुं तत्संख्यया तथा ॥
तण्डुलं तिलमिश्रेण हुत्वा तत्संख्यया बुधः । द्रव्यान्ते व्याहृतिं हुत्वा महास्त्रेण शतं हुनेत् ॥
सर्वद्रव्यं तु संगृह्य स्विष्टकृद्धोममाचरेत् । जयादिरभ्याधानं च राष्ट्रभृच्च क्रमाद्धुनेत् ॥
समिदाहुतिं च जुहुयाद्व्याहृतिभिश्च होमयेत् । यदस्य कर्मणश्चेति हुनेत्पूर्णाहुतिं पुनः ॥
अश्वत्थोदुम्बरान्ब्रह्मपत्राञ्शुष्कान्सदर्भकैः । तद्वास्तु शोधयेद्बध्वा सिद्धार्थं तिलसंयुतम् ॥
वह्निस्थं च पदस्थं च कुम्भस्थं हृदये यजेत् । तद्वास्तुशोधनं कृत्वा संप्रोक्ष्य हृदयेन तु ॥
तदग्रे वह्निमारोप्य संप्रज्वाल्याग्निबीजतः । प्राकारनगरादीनां भवनं यागमण्टपम् ॥
जयघण्टारवोपेतं पर्यग्निकरणं कुरु ।

voir aussi *Ajitāgama, paṭala* 8, *śloka* 35-33.

[4] La forme grammaticale correcte est व्योमव्यापिन्या ; mais le mètre ne serait pas respecté.

[5] A : हृदयेनैव आज्यं [6] A, B : शिरसा [7] A, B, C : अन्तिकम् pour अन्तकम्

[8] A : स्वस्वनाम्नैवमन्ततः ; C : स्वनाम्नैव तु मन्त्रतः ; E, F : स्वनामेनैव मन्त्रतः

[9] Il semble qu'une meilleure lecture pourrait être प्रतिसप्ताहुतीश्चरेत् au lieu de प्रतिसप्ताहुतिं चरेत्

[10] cf. *Kāmikāgama* I 32, 62b-70a :

अपरे दिवसे धीमान्सुस्नातो मूर्तिपैः सह । सकलीकृतदेहस्तु द्वारद्वाराधिपान्यजेत् ॥
संपूज्य देवकुम्भाग्नीन्कुण्डमस्त्रेण चार्चयेत् । संस्कृत्य स्रुक्स्रुवाभ्यां तु ब्रह्मादीन्परिधौ यजेत् ॥
पूर्णाहुतिं ततो दत्वा मन्त्रानावाह्य तर्पयेत् । प्रायश्चित्तास्त्रमन्त्रैस्तु होमं सम्यक्समाचरेत् ॥
अघोरेण शतं हुत्वा जयाद्यैर्दुरितक्षये । पूर्णाहुतिं ततः कुर्याद्देशिको मूर्तिपैः सह ॥
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः । अधमा पञ्चनिष्कं वा द्विगुणा मध्यमा भवेत् ॥

भस्मस्नानं ततः [1]कुर्यात्सकलीकृतविग्रहः ॥ ३४ ॥
लिङ्गं च कलशं चाग्निं गन्धपुष्पादिभिर्यजेत् । जयादिरभ्याधानं च[2] [3]राष्ट्रभृच्चैव होमयेत् ॥ ३५ ॥
आचार्यं पूजयेत्पश्चाद्वस्त्रहेमाङ्गुलीयकैः । दैवज्ञं पूजयेत्तत्राध्यध्येतॄन् पूजयेत्ततः[4] ॥ ३६ ॥

[बाललिङ्गस्थापनम्, कुम्भाभिषेकश्च[5]]

गर्भगेहे[6] तु पुण्याहं [7]कारयेत्प्रोक्षयेत्तदा । पीठमध्ये हिरण्यं तु विन्यसेद्धृदयेन तु ॥ ३७ ॥

---

त्रिगुणा चोत्तमा प्रोक्ता त्वधमत्रयकल्पने । द्विगुणा मध्यमे कल्पे त्रिगुणा चोत्तमे भवेत् ॥
दशभागैकभागं तु मूर्तिधारकदक्षिणा । तदर्धं मन्त्रजप्तॄणां वैदिकानां तु तत्समम् ॥
दैवज्ञे तत्समं विद्याद्द्विगुणं वास्तुहोमिनः । आचार्यस्य चतुर्थांशाच्छिल्पिने दक्षिणा मता ॥

cf *Suprabhedāgama*, I 26, 42b-43 :
प्रभाते विमले होमं कृत्वा पूर्णां शिवेन तु । आचार्यं पूजयित्वा तु मूर्तिपानथ पूजयेत् ॥
दैवज्ञं पूजयित्वा तु अध्येतॄन्परिचारकान् ।

cf. *Sūkṣmāgama* 58, 30b-41a :
" प्रभाते स्नानमाचरेत् ।
तोरणान्कलशान्कुम्भान्यजेत्तु पूर्ववर्त्मना । अग्निमभ्यर्च्य गन्धाद्यैर्हुत्वा चित्रादिमन्त्रतः ॥
यदस्य कर्ममन्त्रेण पूर्णाहुतिमथाचरेत् ॥

[1] B : कृत्वा pour कुर्यात्   [2] A : अभ्युधानैश्च pour अभ्याधानं च ; C, F, G : अभ्याधानैश्च
[3] B : राष्ट्रभृच्च हुनेत्क्रमात्   [4] B : अध्येतारं च पूजयेत्
[5] cf. *Kāraṇāgama* I 135, 62b-76:
मुहूर्तनाडिकापूर्वं लिङ्गस्थापनमारभेत् । उत्थाप्य शयनाल्लिङ्गं बालस्थानं प्रवेशयेत् ॥
पीठस्यावटके देशे नवरत्नानि विन्यसेत् । स्थापयेत्पिण्डिकामध्ये ईशानेन तु पूजयेत् ॥
लिङ्गायामं त्रिधा कृत्वा भागं पीठे प्रदर्शयेत् । स्थापने तु विशेषेण लिङ्गं तु द्वारदिङ्मुखम् ॥
शर्करासर्जचूर्णं च समं संग्राह्य देशिकः । माहिषं नवनीतं च यथायुक्त्या तु योजयेत् ॥
प्रक्षिप्योलूखले धीमान्विवरे तस्य योजयेत् । मुहूर्ते समनुप्राप्ते गुरवे संनिवेदयेत् ॥
शङ्खदुन्दुभिनादैश्च गीतनृत्तसमाकुलम् । ब्रह्मघोषसमायुक्तं नानाभक्तजनैर्युतम् ॥
छत्रध्वजवितानैश्च वीणापटहनादयुक् । ढक्कापणववाद्यैश्च घटमद्दलनादयुक् ॥
झल्लरीजर्झरीनादैर्धूपदीपसमायुतम् । वर्धनीस्रावसहितं मङ्गलाङ्कुरसंयुतम् ॥
कुम्भानुद्धृत्य शिरसा बाह्यधामप्रदक्षिणम् । कृत्वा तु गर्भगेहे तु स्थापयेत्स्थण्डिलोपरि ॥
आसनं कल्पयेत्तत्र पूर्वोक्तविधिना सह । अष्टत्रिंशत्कलान्यासं कृत्वा लिङ्गं विशेषतः ॥
ध्यायेत्सदाशिवं तत्र ईशानेनार्चयेद्बुधः । कुम्भाद्बीजं समादाय लिङ्गमध्ये तु विन्यसेत् ॥
पिण्डिकायां न्यसेच्छक्तिबीजं लिङ्गस्य गोचरे । लिङ्गं कुम्भोदकैः स्नाप्य पिण्डिकां करकोदकैः ॥
अष्टविद्येश्वरांस्तत्र पीठे पूर्वादिषु न्यसेत् । अर्चनोक्तं समभ्यर्च्य शेषं युक्त्या समाचरेत् ॥
परिवारघटेभ्यस्तु स्वस्थानेषु क्रमान्न्यसेत् । स्नपनं कारयेत्पश्चात्प्रभूतहविषं ददेत् ॥
नित्योत्सवादिकान्सर्वान्बालस्थाने तु कारयेत् ॥

गन्धैः पुष्पैश्च धूपैश्च [1]दीपैरर्घ्यैश्च पूजयेत् । [2]धर्मं ज्ञानं च वैराग्यमैश्वर्यं च चतुष्टयम् ॥ ३८ ॥
[3]सिंहपादं तु [4]तत्रैवाप्यधर्माद्यलिका[5] न्यसेत् । [6]अनन्तासनादियोगान्तं [7]विष्टरैः कल्पयेद्बुधः॥ ३९ ॥
तदूर्ध्वं स्थापयेल्लिङ्गं सद्येनैव तु मन्त्रतः । स्थापितान्वेदिकायां तु कुम्भानानीय देशिकः ॥ ४० ॥
लिङ्गाग्रे स्थापयेत् [8]प्राग्वद् गन्धपुष्पादिभिर्यजेत् । [9]घृतशिरोऽर्पणं कुर्याद्धृदयेन तु देशिकः ॥ ४१ ॥
[10]कुम्भाद्देवं समानीय मूलमन्त्रमनुस्मरन् । योजयेल्लिङ्गमध्ये[11] तु [12]हृदयेन समन्वितम् ॥ ४२ ॥
[13]वर्धन्या गौरीमादाय पिण्डिकायां तु वामके । अनन्तादिशिखण्डयन्त [14]प्रागाद्यावरणं न्यसेत् ॥ ४३
पञ्चब्रह्मशिवाङ्गैश्च [15]कुम्भाद्भिरभिषेचयेत् । [16]गौरीगायत्रिमन्त्रेण [17]गौरीं पीठेऽभिषेचयेत् ॥ ४४ ॥
अनन्तादिशिखण्डयन्तांस्तन्मन्त्रेणाभिषेचयेत्[18] । अर्चनोक्तं समभ्यर्च्य परिवारगणैः सह ॥ ४५ ॥
एवं तु विधिना कुर्यात्प्रथमं तरुणालयम् ।

---

cf. *Sūkṣmāgama* 58, 30b-40a, 41b:

शङ्खध्वनिसमायुक्तं ब्रह्मघोषसमन्वितम् । छत्रचामरसंयुक्तं वाद्यध्वनिसमन्वितम् ॥
बालबिम्बसमोपेतं प्रदक्षिणमथाचरेत् । बालगर्भगृहं गत्वा पुण्याहं वाचयेत्ततः ॥
मुहूर्ते समनुप्राप्ते स्थापयेद्बालमूर्तिनम् । अष्टबन्धं त्रिबन्धं वा योजयेत्पीठरन्ध्रके ॥
शिवकुम्भं समादाय कृत्वा धामप्रदक्षिणम् । विन्यस्य बालबिम्बाग्रे स्थण्डिलोर्ध्वे विचक्षणः ॥
मन्त्रन्यासं ततः कृत्वा चलमार्गेण मन्त्रवित् । कुम्भाद्देवं समादाय लिङ्गमध्ये प्रकल्पयेत् ॥
कुम्भोदकेन संस्नाप्य पायसान्नं निवेदयेत् । स्थापितैः सर्वकलशैरभिषिच्येन्दुशेखरम् ॥
नैवेद्यं दापयेद्विद्वान्पानीयाचमनं ददेत् । पीठान्तं वा वृषान्तं वा बलिदानं समाचरेत् ॥
धूपदीपं ततो दत्त्वा ताम्बूलं दापयेद्बुधः । नृत्तगीतादिभिस्तोष्य प्रणम्य परमेश्वरम् ॥
बाललिङ्गविधिस्त्वेवम्"

[6] A : गर्भगेहं [7] B : कृत्वा pour कारयेत्

[1] A : अर्घ्यैश्चापूजयेत्ततः ; B : अर्घ्यैः संपूजयेत्ततः [2] B : धर्मे pour धर्मं [3] C : सिंहे पादं
[4] C, G : तत्रैव अधर्मं तु दले न्यसेत् ; F : तत्रैव अधर्मादि दलान्यजेत्
[5] Pour plus de détails au sujet de l'आसन voir *Rauravāgama*, vol. I, p. 38-39.
[6] B : अनन्तासादि [7] A : विष्टरे
[8] C : पश्चाद् pour प्राग्वद् [9] A, B : घृतं शिरोऽर्पणं [10] C : कुम्भादेर्देवमानीय
[11] F : मूर्ध्नि pour मध्ये [12] C, F, G : सद्येनैव तु मन्त्रतः
[13] A : वर्धन्यां गौरीमादाय ; B : गौरीमादाय वर्धन्यां ; C, F, G : वर्धन्यां गौरिमादाय
[14] F : प्रागाद्यावरणान् यजेत् [15] B : ब्रह्माद्भिः ; pour कुम्भाद्भिः C : कुम्भाद्यैः
[16] C : गौरि pour गौरी ; **गौरीगायत्री** = ओं महादेव्यै च विद्महे रुद्रपत्नी च धीमहि । तन्नो गौरी प्रचोदयात्
[17] B ; F : गौरीपीठे pour गौरीं पीठे ; गौरी ici est un terme technique pour le mot वर्धनी
[18] C, F, G : मन्त्रेणैवाभिषेचयेत् pour तन्मन्त्रेणाभिषेचयेत्

[द्वितीयतरुणालये विशेषः[1]]

प्रासादे पतिते भिन्ने पीठे स्थानादिभिन्नके[2] ॥ ४६ ॥
एवमादिसमुत्पन्ने द्वितीयं तरुणालयम् । पूजाभागसमोत्सेधं[3] बाललिङ्गोदयं भवेत् ॥ ४७ ॥

---

[1] cf. *Kāmikāgama* I 32, 85-94a :

"विशेषः कश्चिदस्ति हि ।
द्वितीये स्थापनार्हस्तु पूर्वरात्रौ मुनीश्वराः । मूलगेहाग्रके तत्र पूर्ववत्स्थण्डिलोपरि ॥
कुम्भं तु स्थाप्य पूर्वोक्तविधिना देशिकाधिपः । मूललिङ्गं तु संपूज्य गन्धाद्यैर्हविषा सह ॥
प्रणम्य देवदेवेशं कर्ता कर्मविचक्षणः । एकवत्सरमारभ्य यावत्स्याद्द्वादशाब्दकम् ॥
तेष्वन्तरे नवीकृत्य पुनः संस्थापयाम्यहम् । इति विज्ञाप्य तत्कर्ता देशिकेन सहैव तु ॥
लिङ्गाद्देवं समावाह्य कुम्भमध्ये न्यसेद्गुरुः । पीठाद्देवीं समावाह्य वर्धन्या मध्यमे न्यसेत् ॥
तदग्रे स्थण्डिलं कृत्वा प्राग्वदग्निमुखं नयेत् । समिदाज्यान्नलाजैश्च तिलैरष्टोत्तरं शतम् ॥
मूलेन होमयेद्विद्वानङ्गानां च दशांशतः । त्रिर्मधुप्लुतदूर्वाभिर्मृत्युजिन्मन्त्रमुच्चरन् ॥
सहस्रं वा तदर्धं वा शतमष्टोत्तरं तु वा । एवं हुत्वा तदन्ते तु क्षणहोमं समाचरेत् ॥
वारैश्च रविपूर्वैश्च नक्षत्रैस्तुरगादिभिः । मेषादिमासकैश्चैव तिथिभिः प्रथमादिभिः ॥
जुहुयादेकया हुत्वा प्रतिवत्सरमाचरेत् । वत्सरे वत्सरे कार्यमथवान्ते समाचरेत् ॥
पूर्णाहुतिं ततो दत्त्वा देवे सर्वं समर्पयेत् । कुम्भानुद्धृत्य वेद्यां तु स्थापयेत्सर्वमङ्गलैः ॥
सकलानां तु सर्वेषां कर्तव्यं बालबिम्बकम् । प्रतिमायां तु कुम्भे वा पीठे वा चेष्टकामये ॥
परिवारेऽपि चैवं स्याद्बालबिम्बं प्रकल्पयेत् । अन्यत्सर्वं समानं स्यात्पूर्वेणैव समाहितः ॥

cf. *Suprabhedāgama* I 26, 2b-3 ; 14-19 ; 32b-34 ; 48b-49 :
पुनः प्रासादकरणे भिन्ने छिन्ने नवीकृते । यत्कृतं तद्द्वितीयाख्यं तरुणालयमुत्तमम् ॥
अन्यानि सर्वकर्माणि समानमिति भाषितम् ॥ . . . .
द्वितीये तरुणालये । पूजायामसमायामं त्रिपादं वार्धमेव वा ॥
आयामसदृशं नार्हं लक्षणोद्धारणं विना । नतौ विष्णुविरिञ्च्यांशौ तच्छिरो मूललिङ्गवत् ॥
लिङ्गमेवं समापाद्य मूलगर्भार्धमानतः । त्र्यंशं वा चतुर्थांशं प्रोक्तं बालगृहं त्विह ॥
बालगेहान्तरे पीठं बाललिङ्गसमोन्नतम् । उच्छ्रायसमविस्तारं सावटं सप्रणालकम् ॥
लिङ्गयामं त्रिधा कृत्वा भागं पीठे निवेशयेत् । वृत्तं वा चतुरश्रं वा षोडशांशेन योजितम् ॥
रत्नन्यासं न कर्तव्यं पादशैलादिकानि च । प्रतिलिङ्गं न कर्तव्यं सूत्रं चैव तथा भवेत् ॥
मूललिङ्गे तु देवेशं द्वितीयश्चेत्समावदेत् । विज्ञाप्य देवदेवेशं क्षणकालं विचक्षणः ॥
एकाब्दाद्द्वादशाब्दान्तं बालस्थाने स्थिरो भव । एतयोरब्दयोर्मध्ये कुर्यान्मूलप्रवेशनम् ॥
विज्ञापयेद्द्वितीये तु चाद्ये विज्ञापनं विना । . . .
..................द्वितीये तरुणालये । बल्यन्तं पूजयेन्नित्यमुत्सवं न समाचरेत् ॥
बालस्थानविधिः प्रोक्तः"

[2] A : स्थाण्वादिभिन्नके ; B : स्थानादिहीनके ; C : स्थलादिभिन्नकैः ; G : स्थलविभिन्नके

[3] A, B : समुत्सेधं pour समोत्सेधं

[1]तत्तुङ्गसदृशं नाहं सुवृत्तं [2]छत्रशीर्षकम् । [3]तन्नाहसदृशं [4]पीठविस्तारं चोदयं समम् ॥ ४८ ॥
[5]शेषं प्रागिव कर्तव्यं सकलेऽपि तथैव च । [6]द्वितीयस्थे घटस्थे वा [7]मासान्ते तु नवीकृते ॥ ४९ ॥
नित्यनैमित्तिकं सर्वं कर्तव्यं तरुणालये । द्वादशाब्दात्तु पुरतो [8]मूलगेहं प्रवेशयेत् ॥ ५० ॥

[बाललिङ्गविसर्जनम् [9]]

तरुणाख्यं विसृज्याथ दारुमग्नौ निधापयेत् । शैलजं तरुणं लिङ्गं समुद्रे तु निधापयेत् ॥ ५१ ॥
तद्बाललिङ्गं [10]संगृह्य न स्थाप्यं मूललिङ्गके । कृतं चेद्राज[11]राष्ट्रं च ग्रामं [12]नश्यत्यसंशयः ॥५२॥
तस्मात्सर्वप्रयत्नेन बाललिङ्गं विसर्जयेत् ॥ ५३ ॥

इति [13]श्रीमद्रौरवतन्त्रे [क्रियापादे] [14]बाललिङ्गस्थापनविधिर्नाम सप्तविंशः पटलः

---

[1] A : उत्तुङ्ग pour तत्तुङ्ग [2] A, B : च त्रिशीर्षकम्

[3] B : तद्दीर्घ pour तन्नाह [4] C : पीठं pour पीठ

[5] cf. *Kāraṇāgama* I 135, 91-97a:

सकलानां तु सर्वेषां कर्तव्या बालबिम्बके । दारुणा प्रतिमा वापि पीठं वा चेष्टकामयम् ॥
जान्वन्तं कन्यसं प्रोक्तं बाह्वन्तं मध्यमं भवेत् । तन्मानमुत्तमं प्रोक्तं बालबिम्बस्य कीर्तितम् ॥
षोडशाङ्गुलमानेन पीठं चेत्संप्रकल्पयेत् । विस्तारं तत्समं ज्ञेयं मेखलात्रयसंयुतम् ॥
एकैकं त्र्यङ्गुलं तारमुत्सेधं तु शराङ्गुलम् । वेदाङ्गुलेन पद्मोच्चं द्व्यङ्गुलं कर्णिकोच्छ्रयम् ॥
कारयेदिष्टकाभिश्च सुस्निग्धसुधया सह । द्वितीयस्योक्तवत्सर्वं कुर्वंस्तं षड्विशेषकम् ॥
प्रतिमां वाथ पीठं वा दैविके स्थापयेद्बुधः । मन्त्रभेदो भवेदत्र क्रियाभेदो न विद्यते ॥
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् ।

[6] A : द्वितीयस्थघटस्थं वा ; B : द्वितीयस्थं घटस्थं वा ; C : द्वितीयस्सघटस्थं वा

[7] A : वामान्ते [8] C : मूले गेहं

[9] cf. *Suprabhedāgama* I 36, 70b-71a :

तरुणं लिङ्गमुत्थाप्य शैवालौघे जले क्षिपेत् । दारुजं चाग्निना दग्धमथवाप्सु विनिक्षिपेत् ॥

[10] A, B, C, E, F, G : संग्राह्य [11] A : राजा pour राज

[12] A : नश्यत्यसंशयम् ; F : नश्यन्ति संशयः [13] B omet श्रीमद्रौरवतन्त्रे

[14] B : बाललिङ्गस्थापनं नाम एकोनत्रिंशः पटलः; C : बालस्थापनविधिर्नाम तृतीयः पटलः; F : बालस्थापनपटलस्तृतीयः

## [अष्टाविंशः पटलः]

## [लिङ्गस्थापनविधिः[1]]

### [ लिङ्गस्थापनफलम्[2] ]

अतः परं प्रवक्ष्यामि लिङ्गस्थापनमुत्तमम् । सर्वयज्ञेषु यत्पुण्यं सर्वतीर्थेषु यत्फलम् ॥ १ ॥

तत्फलं लभते तेन भोगमोक्षफलप्रदम्[3] । राजराष्ट्राभिवृद्धिश्च धनधान्यसुखावहम् ॥ २ ॥

### [लिङ्गमानम्[4]]

नवाष्टसप्तहस्तं [5]चाप्युत्तम[6]त्रयमानकम् । षट्पञ्चचतुर्हस्तं च [7]मध्यमत्रयमुच्यते[8] ॥ ३ ॥

त्रिहस्तं द्व्येकहस्तं च [9]कन्यसत्रयमानकम् । प्रासादे गर्भगेहस्य विशालं नवधा [10]भजेत् ॥ ४ ॥

---

[1] Pour लिङ्गस्थापनविधि voir *Aṃśumatkāśyapa, paṭala* 51, 52 et 54, *Ajita, paṭala* 4, 16 et 18, *Kāmika* I 62 et 64 et II 35, 37 et 42, *Kāraṇa* I 9 et 59 et II 7 et 21, *Kiraṇa* III 21, 23 et 26, *Cintya, paṭala* 20, *Dīpta, paṭala* 13, 14, 20 et 21, *Makuṭa, paṭala* 10, *Mataṅgapārameśvara, kriyāpāda, paṭala* 39, *Yogaja, paṭala* 4, *Vīra, paṭala* 61, *Santānasaṃhitā, paṭala* 19, *Suprabheda* I 33 et 36, *Sūkṣma, paṭala* 42 et *Svāyambhuva, paṭala* 51.

[2] Pour लिङ्गस्थापनफल voir *Ajitāgama, paṭala* 18, *śloka* 1a ; voir aussi *Mataṅgapārameśvara, kriyāpāda*, 39, 1-2 :

अथातः सर्वमन्त्रादेर्लिङ्गसंस्थापनं शुभम् । अस्मिन्संनिहितः क्षिप्रं फलं यच्छत्यनिन्दितम् ॥
भगवान्परमेशानो मन्त्राश्चामोघशक्तयः । स्वरूपाराधनाविष्टाः साधकस्य वरप्रदाः ॥

[3] B : फलादिकम् pour फलप्रदम्

[4] Pour लिङ्गमान voir *Ajitāgama. paṭala* 4 *śloka* 5-10; cf. *Kāraṇāgama*, I 9, 100-108a :

गर्भं विंशतिभागैश्च भजेद्दशाधमं भवेत् । रुद्रांशं मध्यमं ज्ञेयं रव्यंशं चोत्तमं भवेत् ॥
ज्येष्ठकन्यसयोर्मध्ये एतद्गर्भमिति स्मृतम् । विभजेदष्टधा गर्भं समं सूत्रविचक्षणः ॥
एवं कृते भवेत्त्यत्र नव लिङ्गानि सुव्रत । गर्भमानमिति प्रोक्तं हस्तमानमथ शृणु ॥
एकादि नवहस्तान्तं षडङ्गुलविवर्धनात् । आयामास्तु त्रयस्त्रिंशत्संख्यया परिकीर्तिताः ॥
एकहस्तप्रमाणं तु हीनलिङ्गं न कारयेत् । पञ्चहस्तं समारभ्य हर्म्यमानं विशेषतः ॥
हस्तमानेन लिङ्गं तु कारयेद्देशिकोत्तमः । एवं लिङ्गोच्छ्रयं प्रोक्तं वक्ष्ये लिङ्गस्य विस्तरम् ॥
लिङ्गस्योत्सेधमानार्धमष्टधा विभजेत्ततः । विष्कम्भः पञ्चभागः स्यादधस्ताच्चतुरश्रकम् ॥
अधस्ताच्चतुरश्रं तु ब्रह्मभागं तदुच्यते । अष्टाश्रं मध्यमे ज्ञेयं विष्णुभागं तदुच्यते ॥
ऊर्ध्वे सुवृत्तभागं तु रुद्रांशमिति कीर्तितम् ॥

[5] C, G : वा pour च

[6] A : उत्तमं pour उत्तम ; B : उन्नत

[7] A : मध्यमं pour मध्यम ; B : कन्यस

[8] B : त्रयमानकम् pour त्रयमुच्यते

[9] A : कन्यसं pour कन्यस

[10] A : भवेत्

श्रेष्ठान्तरकनिष्ठाशां प्रत्येकं त्रित्रिमानकम् । एवं नवविधं ख्यातं लिङ्गमानं हरो विदुः ॥ ५ ॥
[1]श्रेष्ठत्रीणि द्विजानां च नृपाणां चाभिवृद्धये । द्व्यन्तराणि [2]विशां चैव शूद्राणां कन्यसत्रयम् ॥ ६ ॥
[3]परेषामपरं शस्तमपरेषां परं विना ।

[समखण्डलिङ्गम्[4]]

[5]लिङ्गोच्चे तु गुणांशे तु ब्रह्मविष्णवीश्वरान्तकम् ॥ ७ ॥
[6]तुङ्गं प्रत्येकभागेन [7]वेदाश्राष्टाश्रवृत्तकम् । ब्रह्माद्यानां क्रमात्कल्प्य [8]लिङ्गोच्चसमनाहकम् ॥ ८ ॥
भागत्रयेऽपि कर्तव्यं समखण्डं तदुच्यते ।

[वर्धमानलिङ्गम्[9]]

लिङ्गायामे चतुर्विंशद्भागं तत्र प्रकल्पयेत् ॥ ९ ॥
[10]पूजाभागो नवांशः स्यान्मध्ये त्वष्टांशमुन्नतम्[11] । अधस्तात्सप्तभागं तु [12]तेषां भूतांशतारकम्[13] ॥ १० ॥
[14]षोडशांशपरीणाहं वर्धमानमुदाहृतम् ।

---

1 A : श्रेष्ठं त्रीणि    2 A : विशानां तु

3 A, B : परेषां परमं शस्तं परेषां परमं विना

4 cf. *Aṃśumatkāśyapa* 51, 122b-123:
लिङ्गायामत्रिभागे तु एकांशं चतुरश्रकम् । मध्ये व्योमं तु वस्वश्रमग्रे वृत्तं शिवांशकम् ॥
समलिङ्गमिति ख्यातं विप्रादीनां तु वृद्धिदम् ॥
cf. *Suprabhedāgama* I 33, 83b-84:
चतुरश्रमधो भागमष्टाश्रं मध्यमं तथा । तदूर्ध्वं वृत्तमेवं स्यात्त्रिभागं सर्वतः समम् ॥
समलिङ्गमिति प्रोक्तम्"
voir aussi *Ajitāgama, paṭala* 4, *śloka* 34a

5 A : लिङ्गोच्चं तु गुणोच्चं तु ; B : लिङ्गे चतुर्णांशे तु ; C : लिङ्गोनर्चगुणांशे तु ; F : लिङ्गं चतुर्गुणांशे तु

6 B omet le *śloka* 8 ; C, G : तुङ्ग pour तुङ्गं

7 C, G : वेदाश्व pour वेदाश्र

8 C, G : लिङ्गोच्चाख्यमनाहकम् ; E : लिङ्गोचास्यमनाहकम् , F : लिङ्गोचह्यं मनाहकम्

9 cf. *Kāraṇāgama* I 9, 118b-119a:
चतुष्पञ्चषडंशं तु पञ्चषट्सप्तभागिकम् । वर्धमानमिति प्रोक्तं विप्रादीनामनुक्रमात् ॥
cf. *Suprabhedāgama* I 33, 85-86a:
चतुर्विंशतौ चायामे सप्तांशं चतुरश्रकम् । अष्टाश्रमष्टभागेन नवांशेनैव वृत्तकम् ॥
वर्धमानमिदं लिङ्गम्"
voir aussi *Ajitāgama, paṭala* 4, *śloka* 34b

10 A, B : पूजाभागं नवांशं    11 B : उत्तमम् pour उन्नतम्    12 B, C, G : तेषु pour तेषां

13 C, F, G : भूतांशताष्टकम्    14 A : षोडशांशं pour षोडशांश

[शिवाधिकलिङ्गम्[1]]

[2]लिङ्गोच्चे तु कलांशे तु पञ्चपञ्चषडंशकैः[3]॥ ११ ।

[4]ब्रह्मविष्णवीश्वरांशोच्चं[5] [6]वेदांशं लिङ्गविस्तरम् । एवं [7]समासतः प्रोक्तं लिङ्गमेतच्छिवाधिकम्॥१२॥

[स्वस्तिकलिङ्गम्[8]]

[9]नन्दांशे द्व्यग्निवेदांशं स्वस्तिकं तदुदाहृतम् ।

[शिरोवर्तनम्[10]]

लिङ्गोदये चतुर्थांशं विशालं परिकीर्तितम् ॥ १३ ॥

---

[1] cf. *Kāraṇāgama* I 9, 119b-120:

सप्तसप्ताष्टभागं तु पञ्चपञ्चषडंशकम् । वेदवेदशरांशं तु गुणानलयुगांशकम् ।
एवं शिवाधिकं प्रोक्तं द्विजादीनां क्रमाद्गृहे ।

cf. *Suprabhedāgama* I 33, 86b-87 :

आयामं दशधा कृत्वा चतुरश्रं त्रिभागतः । अष्टाश्रं च त्रिभागेन चतुरंशेन वृत्तकम् ॥
शिवाधिकमिदं शस्तं भुक्तिमुक्तिप्रदं नृणाम् ।

voir aussi *Ajitāgama, paṭala* 4, *śl.* 35.

[2] B : लिङ्गे चतुःकलांशे तु ; C, F, G : लिङ्गाच्चतुष्कलांशे तु

[3] A, B, E : षडंगकैः pour षडंशकैः

[4] C, G : विष्णुशर pour विष्ण्वीश्वर

[5] B : अंशाच्च pour अंशोच्चं

[6] C, F, G : वेदाङ्गं

[7] C, F, G : समांशतः

[8] cf. *Aṃśumadāgama* 51, 128b-129:

लिङ्गायामे नवांशे तु चतुरश्रं द्विभागधा । वस्वश्रं तु गुणांशेन वेदांशं वृत्तमुच्यते ॥
स्वस्तिकं ह्येवमाख्यातम् "

voir aussi *Ajitāgama, paṭala* 4, *śl.* 36.

[9] A : नन्दांशेष्वग्निवेदांशं ; B : नन्दांशे त्वग्निवेदांशं

[10] cf. *Kāmikāgama* I 62, 52-61:

शिरोवर्तनमेतेषां वक्ष्ये तद्बहुधा मतम् । पुण्डरीकं विशालाख्यं श्रीवत्सं शत्रुमर्दनम् ॥
काष्ठांशके चतुर्भक्ते भागभागविवर्धनात् । भवन्ति पुण्डरीकादिभेदा भिन्नफलाप्तये ॥
पुण्डरीकाद्यशःप्राप्ति विशालाद्विपुलां श्रियम् । प्राप्नोति सर्वान् श्रीवत्साद्विजयं शत्रुमर्दनात् ॥
कुक्कुटाण्डशिरोमूर्तिश्चतुर्थांशविवर्धनात् । प्रजावृद्धिकरं यस्मात्प्रजालाभं प्रजापतिः ॥
त्रिभागवर्धनादर्धचन्द्रं चन्द्रसमो यतः । प्राप्तमायुः परं प्राप्तलोकं सौभाग्यमुत्तमम् ॥
षड्भागवर्धनाद्भूतिनिमित्तं त्रपुषाकृतिः । साध्याः सिद्धाश्च मरुतो यस्माद्भूतिं परां गताः ॥
अथवान्यप्रकारेण शिरोवर्तनमुच्यते । अष्टधा विभजेत्तारमध्यर्धेन विवर्तनात् ॥
छत्रशीर्षमिति प्रोक्तं त्रपुषाभं निगद्यते । षडंशैः त्रपुषं वा स्यात्सार्धद्व्यंशेन वर्तनम् ॥
कुक्कुटाण्डशिरः प्रोक्तं विस्तारार्धप्रवर्तितम् । चन्द्रखण्डनिभं प्रोक्तं विस्तारत्र्यंशवर्तितम् ॥
बुद्बुदाभं शिरः सार्धत्र्यंशेनाष्टविभाजिते । एतानि सर्वलिङ्गानां सनातनशिरांसि हि ॥

विस्तारं तु त्रिधा कृत्वा द्विभागेन तु [1]वर्तितम् । अर्धचन्द्रं तु तत्प्रोक्तं [2]सर्वजात्यर्हकं भवेत् ॥ १४ ।

[लक्षणोद्धारः[3]]

[4]शिरसो [5]वर्तनं [6]प्रोक्तम् ; लक्षणोद्धारणं ततः। [7]पूजांशोच्चे कलांशे तु [8]द्व्यंशाधस्ताद्विसृज्य च ॥१५॥
नवांशं नालमित्युक्तमेकांशं मुकुलं भवेत् । एकांशं तु त्रिधा कृत्वा [9]द्व्यंशं नालस्य विस्तृतम् ॥ १६ ॥

---

cf. *Suprabhedāgama* I 33, 122b-127:
शिरसो वर्तनं कार्यं तच्चतुर्विधमुच्यते । छत्राकारं तु पूर्वं च द्वितीयं त्रपुषाकृतिः ॥
कुक्कुटाण्डं तृतीयं तु चतुर्थं त्वर्धचन्द्रकम् । कृत्वा तारं तु षड्भागं लिङ्गस्य च शिरस्त्वथ ॥
भागेन वर्तनं कृत्वा यावन्निम्नं तु मध्यमम् । छत्राकारमिदं प्रोक्तं सर्वसिद्धिप्रदायकम् ॥
तारं कृत्वा तु षड्भागं द्विभागार्धेन वर्तितम् । त्रपुषाकृतिरेवं स्याद्भुक्तिमुक्तिफलप्रदम् ।
कुक्कुटाण्डं तु तत्रैव विस्तारार्धेन वर्तितम् । लिङ्गतारं त्रिधा कृत्वा द्विभागेन तु वर्तितम् ॥
अर्धचन्द्रमिदं तत्र भुक्त्यर्थं प्रोच्यते क्रमात् ॥

voir aussi *Ajitāgama*, *paṭala* 4 *śl.* 39b-47.

[1] C : वर्धितम्

[2] A : सर्वमृग्यमर्हं भवेत् ; B : सर्वमृग्यं महाभवेत् ; C, G : सर्वजात्यसर्कं भवेत्

[3] Cf. *Cintyāgama*, 20, 49b–61 ; 64a :
प्रभाते सूत्रविन्यासं सुमुहूर्ते समाचरेत् । रुद्रभागस्य चायामं षोडशांशेन भाजयेत् ॥
चतुर्थांशं द्वितीयं च ऊर्ध्वे मूले त्यजेत्क्रमात् । एकांशं मुकुले न्यस्त्वा रन्ध्रांशं नालमालिखेत् ॥
कृशतां कल्पयेद्धीमान्पक्षसूत्रद्वयं लिखेत । तयोः सूत्रद्वयं चैव साधयेत्पृष्ठदेशके ॥
प्रथमं लक्षणं प्रोक्तं द्वितीयं लक्षणं शृणु । पूजाभागे तु भान्वंशे ऊर्ध्वे त्यक्त्वा गुणांशकम् ॥
एकांशं मुकुले न्यस्त्वा वस्वंशं नालमुच्यते । पक्षसूत्रद्वयं चापि पूर्वोक्तविधिना कुरु ॥
द्वितीयं लक्षणं प्रोक्तं तृतीयं लक्षणं शृणु । रुद्रांशे रुद्रभागे तु त्यक्त्वाप्यूर्ध्वे गुणांशकम् ॥
एकांशं मुकुलं कृत्वा नालं सप्तांशकं भवेत् । रुद्रांशं नवधा कृत्वा त्यक्त्वोर्ध्वे च द्व्यां[त्र्यां?]शकम् ॥
मुकुलमेकभागं तु पञ्चांशं नालमिष्यते । नालायाममधस्तस्य मुकुलं कृत्वा तु मूलतः ॥
पार्श्वयोरुभयोः सूत्रं बन्धयेत्पृष्ठदेशके । कदलीमुकुलं वापि पद्मं वा युगलं तु वा ॥
लिङ्गं वा शूलरूपं वा छत्रं वा लक्षणं न्यसेत् । सर्वेषां चैव लिङ्गानां मुकुलं चोत्तमोत्तमम् ॥
त्रियम्बकेन मन्त्रेण नालसूत्रं तु विन्यसेत् । ब्रह्मजज्ञानमन्त्रेण लेखयेद्ब्रह्मसूत्रकम् ॥
नेत्रेण मुकुलं लिख्य लेखयेत्स्वर्णसूचिना । मधुवातेति मन्त्रेण मधुना तर्पयेत्ततः ॥
घृतं मिमिक्षमन्त्रेण तर्पयेतु घृतं ततः । . . . . . दर्शयेद्धान्यराशिं तु गोवत्सां ब्रह्मकन्यकाम् ॥

Voir aussi *Ajitāgama paṭala* 18, *śl.* 49-89.

[4] C : शिरसा [5] B : वर्धनं [6] A : प्रोक्तो

[7] A : पूजांशोच्चकलांशे तु ; B : पूजांशे तु कलांशे तु

[8] A : द्व्यंशा शस्तान्विसृज्य च ; B : द्वैंशाशस्ताद्विसृज्य च

[9] A : द्व्यंशं मालं तु विस्तृतम् ; B : द्व्यंशनालं तु बिस्तृतम्

पार्श्वयोरुपरि [1]चाधो रेखां [2]नालस्य कल्पयेत् । नालव्यासार्धभागं तु मुकुलस्य समानकम् ॥ ॥ १७ ॥
परितो मुकुलस्यापि रेखां संकल्पयेद् बुधः । दलाग्रपार्श्वयोर्नालव्यासतुल्यं विसृज्य च ॥ १८ ॥
नालायामसमं [3]नालमूलपार्श्वद्वयोरपि । नीत्वा [4]तु मणिरेखे [5]द्वे कल्प्य [6]पृष्ठे तु बन्धयेत् ॥ १९ ॥
[7]स्वर्णसूच्या लिखेत्पश्चाद्धृदयेन तु मन्त्रतः । क्षीरं [8]घृतं मधु चैव बीजमुख्येन लेखयेत् ॥ २० ॥
सद्योजातेन मन्त्रेण सवत्सां गां प्रदर्शयेत् । वामदेवेन मन्त्रेण [9]ब्राह्मणान्दर्शयेत्ततः ॥ २१ ॥
[10]तत्पुरुषेण [11]मन्त्रेण जनसंघान्प्रदर्शयेत् ।

[लिङ्गशुद्धिः[12]]

मृद्भस्मना[13]शकृच्चूर्णं पञ्चगव्यकुशाम्भसा ॥२२॥
क्षालयेदस्त्रमन्त्रेण शुद्धवारियुतेन च । पञ्चगव्याधिवासश्च [14]पञ्चब्रह्मादिमन्त्रतः ॥ २३ ॥

[जलाधिवासः[15]]

ग्रामप्रदक्षिणं कृत्वा लिङ्गं पिण्डिकया सह । सर्वालंकारसंयुक्तं जलमध्ये तु [16]शाययेत् ॥ २४ ॥

---

[1] C : भागेऽथ pour चाधो ; E, F : श्चाधो

[2] Le ms. B omet la portion entre le premier *pāda* du *śloka* 17a et le second *pāda* du *śloka* 18a et se lit : पार्श्वयोरुपरि चाधो रेखां संकल्पयेद्बुधः

[3] A : ताल pour नाल; B : नालं [4] B omet तु [5] A : त्वे pour द्वे

[6] B : पृष्ठेषु pour पृष्ठे तु [7] C, G : स्वसूत्राच्च लिखेत् ; F : स्वसूत्रं विलिखेत्

[8] A : घृतं मधुं चैव ; B, F : घृतमधुश्चैव

[9] B : ब्राह्मणैर्दर्शयेद्बुधः; C, F, G : ब्राह्मणान् दर्शयेद्बुधः [10] B : तत्पूरुषेण

[11] A ajoute तु après तत्पुरुषेण

[12] cf. *Kāraṇāgama* I 59, 77-81:

स्नानश्वभ्रं नयेल्लिङ्गं दारुपीठोपरि न्यसेत् । कौशेयोपरि विन्यस्य ततः स्नानं समारभेत् ॥
सर्वातोद्यसमायुक्तं नृत्तगेयसमाकुलम् । स्नापयेत्पञ्चगव्यैश्च पवमानमुदीरयेत् ॥
अष्टमृत्सलिलेनैव यवगोधूमसर्षपैः । रात्रिचूर्णशकृच्चूर्णभस्मतद्युक्ततोयकैः ॥
स्नापयेत् विशेषेण शुद्धैरुद्धैरिति ब्रुवन् । पाद्यमाचमनं चार्घ्यं वक्त्रमन्त्रेण दापयेत् ॥
गन्धपुष्पादिभिः पूज्य हृदयेन तु मन्त्रतः । पुण्याहं वाचयेत्तत्र रक्तवस्त्रेण वेष्टयेत् ॥

voir aussi *Ajitāgama, paṭala* 18, *śloka* 90-94.

[13] B : द्भि pour ना [14] F : वासं च pour वासश्च

[15] cf. *Suprabhedāgama* I 36, 17-22a:

ग्रामप्रदक्षिणं कृत्वा देशिकः शिल्पिसंयुतः । कण्ठमात्रे जले शुद्धे प्रपां कृत्वा विचक्षणः ॥
वितानध्वजमाल्यादिदर्भमालाभिरावृतम् । वस्त्रैरावेष्टयेल्लिङ्गं दर्भैरावेष्ट्य यत्नतः ॥
फलकायां तु पीठे वा प्राक्शिरस्कं तु शाययेत् । ऊर्ध्वसूत्रं यथा कृत्वा पीठं तत्पार्श्वयोस्ततः ॥
कलशानष्ट संस्थाप्य रक्षार्थं परितस्तदा । लोकपालाधिदैवत्यान्सकूर्चान्वस्त्रवेष्टितान् ॥
पञ्चरात्रं त्रिरात्रं वा एकरात्रमथापि वा । पञ्चगव्ये तु तल्लिङ्गमेकरात्रोषितं तथा ॥
अथवा स्नापयेद्गव्यैराढकैस्तु पृथक् पृथक् ।

voir aussi *Ajitāgama, paṭala* 18, *śloka* 95-98.

[16] B : योजयेत्

आपादलम्बितं कूर्चं [1]वस्त्रद्वयसमायुतम्। [2]पुष्पमालां च संवेष्ट्य हृदा गन्धादिभिर्यजेत्॥ २५॥
[3]प्राङ्मस्तकमधःसूत्रं [4]प्रपामध्ये तु शाययेत्। एकरात्रं द्विरात्रं वा त्रिरात्रवाधिवासयेत्॥ २६॥

[मण्डपः[5]]

प्रासादस्याग्रतः कुर्यान्मण्डपं चतुरश्रकम्। सप्तहस्तं समारभ्य यावत्पक्षकरावधि[6]॥ २७॥
नवधा मण्डपव्यासं कलास्तम्भसमन्वितम्। वितानाद्यैरलंकृत्य मण्डपं तु त्रिधा भजेत्॥ २८॥
[7]मध्यांशं[8] वेदिकाव्यासं [9]रत्निमात्रं तदुन्नतम्। दर्पणोदरसंकाशं कृत्वा [10]रक्तमृदा [11]बुधः २९॥
भूताक्षमात्रविस्तारमुत्सेधमुपवेदिका[12]। [13]तुर्याश्रकुण्डं [14]प्राच्यां तु दक्षिणे त्वर्धचन्द्रकम्॥ ३०॥
वारुणे [15]वृत्तकुण्डं तु सौम्ये चैव त्रिकोणकम्। पद्मकुण्डमथैशान्यां [16]सर्वं वेदाश्रमेव वा॥ ३१॥
[17]हस्तव्यासं च खातं च ताल[18]गाधमथापि वा। मेखलात्रय[19]संयुक्तमेकैकं तु [20]त्र्याङ्गुलम्॥ ३२॥
शोषणं [21]पाचनं कृत्वा पर्यग्निकरणं [22]तथा। पुण्याहं वाचयित्वा तु प्रोक्षयेत्पञ्चगव्यकैः॥ ३३॥

---

[1] A : वस्त्रं यस्य समायुतम्; B : वस्त्रत्रयसमन्वितम् [2] A : पुष्पमालां च संवृत्य; B : पुष्पमाल्यादिभिर्भूष्य
[3] B : प्राङ्मस्तकमयं सूत्रं [4] A : प्रभा pour प्रपा
[5] cf. *Suprabhedāgama* I 36, 22b-30:
आलयस्याग्रतो भागे मण्डपं चतुरश्रकम्। दशद्वादशहस्तं वा त्रयोदशकरं तु वा॥
दशपञ्चकरं वापि विंशद्धस्तमथापि वा। षोडशस्तम्भसंयुक्तं चतुर्द्वारसमायुतम्॥
चतुस्तोरणसंयुक्तं दर्भमालासमावृतम्। वितानध्वजसंकीर्णं पुष्पमालावलम्बितम्॥
नानावस्त्रैरलंकृत्य नानालंकारसंयुतम्। तन्मध्ये वेदिकां कुर्यात्तत्त्रिभागैकविस्तृताम्॥
हस्तमानसमुत्सेधां दर्पणोदरसंनिभाम्। तस्याश्च परितः कृत्वा कुण्डानि च विधानतः॥
पूर्वे तु चतुरश्रं तु याम्ये चैवार्धचन्द्रवत्। पश्चिमे वृत्तकुण्डं तु उत्तरे पद्ममेव च॥
योन्याकारं तथाग्नेय्यां त्रिकोणं चैव नैर्ऋते। षट्कोणं वायुदिग्भागे ऐशान्यामष्टकोणकम्॥
ऐशानइन्द्रयोर्मध्ये वृत्तकुण्डं तु कारयेत्। विस्तारे नवहोमः स्यात्संक्षेपे पञ्चहोमकम्॥
पञ्चाग्निश्चेन्महाशासु मूर्तिरीशे शिवाग्निकम्।
voir aussi *Ajitāgama, paṭala* 18, *śloka* 34-48.
[6] C, F, G : अवधिः pour अवधि
[7] Les mots *aṃśa* et *vyāsa* se trouvent au neutre au lieu du masculin ; cf. *Rauravāgama*, vol I, p. 69 note 6.
[8] A : मध्येंशं; C : मध्येदं [9] A : रत्निमात्रं समुन्नतम्; B : रत्निमात्रसमन्वितम्
[10] B : रत्नपदा; C : रत्नमृदा [11] B : युतम् pour बुधः
[12] Une meilleure lecture semble être भूताक्षमात्रविस्तारोत्सेधा चात्रोपवेदिका
[13] B : श्रुत्यश्र pour तुर्याश्र [14] C, F, G : प्राच्यान्तं pour प्राच्यां तु
[15] C : वृद्ध pour वृत्त [16] B : सर्वे; C, F. G : षष्ठं
[17] C : हस्तं व्यासं च ख्यातं च [18] A, B : गाढ pour गाध [19] A : संसक्त pour संयुक्त
[20] A : त्रियङ्गुलम् [21] B : पाशनं [22] B : कुरु pour तथा; C, F : ततः

[स्नानमण्डपः[1]]

गोमयालेपनं कृत्वा रजांसि विनिपातयेत् । तस्योत्तरे प्रपायां तु स्नानश्वभ्रं प्रकल्पयेत् ॥ ३४ ॥
[2]हस्तव्यासं [3]युगाश्रं तु मेखलात्रयसंयुतम् । नालमुत्तरतः [4]कुर्याद्व्यासाग्न्यंशसमायुतम् ॥ ३५ ॥

[शयनाधिवासः[5]]

गोमयालेपनं कृत्वा [6]फलकं तत्र निक्षिपेत् । [7]जलादानीय लिङ्गं तु स्नानश्वभ्रे निधापयेत् ॥ ३६ ॥
पूर्ववल्लिङ्गशुद्धिं तु कृत्वा गन्धादिभिर्यजेत् । बध्वा प्रतिसरं पश्चाद्वस्त्रयुग्मेन वेष्टयेत् ॥ ३७ ॥
स्थण्डिलं कारयेद्वेद्यामष्टद्रोणैश्च शालिभिः । अष्टपत्राम्बुजं लिख्य [8]शालितण्डुलमेव वा ॥ ३८ ॥

---

[1] cf. *Suprabhedāgama* I 36, 31-34:

गोमयालेपनं कृत्वा पिष्टचूर्णैरलंकृतम् । तस्यैवोत्तरपार्श्वे तु कर्तव्यं स्नानमण्डपम् ॥
सप्ताष्टनवहस्तैर्वा कृत्वालंकृत्य पूर्ववत् । स्नानवेदिं तु तन्मध्ये श्वभ्रं सम्यक्तथोत्तरे ।
चतुरश्रं समं कृत्वा चतुस्त्रिनवहस्तकम् । त्रिमेखलासमायुक्तमेकतालसमुन्नतम् ॥
चतुस्त्रिद्व्यङ्गुलं तारमथवा चैकमेखलम् । उत्तरे जलमार्गं च मण्डपाद्बाह्यनिर्गमम् ॥

[2] B : हस्तव्याप्तं ; C : हस्तं व्यासं [3] B : युगालं तु

[4] A : कुर्याद्व्याधाग्न्यंशे समायुतम् ; B : कुर्याद्वायान्यंशे समायुतम् ; C, G : व्यासाग्न्यंशेंशमायुतम्

[5] cf. *Kāmikāgama* I 64, 91-101a et 110-111 :

जलाधिवासनस्थानादानीय परमेश्वरम् । मण्टपे स्नपनाख्ये तु प्राग्वत्स्नपनमारभेत् ॥
मृद्भिः कषायवर्गेण पञ्चगव्यफलोदकैः । पुष्पाद्यैः पत्रतोयैश्च गन्धोदैर्धातुतोयकैः ॥
पञ्चामृतैः कुशोदैर्वा स्नापयेद्वृषभध्वजम् । एवमेव भवान्याश्च कुर्यात्स्नपनमुत्तमम् ॥
आच्छाद्य वस्त्रयुग्मेन गन्धाद्यैरर्चयेत्क्रमात् । कृत्वा कौतुकसूत्रं तु शम्भोर्देव्याः क्रमेण तु ॥
शय्यां च कल्पयेद्विद्वाञ्शालितण्डुलकादिभिः । अष्टद्रोणैः सशालीभिस्तदर्धैस्तण्डुलैरपि ॥
तिलैस्तदर्धैर्लाजैश्च दर्भैः पुष्पैः परिस्तरेत् । चर्मजं रोमजं तूध्वं मुण्डजं चाण्डजं तथा ॥
कार्पासजं क्रमेणैव कल्पयेदुपधानकम् । अलाभे पञ्चवस्त्रैस्तु मिश्रैः शय्यां प्रकल्पयेत् ॥
संपूज्यासनमन्त्रैश्च शक्तिं शय्याधिपान्न्यसेत् । शिबिकादौ समारोप्य भवान्यानुगतं नयेत् ॥
द्वारदेशे तु संप्राप्ते दद्यादर्घ्यं क्रमेण तु । आरोप्य शयने देवं प्राङ्मस्तकसमन्वितम् ॥
लिङ्गस्योत्तरतो देवीं क्रियाख्यां पीठविग्रहाम् । लिङ्गमूले न्यसेद्देवीं नवगर्तसमन्विताम् ॥
मूर्तिमूर्तीश्वरन्यासं तत्त्वतत्त्वेश्वरान्वितम् । संपूज्य गन्धपुष्पाद्यैर्देवानध्वपतीन्क्रमात् ॥
अव्यक्तमूर्तिं ब्रह्माणि विद्यादेहं शिवं ततः । शिवाङ्गानि च संपूज्य गन्धपुष्पादिभिः क्रमात् ॥
आच्छाद्य नववस्त्रेण प्रतिभागं च पूजयेत् ।

voir aussi *Ajitāgama* 18, 99-103a; 114-121; 131-137

[6] B : फलकां तत्र; C F, G : फलकायां तु [7] C, F et G omettent les *śloka* 36b et 37

[8] B : शालितण्डुल एव च ; C, F : शालितण्डुल एव वा

[1]लाज[2]पुष्पतिलैर्दर्भैरलंकृत्य विशेषतः । शयनं कल्पयेत्तस्मिश्चर्मजाण्डजरोमजैः[3] ॥ ३९ ॥
[4]मुण्डजैर्वामजैश्चैव कल्प्यं वस्त्रैरथापि वा । गन्धादिभिः समभ्यर्च्य सर्वालंकारसंयुतम् ॥ ४० ॥
[5]शयने शाययेल्लिङ्गं प्राक्शिरस्कमधोमुखम् । रक्तवस्त्रेण संवेष्ट्य गन्धाद्यैरर्चयेद्बुधः ॥ ४१ ॥

[कुम्भस्थापनम्[6]]

वारिभिः पूरितं कुम्भं ससूत्रं सापिधानकम् । सहिरण्यं [7]सरत्नं च सवस्त्रं कूर्चसंयुतम् ॥ ४२ ॥
नानागन्धाम्बु[8]संपूर्णं स्थापयेत्तु शिरोऽन्तिके । वर्धनीं तस्य सौम्ये तु परितोऽष्टघटान्न्यसेत्[9] ॥ ४३ ॥
तानि [10]सूत्रादिभिर्युक्तं प्रागिवैव विशेषत. । [11]मूलमन्त्रं न्यसेत्कुम्भे ध्यायेत्सर्वेश्वरं प्रभुम् ॥ ४४ ॥

[कुम्भमध्ये सदाशिवध्यानम्[12]]

पञ्चवक्त्रयुतं देवं [13]पञ्चमूर्धसमन्वितम् । दिव्याम्बरधरं देवं दिव्यगन्धानुलेपनम् ॥ ४५ ॥
यज्ञसूत्रसमायुक्तं [14]कटिसूत्रयुतोदरम् । कर्णिकाहारवलयं [15]कर्णपुष्पोत्तरीयकम् ॥ ४६ ॥

---

1 cf. *Suprabheda*, I 22, 145b-150 :
अण्डजं मुण्डजं चैव रोमजं चर्मजं तथा । वामजं शयनं पञ्च तल्पास्त्वेवं विशेषतः ॥
अण्डजं चात्र बोद्धव्यं पक्षिपिञ्छसमुद्भवम् । कार्पासेन कृतं यत्तु मुण्डजं च प्रकीर्तितम् ॥
आविकादिमृगाणां तु रोमजं रोमज स्मृतम् । चर्मजं व्याघ्रसिंहयोः कौशेयं वामजं स्मृतम् ॥
पट्टं चापि प्रकर्तव्यं सदृशेन समन्वितम् । अण्डजं श्वेतरूपं स्यान्मुण्डजं पीतवर्णकम् ॥
रोमजं कृष्णवर्णं तु रक्तवर्णं तु चर्मजम् । वामजं सितवर्णं तु शुक्लरूपं तु पट्टकम् ॥
यथार्हकं तथा कृत्वा ह्यपिधानं तथा भवेत् ॥
Voir aussi *Ajitāgama, paṭala* 18, *śl.* 117-121 et *paṭala* 40 *śl.* 51-55.

2 B : पुष्पैस्तिलैर् pour पुष्पतिलैर्
3 C, F, G : चर्मजालैश्च रोमजैः
4 C : अण्ड pour मुण्ड
5 C, F, G : शाययेच्छयने लिङ्गं

6 cf. *Kāmika*, I 64, 112-114a et 117-118a :
वेद्यूर्ध्वे परितः कुम्भान्न्यसेद्विश्वेश्वरात्मकान् । निद्राकुम्भं शिरोदेशे वर्धनीमुत्तरे न्यसेत् ॥
कुम्भान्वस्त्रैः समावेष्ट्य हेमपद्मसमन्वितान् । पिधानकूर्चसंयुक्तान्पल्लवैरुपशोभितान् ॥
निवेद्य भूरि नैवेद्यं ताम्बूलाद्यं च मन्त्रवत् । . . . चतुर्वेदविदो विप्राश्चतुर्दिक्षु व्यवस्थिताः ।
पठन्तो देवतालिङ्गमन्त्रान्संनिधिहेतवे । भवन्ति मूर्तिपा नाम संस्कृताः शिवशम्बरैः ॥
Voir aussi *Ajitāgama* 18, 138-147.

7 A, B : ससूत्रं
8 C : गन्ध्याम्बु pour गन्धाम्बु
9 B : यजेत् pour न्यसेत्
10 C : सूत्राणुभिर्युक्तं ; E : सूक्ष्माणिभिर्युक्तं ; F : सूत्रैः समायुक्तं
11 A : मूलमग्रं

12 cf. *Sūkṣmāgama* 42, 143b-148a :
ज्ञात्वा सदाशिवं रूपं पञ्चमूर्ति[मूर्ध]समन्वितम् । पञ्चवक्त्रसमायुक्तं दशहस्तोपशोभितम् ॥
दिव्याम्बरधरं देवं दिव्याभरणभूषितम् । शुद्धस्फटिकसंकाशं कुन्देन्दुधवलप्रभम् ॥
कुण्डलैः कर्णिकैर्हारैर्यज्ञसूत्रविभूषितम् । शूलं परशुवज्रं च खड्गं चाभय दक्षिणे ॥
पाशाङ्कुशं च वह्निं च खेटकं वरदे परे । कुम्भे ध्यात्वा विशेषेण पद्ममुद्रां प्रदर्शयेत् ॥
आवाहनादिकं सर्वं पूर्वोक्तविधिना कुरु । शिवमन्त्रं समुच्चार्य गन्धपुष्पादिनार्चयेत् ॥
Voir aussi *Ajitāgama* 20, 158-164

13 C, F, G : पञ्चमूर्ध्ना pour पञ्चमूर्ध
14 A, B : कटिसूत्रोदरबन्धनम्
15 C : कण्ठ pour कर्ण

[1]नूपुरैः पादयोर्युक्तं पद्मपीठोपरि स्थितम्। [2]दशभुजं चैकदेहं च दिव्याभरणभूषितम्॥ ४७॥
शूलं परशुखड्गं च [3]वज्रं [4]वह्निं च दक्षिणे। पाशाङ्कुशं च नागं च घण्टाभयं च वामके॥ ४८॥
जटामकुटसंयुक्तं रक्तवर्णसमायुतम्। पुष्पमालासमायुक्तं भस्मोद्धूलितविग्रहम्॥ ४९॥
[5]धुत्तूरपुष्पसहितं बालेन्दुकृतशेखरम्। ध्यात्वैवं कुम्भमध्ये तु हृदा [6]मूलमुदाहरन्॥ ५०॥

[वर्धन्यां मनोन्मनीध्यानम्[7]]

वर्धन्यां [8]मनोन्मनीं ध्यायेदेवमेव विचक्षणः। [9]त्रिनेत्रां चतुर्भुजां शान्तां पीनोरुजघनस्तनाम्[10]॥ ५१॥
तप्तकाञ्चनसंकाशां किरीटमकुटान्विताम्[11]। दुकूलवसनोपेतां सर्वाभरणभूषिताम्॥ ५२॥
[12]त्रिभङ्गामम्बुजे संस्थां [13]वरदाभयसंयुताम्। उत्पलं दक्षिणे हस्ते [14]वामहस्ते धृताम्बुजाम्॥ ५३॥
देवस्य वामपार्श्वे तु [15]देवमीषन्निरीक्षिताम्। [16]ईषद्वलितवक्त्राढ्यां बीजमुख्यमुदाहरन्॥ ५४॥

[विद्येश्वरध्यानम्[17]]

अनन्तादिशिखण्डयन्ताञ्शक्रादिषु घटेषु वै। [18]त्र्यक्षाश्चतुर्भुजाञ्शान्तान् [19]वरदाभयसंयुतान्॥ ५५॥

---

[1] A : नूपुरं  [2] B : सौम्यदेहं दशभुजं ; C, G : दशभुजं चैकदेशं च  [3] B : यज्ञं pour वज्रं
[4] C : करे pour वह्निं  [5] A, B : सदूर्ध्वं pour धुत्तूर ; F : धुर्धूर  [6] C omet मूल
[7] cf. *Kāraṇāgama* I 90, 6-10:

" मनोन्मन्याकृतिं शृणु।
शशिवर्णं त्रिणेत्रं च जटामकुटमण्डितम्। सर्वाभरणसंपूर्णं चतुर्भुजसमन्वितम्॥
पङ्कजाभयं दक्षे तु वरदोत्पलं वामके। अथवा कटकं वापि द्विहस्तं वा विशेषतः॥
उत्पलं सव्यहस्ते तु वामहस्तं प्रलम्बयेत्। इन्दुशेखरसंयुक्तं नक्रकुण्डलधारिणम्॥
वालिकाकर्णपुष्पेण शोभनाम्बरभूषितम्।
कुन्दनिभवेदकरवह्निनयनं स्यात्। पङ्कजवराभयकरोत्पलचतुष्कम्।
अङ्गहिमभूषणविचित्रनयनं स्यात् तुङ्गमकुटोज्ज्वलमनोन्मनिस्वरूपम्॥

[8] B : पूजयेद्देवीं ध्यायेदेवं ; C. F : मनोन्मनीं ध्यायेदेवमेवं  [9] A : त्रिणेत्रां
[10] B : स्थलाम् pour स्तनाम्  [11] C, G : उज्ज्वलाम् pour अन्विताम्
[12] C, G : त्रिभङ्गीमम्बुजैः ; F : त्रिभङ्गिमम्बुजैः  [13] A, C : अभयं वरदान्वितम्
[14] A : वामहस्ताम्बुजोद्धताम् ; C, F, G : वामहस्तेऽम्बुजं धृताम्
[15] : देवीम् pour देवम् ; une meillere lecture semble ètre देवेनेषन्निरीक्षिताम्
[16] A : ईषद्वहितवक्त्राढ्यां ; B : ईषद्विहितवक्त्राढयां ; C : ईषत्स्मितयुतां देवीं
[17] cf. *Kāraṇāgama* I 30, 291-294a:

अनन्तेशस्तथा सूक्ष्मः शिवोत्तमश्चैकनेत्रकः। एकरुद्रस्त्रिमूर्तिश्च श्रीकण्ठश्च शिखण्डिकः॥
अष्टविद्येश्वरा ह्येते त्रिणेत्राश्च चतुर्भुजाः। अभयवरदोपेताष्टङ्कशूलसमन्विताः॥
रक्तं श्वेतं तथा नीलपीतं कृष्णं च कुङ्कुमम्। शोणं भिन्नाञ्जनप्रख्यं क्रमाद्विद्येशवर्णकम्॥
अनन्तादिशिखण्डयन्तान्प्रागदलेषु प्रकल्पयेत्।

voir aussi *Ajitāgama paṭala* 36, *śl.* 344.

[18] A, C : त्रिणेत्रान् pour त्र्यक्षान्  [19] A, F : अभयं वरदान्वितान्

टङ्कशूलसमायुक्तान्दक्षिणेऽदक्षिणे करे । [1]ध्यायेच्च परमेशानं [2]निरीक्ष्यतो द्विजोत्तम ॥ ५६ ॥
गन्धाद्यैरर्चयेत्सम्यग्हविष्यान्तं[3] विशेषतः । दिशास्वध्ययनं[4] कुर्यान्मन्त्राणि विदिशासु वै ॥ ५७ ॥

[होमः[5]]

पश्चाद्धोमं[6] तु कर्तव्यमनेन विधिना क्रमात् । [7]अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ॥ ५८ ॥

---

[1] A, C, F : ध्याययेत् pour ध्यायेच्च [2] A : निरीक्ष्यतन् pour निरीक्ष्यतो ; B : वीक्षणां च ; C : निरीक्षन्तां

[3] B : हविष्यन्तं ; C, F, G : हविषान्तं

[4] Pour plus de détails au sujet d'*adhyayana voir Ajitāgama* 18, 148.

[5] cf. *Diptāgama* 20, 168b- 172:

आचार्यो मूर्तिपैः सार्धं होमं कुर्याद्विशेषतः । समिदाज्यचरू लाजाः सक्तुसिद्धार्थमाषकाः ॥
यवनीवारश्रीपत्रतिलास्त्वेकदशा इमे । अश्वत्थोदुम्बरप्लक्षवटं पूर्वादिदिक्षु च ॥
शमीखदिरश्रीवृक्षमयूराश्च विदिक्षु च । पलाशं तु प्रधानस्य सर्वेषामिध्ममुच्यते ॥
स्वदिक्स्था मूर्तिपाः सर्वे सर्वसंभारसंयुताः ।

voir aussi *Ajitāgama* 18, 149-165.

[6] Le mot होम se trouve au neutre au lieu du masculin ; cf. *Rauravāgama* vol I, p. 69 note 6.

[7] cf. *Diptāgama* 20, 195-214:

शिवाग्निं जनयेत्पूर्वमाचार्यो विधिना सह । सोष्णीषः सोत्तरीयश्च दिव्यगन्धानुलेपनः ॥
शिवाग्नौ जनिते ह्येवं पश्चान्निक्षिप्य विष्टरम् । आवाहनादि यत्कर्म पूर्वोक्तविधिना सह ॥
शिवाग्नौ शिवमावाह्य पञ्चावरणसंयुतम् । भवश्च पूर्वदिग्भागे आग्नेय्यामुग्र एव च ॥
शर्वश्च दक्षिणे कुण्डे वामस्तु नैर्ऋते ततः । रुद्रश्च पश्चिमे भागे भीमो वै वायुगोचरे ॥
पशुपतिश्चोत्तरे कुण्डे ऐशान्यामीश एव च । त्रिणेत्राश्चतुर्भुजाश्चैव जटामकुटधारिणः ॥
कुण्डमध्ये न्यसेदेतांस्तद्बाह्ये वसवः स्थिताः । तद्बाह्ये मारुतश्चैव लोकपालाश्च तद्बहिः ॥
लोकपालविहीनं स्यान्मध्यमे होमकर्मणि । मरुतो वसवो हीनाः कन्यसे होमकर्मणि ॥
कुण्डाधिदेवताः सर्वे विन्यसेत्कुण्डमध्यमे । पाद्यादिदीपपर्यन्तमर्चयेत्तु विधानतः ॥
शिवमन्त्रं समुच्चार्य शिवाग्नौ जुहुयाच्छतम् । अन्येषां देवतानां च तत्तन्मन्त्रैर्दशाहुतिः ॥
ब्रह्माङ्गैश्च ततो हुत्वा प्रत्येकं तु शताहुतिः । त्रियम्बकेन मन्त्रेण समिदाहुतिमाचरेत् ॥
सहस्रं वा तदर्धं वा तदर्धार्धमथापि वा । शतमष्टोत्तरं वापि प्रत्येकं जुहुयात्क्रमात् ॥
आज्यं हुत्वा हृदा मन्त्री पूर्वसंख्याक्रमेण तु । घृतमिक्षेति मन्त्रेण जुहुयात्तत्संख्यया घृतम् ॥
चरुं हुत्वा तु सद्येन देवस्य त्वा चरुं हुनेत् । शिरसा लाजं हुत्वा तु एषामीशेति मन्त्रतः ॥
सक्तुं वामेन मन्त्रेण आपो राजेति मन्त्रतः । सिद्धार्थाञ्शिखया हुत्वा यो रुद्रस्तदनन्तरम् ॥
माषं हुत्वा तु घोरेण एष ते रुद्र मन्त्रतः । कवचेन यवं हुत्वा त्रियम्बकेनैव मन्त्रतः ॥
नीवारं पुरुषेणैव आप्यायस्वेति मन्त्रतः । अस्त्रेण जुहुयात्पत्रमप्सु मे सोम इत्यपि ॥
तिलान्हुत्वेशमन्त्रेण यतयत्तेति [यदस्येति च?] मन्त्रतः । द्रव्यान्ते व्याहृतिं हुत्वा स्पृशेल्लिङ्गस्य मस्तकम् ॥

समिदाज्य[1]चरूँल्लाजान्सक्तु[2]माषतिलानपि । [3]सिद्धार्थं गुलमुद्गं च कदलीफलमेव च ॥ ५९ ॥
[4]सद्याद्यस्त्रान्तकैर्मन्त्रैः प्रत्येकं तु शताहुतिः । [5]त्रियम्बकेन मूलेन [6]त्वाज्येनैव शताहुतिः ॥ ६० ॥
पञ्चाशद्बीजमुख्येन हुत्वा लिङ्गं तु संस्पृशेत् । स्तोत्रैर्मन्त्र[7]जपैर्गेयै रात्रिशेषं व्यपोह्य च ॥ ६१ ॥

[पूर्णाहुतिः[8]]

आचार्यो मूर्तिपैः सार्धं प्रभाते स्नानमाचरेत् । भस्मचन्दनलिप्ताङ्गः सकलीकृतविग्रहः ॥ ६२ ॥
लिङ्गं च कलशानग्निं[9] पूजयेत्तु क्रमाद्धृदा[10] । जयादिरभ्याधानं च[11] राष्ट्रभृच्चैव होमयेत् ॥ ६३ ॥
ब्रह्माङ्गैश्चैव विद्याङ्गैराज्येनैव दशाहुतिः । [12]स्विष्टमग्नेतिमन्त्रेण पूर्णाहुतिमथाचरेत् ॥ ६४ ॥

[आचार्यपूजा[13]]

आचार्यं पूजयेत्तत्र गो[14]भूमिकाञ्चनादिभिः । [15]मूर्तिपान्पूजयेत्पश्चाद्दैवज्ञं पूजयेत्ततः ॥ ६५ ॥

---

तदन्ते होमयेद्धीमान्गौरीब्रह्माङ्गविद्यया । गौरीगायत्रिमन्त्रेण गौरीमिमायेति मन्त्रतः ॥
हुत्वा हुत्वा स्पृशेत्पीठं पञ्चविंशतिसंख्यया । ब्रह्मजज्ञानमन्त्रेण हुत्वा ब्रह्मशिलां स्पृशेत् ॥
गर्भगेहस्य तन्मध्ये वास्तुहोमं समाचरेत् । पुण्याहं वाचयित्वा तु दद्यादर्घ्यं विशेषतः ॥
एकरात्रं द्विरात्रं वा त्रिरात्रं वाधिवासयेत् । एवं जागरणं रात्रौ नृत्तगेयसमन्वितम् ॥

[1] A : चरुं pour चरून्   [2] A : सक्थु pour सक्तु
[3] B : सिद्धाद्यङ्गुलमुद्गं च ; C, G : सिद्धार्थं गलपूगं च ; F : सिद्धार्थं गुलपूगं च
[4] C, F, G : सद्याद्यस्त्रान्तमन्त्रैश्च प्रत्येकाष्टोत्तरं शतम्   [5] C : त्र्यम्बकेन   [6] A omet तु
[7] C, F, G : मन्त्रैर् pour मन्त्र
[8] Cf. *Suprabheda* I 36, 106b-109a et 114b-115a:
आचार्यस्तु पुनः स्नात्वा मन्त्रसंनद्धविग्रहः । पुण्याहं वाचयित्वा तु स्नापयेत्पञ्चगव्यकैः ।
गन्धपुष्पादिना पूज्य कल्पयित्वा तथासनम् । आवाहयाराध्य मन्त्रज्ञः सकलीकरणं शिवम् ॥
मन्त्रसंतर्पणं कृत्वा पूर्णाहुतिमथाचरेत् । कुम्भपूजां विशेषेण कृत्वा विज्ञाप्य पूर्वकम् ॥
होमशेषं ततो नेयं हृदयेन विचक्षणः । कुम्भस्थदेवदेवेशं विज्ञाप्य विधिपूर्वकम् ॥
voir aussi *Ajita* 18, 166-170a.
[9] A, B : अग्नीन् pour अग्निं   [10] B : हृदि pour हृदा   [11] B : अभ्याधानैश्च
[12] *Taittirīyabrāhmaṇa* 2, 4, 1, 4
[13] cf. *Suprabhedāgama* I 36, 109b-114a:
आचार्यं पूजयेत्तत्र यथा विभवसंयुतम् । उष्णीषमुत्तरीयं च परिधानं तथैव च ॥
हेमाङ्गुलीयकैश्चैव गन्धपुष्पं तथैव च । मकुटं कुण्डलं चैव हारकेयूरकं तथा ॥
कटकं कटिसूत्रं च आचार्यस्य प्रदापयेत् । आचार्यदक्षिणा हेम कन्यसं दशनिष्ककम् ॥
मध्यमं द्विगुणं तस्य उत्तमे त्रिगुणं भवेत् । एकं संपूज्य विधिवत्सवत्सा गाश्च दापयेत् ॥
आचार्यमनसस्तुष्टिर्देवस्य प्रीतिकारणम् । मूर्तिपानां पृथग्वस्त्रैर्हैमनिष्कं च दापयेत् ॥
voir aussi *Ajitāgama*, 18, 269-276.
[14] B, C, G : भूमी pour भूमि   [15] C, G : मूर्तिमान्

[लिङ्गस्य गर्भगेहानयनम्[1]]

मुहूर्ते समनुप्राप्ते वेद्या[2] लिङ्गं समुद्धरेत् । सर्वालंकारसंयुक्तं सम्यक्कृत्वा प्रदक्षिणम् ॥ ६६ ॥

[3]प्रविश्य [4]गर्भगेहं च स्थाप्य लिङ्गं विशेषतः । [5]घृतशिरोऽर्पणं कुर्याद् गर्भगेहं [6]समाश्रयेत् ॥ ६७ ॥

[आधारशिलास्थापनम्[7]]

गर्भगेहस्य मध्ये तु किञ्चिदीशानमाश्रिताम् । स्थाप्याधारशिलां सम्यक्सुधया बन्धयेद्दृढम् ॥ ६८ ॥

[रत्नादिन्यासः[8]]

[9]माणिक्यादीनि रत्नानि मध्यादीनि क्रमान्न्यसेत् । सुवर्णकलशान्पुष्पं[10] [11]लोहधान्यादि धापयेत्[12] ॥६९

---

[1] cf. *Kāraṇāgama* I 59, 195b-201a :

मुहूर्तात्प्राप्तकाले तु सर्वातोद्यसमन्वितम् । शङ्खदुन्दुभिनादैश्च गीतनृत्तसमायुतम् ॥
ब्रह्मघोषसमायुक्तं नानाभक्तिसमन्वितम् । छत्रध्वजवितानैश्च धूपदीपैश्च संयुतम् ॥
वर्धन्याः स्रावसहितं मङ्गलाङ्कुरसंयुतम् । उद्धृत्य शयनाल्लिङ्गं वस्त्रादीनि व्यपोह्य च ॥
घृतं शिरोऽर्पणं कुर्याद्धेमदूर्वाङ्कुराक्षतैः । रथे वा शिबिकायां वा रज्जुयन्त्रेण वा पुनः ॥
उक्तालंकारसंयुक्तं कृत्वा धामप्रदक्षिणम् । पृष्ठतो यजमानस्तु पुत्रभ्रातृसमान्वितः ॥
आचार्यस्त्वग्रतो गच्छेदर्घ्यहस्तः समाहितः । विश्राम्य द्वारदेशे तु अर्घ्यं दत्त्वा विशेद्गृहम् ॥

voir aussi *Ajitāgama* 18, 202b-206.

[2] A : वेद्यां [3] C, F, G : प्रवेशं [4] B : गर्भगेहस्य [5] A, B : घृतं pour घृत

[6] B : समाचरेत् ; C, F, G : समविशेत्

[7] cf. *Suprabhedāgama* I 33, 114b-118:

समन्ताच्चतुरश्रास्तु ब्रह्मभागसमोन्नताः । अथवा चतुरश्रस्य चाष्टांशात्सप्तमोच्छ्रितः ॥
गर्भस्य नवभागैकं पादाधारशिला शुभा । तदर्धमेकमेवं वा तन्नवांशैकमुच्छ्रितिः ॥
चतुरश्रस्य चाष्टांशादेकांशं मध्यनिम्नगम् । लिङ्गतारप्रमाणेन खातविस्तारमानकम् ॥
नवनिम्नं तु तन्मध्ये रत्नन्यासार्थमुच्यते । ब्रह्मोपला समोत्तुङ्गा तत्ताराध्यर्धविस्तृता ॥
एवं कूर्मशिला सिद्धा सुदृढा चतुरश्रका ।

cf. *ibid.*, I 36, 87-88a:

आदौ कूर्मशिलां न्यस्त्वा ब्रह्मभागान्वितां दृढाम् । न्यसेद्ब्रह्मशिलामूर्ध्नि नन्द्यावर्तशिलान्विताम् ॥
स्थलं सम्यक् प्रकुर्वीत स्नेहद्रव्यान्वितं दृढम् ।

voir aussi *Ajitāgama* 18, 172-188

[8] cf. *Suprabhedāgama* I 36, 88b-93 :

माणिक्कं चैव वैडूर्यं नीलं मरकतं तथा । मौक्तिकं चैव गोमेदं वज्रं पुष्पं प्रवालकम् ॥
एतानि नवरत्नानि मध्यमादि विनिक्षिपेत् । यवनीवारमुद्गाश्च तिलो वै सर्षपस्तथा ॥
शालिप्रियङ्गुश्यामाश्च कुलुत्था नवबीजकम् । हरितालं तथा श्यामं चन्दनं च मनःशिलाम् ॥
सौराष्ट्रं पारतं सीसं गैरिकं हेममाक्षिकम् । एवं स्मृत्वा क्षिपेद्विद्वान्प्राणधात्विन्द्रियादिकम् ।
रत्नानि प्राणसंज्ञानि सुबीजानीन्द्रियाणि च । धातूनि धातवः प्रोक्ता बीजमुख्येन विन्यसेत् ॥
गन्धपुष्पादिनाभ्यर्च्य नन्द्यावर्तशिला न्यसेत्

voir aussi *Ajitāgama* 18, 189-199.

[9] B, E, F : माणिक्कादीनि [10] A : पुष्पान् pour पुष्पं [11] A : लोक pour लोह

[12] B : धान्यादिकं न्यसेत् ; C, F : धान्यानि धापयेत्

हृदयेन तु मन्त्रेण गन्धपुष्पादिभिर्यजेत् ।

[लिङ्गस्थापनम्[1]]

मुहूर्ते समनुप्राप्ते [2]वेद्यां लिङ्गं समुद्धरेत् ॥ ७० ॥

मूलमन्त्रेण लिङ्गं तु स्थापयेद्द्वार[3]दिङ्मुखम् । नन्द्यावर्तशिलां योज्य पिण्डिकां चैव योजयेत् ॥ ७१ ॥

[पिण्डिकालक्षणम्[4]]

पिण्डिकाश्ममयं वाथ मिश्रं सौधमथापि[5] वा[6] । [7]मिश्रे त्वधोऽम्बुजं सौधमुपर्यश्ममयं[8] भवेत् ॥ ७२ ॥

[9]सुधा चेदिष्टकागर्भं कारयेल्लक्षणान्वितम् । मोक्षदं[10] शैलजं पीठं मिश्रं स्याद्भोगमोक्षदम् ॥ ७३ ॥

---

[1] cf. *Kāraṇāgama* I 59, 201b-202 :
कालं निरीक्ष्य दैवज्ञो गुरवे संनिवेदयेत् । आचार्यो मूर्तिपैः सार्धं लिङ्गस्थापनमारभेत् ॥
पुरुहूते तु संस्थाप्य लिङ्गं तु द्वारसंमुखम् ।

cf. *Suprabheda* I 36, 101b :
नन्द्यावर्तशिलाभिस्तु बध्वा पीठं तु योजयेत् ।

voir aussi *Ajitāgama* 18, 206b-215 .

[2] A : वैशाल्लिङ्गं

[3] B : द्वारि pour द्वार

[4] cf. *Aṃśumatkāśyapa* 52, 2-3a:
शैलजे तु शिलापीठं सुधयेष्टकयापि वा । दारुजे दारुजं वाथ इष्टकामयमेव वा ॥
रत्नलोहादिलिङ्गानां स्वयोनिं लोहजं तु वा ।

cf. *Kāmikāgama* II 35, 1-9a :
पीठसंस्थापनं वक्ष्ये तल्लक्षणपुरःसरम् । लिङ्गायामविशालं तु पीठं सर्वार्थसाधकम् ॥
विष्ण्वंशसमतुङ्गं च छायादोषविवर्जितम् । पूजाभागोदयप्रान्तपीठनिर्गमनान्वितम् ॥
ईदृशं पीठमापाद्य को न सिध्येत मानवः । लिङ्गायामसमं वापि लिङ्गायामार्धमेव वा ॥
सप्तविंशतिमानानि षड्विंशत्यंशकेऽन्तरे । लिङ्गस्य तारत्रिगुणं भवेत्पञ्चगुणं तु वा ॥
तदन्तरे तदा भक्ते सप्तविंशतिमानकम् । लिङ्गमानवशात्पीठविस्तारं परिकीर्तितम् ॥
तिथ्यङ्गुलं समारभ्य व्योमाङ्गुलविवर्धनात् । षोडशाङ्गुलसंयुक्तं विंशकाङ्गुलकावधि ॥
हस्तादिनवहस्तान्तं लिङ्गानां पीठविस्तृतिः । लिङ्गायामाधिकः पीठविस्तारो नेष्यते द्विजाः ॥
अग्रमूलसमं वास्य हीनमूलं तु नेष्यते । षडंशात्षोडशांशान्तं कृत्वा मूलविशालकम् ॥
एकांशेनाग्रविस्तारं पीठं वा परिकीर्तितम् ।

voir aussi *Ajitāgama* 16, 1-8.

[5] A : अथोपि pour अथापि

[6] C omet वा

[7] A : मिश्रे द्वयोम्बुजं ; B : मिश्रे द्वयेऽम्बुजं

[8] C : अश्रमयं pour अश्ममयं

[9] B : सुधा चेदिष्टिकागर्भं ; C, G : सयं चेदिष्टिकागर्भं ; F : सौधवेदीष्टिकागर्भं

[10] B : मोक्षजं

## BHAḌRAPĪṬHA.

| | |
|---|---|
| GHṚTAVĀRI | 1 |
| PAṬṬIKĀ | 2 |
| KAMPA | 1 |
| KAṆṬHA | 3 |
| KAMPA | 1 |
| KUMUDA | 3 |
| JAGATĪ | 4 |
| UPĀNA | 1 |

सौम्यजं भोगदं ख्यातं विष्णुभागसमोन्नतम्[1] । [2]लिङ्गतारत्रयं [3]व्यासं लिङ्गनाहसमं तु वा ॥ ७४ ॥
ब्रह्मांशेतरलिङ्गानां लिङ्गनाहं [4]तथोन्नतम् । [5]भद्रपीठं पद्मपीठं द्विविधं पीठलक्षणम् ॥ ७५ ॥

[भद्रपीठम्[6]]

पीठोदये कलांशे तु [7]व्योमांशं स्यात्पुरोदयम्[8] । [9]जगत्युच्चं तु [10]वेदांशं गुणांशं [11]कुमुदोदयम् ॥ ७६ ॥
[12]कम्पमंशेन कर्तव्यं गलमानं गुणांशकम् । ऊर्ध्वकम्पं [13]शिवांशं स्याद्दिग्भाग[14] पट्टिकोदयम् ॥ ७७ ॥
व्योमांशं घृतवारि[15] स्यादुत्तदुच्चं [16]नीव्रवेशकम् । पीठव्यासेऽग्निभागांशं[17] नालव्यासं च नीव्रकम्॥७८
[18]तत्त्रिपादं घनं विद्यान्मध्ये [19]धारासमन्वितम् । भद्रपीठमिदं ख्यातम्;

[पद्मपीठम्[20]]

पद्मोच्चं तु कलांशकम् ॥ ७९ ॥

---

[1] B : समन्वितम् pour समोन्नतम्     [2] C, F et G omettent les demi-*śloka* 74b et 75a

[3] B : वाथ     [4] B : ततो नतम्

[5] A : पद्मपीठं द्विद्विविधं विविधं पीठलक्षणम् ; B : पद्मपीठं च द्विविधं विविधं पीठलक्षणम् ; C, F, G : पद्मपीठं महापीठं विविधं पीठलक्षणम्

cf. *Suprabheda* I 32, 97 :

पद्मपीठं भद्रपीठं वेदिका परिमण्डलम् । पीठं चतुर्विधं प्रोक्तम्"

voir aussi *Ajita* 16, 9-10.

[6] cf. *Amśumatkāśyapa* 52, 33-38:

"भद्रपीठमथोच्यते ।
कृत्वा तु षोडशोत्सेधं भागेनोपानमुच्यते । जगत्युच्चं तु वेदांश गुणांशं कुमुदोदयम् ॥
शिवांशं पट्टिकामानं कण्ठमानं गुणांशकम् । तदूर्ध्वकम्पमेकांशं द्विभाग पट्टिका भवेत् ॥
शश्यंशं घृतवारि स्यादेतत्तु भद्रमुच्यते । पीठोच्चे तु कलांशे तु द्विभागं पट्टिकोदयम् ॥
गुणांशं जगतीमानं कुमुदोच्चं तु तत्समम् । व्योमांशं कम्पमानं तु कण्ठमानं द्विभागधा ।
तस्योर्ध्वकम्पमेकांशं गुणांशा पट्टिका भवेत् । एकांशं घृतवारि स्यादेतद्भद्रकमुच्यते ॥
भद्रमेवं द्विधा ख्यातम्"

voir aussi *Ajitāgama* 16, 11-13.

[7] A : व्यामांशं ; C, F, G : व्योमांशः     [8] C, G : पुरोमतम् ; E : पुरोमदम् ; F : पुरोत्स्मः

[9] A : गजत्युच्चं ; B : गजत्युच्चे     [10] C, E, F, G : वेदाङ्गं

[11] A : क्रमृतोदयम् ; B : क्रमतोदयम् ; C : क्रमुदोदयम्

[12] A : कूपदंशेन ; B : तुपदंशेन ; C, F, G : कूपमंशेन     [13] C, F, G : गुणांशः स्यात्

[14] B : यार्ग pour भागं     [15] A : वारी pour वारि     [16] B : निप्र pour नीव्र ; C E : नीप्र

[17] A : भागेंशं pour भागांशं ; B : भागे तु     [18] A : च निव्रकम् ; B : निवृत्तकम्     [19] F : तारा pour धारा

[20] cf. *Kāmikāgama* II 35, 37-38:

षोडशांशे तदुत्सेधे द्विपादं पादुकं भवेत् । शरांशं पद्ममानं स्याद्द्विभागं वृत्तमुच्यते ॥
वेदांशमूर्ध्वपद्मं स्यादग्निन्यंशेन पट्टिका । घृतवार्यंशमानं स्यात्पद्मपीठमिदं मतम् ॥

voir aussi *Ajitāgama* 16, 30b-32.

कृत्वाक्षांशमुपानोच्चं [1]सौधपद्मं [2]रसांशकम् । [3]कर्णवेशो द्विकांशः स्यादूर्ध्वपद्मं शरांशकम्[4] ॥ ८० ॥
शिवांशं [5]घृतवारि स्याच्छेषं प्रागिव [6]कल्पयेत् । [7]कृत्वा तु पिण्डिकामेवमष्टबन्धं[8] सुयोजयेत् ॥८१॥

[लिङ्गपीठशुद्धिः[9]]

लिङ्गपीठस्थलं चैव [10]शुद्धिं कृत्वास्त्रमन्त्रतः । [11]पुण्याहप्रोक्षणं कृत्वा [12]ततोऽपि स्नानमाचरेत् ॥ ८२

[कुम्भाभिषेकः[13]]

[14]वेद्यास्तु [15]कुम्भानुद्धृत्य [16]बाह्यधामप्रदक्षिणम् । लिङ्गाग्रे स्थापयेत्कुम्भान्पूर्ववत्स्थापनक्रमात्[17] ॥
प्रागेव तु घटे [18]तस्मिन्बाल[19]लिङ्गान्महेश्वरम् । मनोन्मनीं च विधेशानावाह्यार्चनमाचरेत् ॥ ८४ ॥

---

[1] Une meilleure lecture semble être अध:पद्मं au lieu de सौधपद्मं

[2] B : शरान्तकम्

[3] A : कर्णे वेशत्रद्वौकाशं स्याद् ; B : कर्णे वेश द्विकाशं स्याद् ; C : कर्णवेत्रं द्वितीयं स्यात् ; E : कण्ठवेत्रं द्वितीयं स्याद्

[4] B : ऊर्ध्वपद्मं शरान्तकम् ; C, E: ऊर्ध्वकंपाशकांशकम् ; F : ऊर्ध्वकम्पं शतांशकम्

[5] A : कृत pour घृत [6] A : कल्पितम्

[7] A : पिण्डिकामेकं कृत्वा तु मुष्टिबन्धं ; E, F : पिण्डिकामयमेवं च अष्टबन्धं

[8] Pour plus de détails au sujet d'*aṣṭabandha* voir *Kāraṇāgama* I 136, 16-19:

आर्द्रीकृत्याष्टबन्धं तु बन्धयेल्लिङ्गपीठयो: । कार्पासतूलकं चैव महिषाज्यं तु शर्करा ॥
लाक्षाचूर्णं मधूच्छिष्टं कुन्दुरुष्कस्य चूर्णकम् । काषायचूर्णं गौलं च द्रव्यं स्यादष्टबन्धने ॥
एकभागं तु कार्पासं महिषाज्यं तु तत्समम् । शिलाचूर्णं चतुर्भागं लाक्षा च ह्येकभागकम् ॥
भागार्धं तु मधूच्छिष्टं कुन्दुरुष्कं द्विभागकम् । काषायचूर्णमेकार्धमेकार्धं गुलमुच्यते ॥

voir aussi *Ajitāgama* 18, 216-218.

[9] cf. *Kāmikāgama* I 64, 161b-162:

पुण्याहं वाचयित्वा तु लिङ्गपीठे तु शोधयेत् । शान्तिकुम्भस्य तोयैश्च देवेशमभिषेचयेत् ॥
शिल्प्यादिस्पर्शशान्त्यर्थं भवेदेतद्द्विजोत्तमा: ।

cf. *Ajitāgama* 18, 220-223a.

[10] C, F, G : शुद्धि pour शुद्धं [11] A : पुण्याहं प्रोक्षणं [12] B : ततत्स्नपनमाचरेत्

[13] cf. *Kāmikāgama* I 64, 172-173 et 180-181a:

कुम्भान्सर्वान्समानीय वेदिकोपरि संस्थितान् । सर्वमङ्गलसंयुक्तं कृत्वा ग्रामप्रदक्षिणम् ॥
स्थण्डिले त्वप्रक्लृप्ते तु पूर्ववद्विनिवेशनम् । कुम्भाद्बीजं समादाय लिङ्गमूर्धनि विन्यसेत् ॥
जलेन कुम्भवर्धन्यो: स्नापयेल्लिङ्गपिण्डिके । विधेश्वरघटस्थाणून्पीठे पूर्वादितो न्यसेत् ॥
तत्कुम्भस्थतोयेन स्नापयेत्परमेश्वरम् ।

voir aussi *Ajitāgama* 18, 223b-237.

[14] A : वेद्यां तु [15] C : कुम्भम् pour कुम्भान् [16] C : बाह्यायाम pour बाह्यधाम

[17] A : स्थापनं क्रमात् ; B : स्नपनं क्रमात् [18] C, F, G : तस्मिन् [19] B : लिङ्गं pour लिङ्गाद्

# PADMAPĪṬHA



तद्घटाद्बीजमानीय लिङ्गमध्ये तु योजयेत् । तदा ध्यानसमायुक्तं हृदा मूलं सुयोजयेत् ॥ ८५ ॥
मनोन्मनीं च वर्धन्यां वामपीठे तु योजयेत् । ततो [1]विद्येशकलशे विद्येशान्परितो न्यसेत् ॥ ८६ ॥
तत्तद्घटाम्बुभिस्तत्तन्मूर्ति[2]मेवाभिषेचयेत् । [3]परिवारं ततः स्थाप्य महापीठं च विन्यसेत् ॥ ८७ ॥
आसनावाहनादीनि [4]चार्चनोक्तवदाचरेत् । महाहविश्च दत्वा तु ताम्बूलं च निवेदयेत् ॥८८ ॥
स्थापनं तत्र कुर्वीत यथाविधिपुरःसरम् ।

[लिङ्गप्रतिष्ठाफलम्[5]]

एवं यस्तु विधानेन स्थापयेल्लिङ्गमादरात् ॥ ८९ ॥
[6]कुलैकविंशमुक्तात्मा शिवलोके स मुच्यते ॥ ९० ॥

इति [7]श्रीमद्रौरवतन्त्रे[क्रियापादे][8]लिङ्गस्थापनविधिर्नाम अष्टाविंशः पटलः

---

[1] A : विद्येशकलशान्विद्येशान् सकलान् यजेत् ; C, G : विद्येश्वरान् कालान् विद्येशान् परितो यजेत्

[2] A : तत्र मूर्ति pour तत्तन्मूर्ति [3] A : परीवार [4] A omet च

[5] Cf. *Kāraṇāgama* I 59, 1-2a :
अथ वक्ष्ये विशेषेण लिङ्गस्थापनमुत्तमम् । धन्यं यशस्करं चायुर्वर्धनं पुत्रवृद्धिदम् ॥
भुक्तिदं मुक्तिदं सर्वदानयज्ञफलप्रदम् ॥
cf. *Ibid* II 21, 1 :
अथातः संप्रवक्ष्यामि सर्वलोकहिताय च । राजराष्ट्राभिवृद्ध्यर्थं शिवस्थापनमुत्तमम् ॥
cf. *Cintyāgama* 20, 64a :
एवं यः स्थापयेल्लिङ्गं स पुण्यां गतिमाप्नुयात् ।
Voir aussi *Ajitāgama* 18, 288b-292.

[6] A, B : कुलैकविंशमुक्ताभिः ; une meilleure lecture semble être कुलैकविंशयुक्तात्मा शिवलोके महीयते

[7] B omet श्रीमद्रौरवतन्त्रे

[8] A : लिङ्गस्थापनविधिपटलस्त्रिंशः ; B : लिङ्गस्थापनविधिर्नाम त्रिंशः पटलः ; C, G : लिङ्गस्थापनविधिर्नाम चतुर्थः पटलः; E : लिङ्गस्थापनविधिश्चतुर्थः ; F : लिङ्गस्थापनपटलश्चतुर्थः

# [एकोनत्रिंशः पटलः]

## [पिण्डिकास्थापनम्[1]]

अतः परं प्रवक्ष्यामि पिण्डिकास्थापनं परम् । प्रागुक्तलक्षणोपेतं पीठं कुर्यात्तु शैलजम्[2] ॥ १ ॥

[आधारशिला[3]]

तत्पीठव्याससदृशं [4]नन्द्यावर्त[5]शिलोदयम्[6] । लिङ्गव्याससमं[7] मध्ये [8]गाधं [9]युक्तं तु कल्पयेत् ॥ २ ॥
नन्द्यावर्तशिलाश्चैव[10] चतस्रः[11] परिकल्पयेत् । ईशानाग्रानलाग्रं च [12]वारुणे सौम्यकेऽग्रकम्[13] ॥३ ॥

---

[1] Pour पिण्डिकास्थापनविधि voir *Aṃśumatkāśyapa* 96, *Aṃśumadāgama* 56, *Acintyaviśvasādākhya* 71, *Kāmikāgama* II 32 et 35, *Kāraṇāgama* I 131, *Dīptāgama* 59, *Vīrāgama*, 70, *Suprabhedāgama* I 54 et *Sūkṣmāgama* 64.

[2] Pour पिण्डिकालक्षण voir le dernier *paṭala* (लिङ्गस्थापनविधि) *śl.* 72-81.
cf. *Kāraṇāgama* I 9, 140b-146 et 165-166:

"पीठमथ शृणु ।
स्त्रीशिलां तु परिग्राह्य पीठं कुर्याद्विशेषतः । लिङ्गविस्तारमानेन त्रिगुणं पीठविस्तृतम् ॥
कर्णाद्द्विगुणमेवं वा त्रिगुणं पीठविस्तृतम् । कर्णस्य द्विगुणार्धं वा लिङ्गदैर्घ्यसमं तु वा ॥
गर्भगेहं त्रिधा भज्य भागैकं पीठविस्तृतम् । लिङ्गमानेन हर्म्यं स्याल्लिङ्गमानेन पिण्डिका ॥
पूर्वाकृतिर्यथा पीठं तथा कुर्यात्पुनः पुनः । अन्याकृतिर्न कर्तव्या कृता चेत्कर्तृनाशिनी ॥
वेदाश्राष्टाश्रमानं तु विभजेदष्टधा पुनः । गुणभागमधस्त्यक्त्वा बाणांशं पीठिकोच्छ्रयम् ॥
ब्राह्मयवैष्णवमानं तु षोडशांशेन भाजयेत् । सप्तभागमधो मुक्त्वा ग्रहांशं पिण्डिकोच्छ्रयम् ॥
भागार्धं तत्त्रिपादं वा समं वा शेषनिर्गमम् । मूलादष्टांशमग्रे तु हीनं स्यात्पद्मपीठके ।
सर्वेषामेव पीठानामुपानात्पीठविस्तरम् । पीठिकालक्षणं प्रोक्तम्"

voir aussi *Ajitāgama* 16,1-10 et 46-52

[3] cf. *Suprabhedāgama* I 33, 111-119a:

लिङ्गस्य पीठिका चेत्तु मध्येऽष्टाश्रकमान्वितम् । अवटं कारयेद्धीमान्विष्णुभागसमं यथा ॥
ब्रह्मभागप्रवेशार्थं तन्मानाच्चतुरश्रकम् । घृतवारिघटान्नालं सकले त्वासनं विना ॥
नन्द्यावर्तशिलां वक्ष्ये पीठाधस्ताच्चतुश्शिला । परितस्तालमात्रं वा षडङ्गुलमथापि वा ॥
पीठविस्तारतोऽधिक्या नन्द्यावर्तशिलाः शुभाः । समन्ताच्चतुरश्रास्तु ब्रह्मभागसमोन्नताः ॥
अथवा चतुरश्रस्य चाष्टांशात्सप्तमोच्छ्रितिः । गर्भस्य नवभागैकं पादाधारशिला शुभा ॥
तदर्धमेकमेवं वा तन्नवांशैकमुच्छ्रितिः । चतुरश्रस्य चाष्टांशादेकांशं मध्यनिम्नगम् ॥
लिङ्गतारप्रमाणेन खातविस्तारमानकम् । नवनिम्नं तु तन्मध्ये रत्नन्यासार्थमुच्यते ॥
ब्रह्मोपलासमोत्तुङ्गा तत्ताराध्यर्धविस्तृता । एवं कूर्मशिला सिद्धा सुदृढा चतुरश्रका ॥
एवमुक्तास्तु सर्वाङ्गाः किंचिन्मानाधिकास्तु वै ।

voir aussi *Ajitāgama* 18, 172-179

[4] B : नन्द्यावर्तं pour नन्द्यावर्त  [5] C, F, G : शिलोरकम् pour शिलोदयम्

[6] C, F et G ajoutent le demi-*śloka* : ब्रह्मभागोच्चसदृशं नन्द्यावर्तशिलोदयम्

[7] A : समो pour समं  [8] A, B : गाढं  [9] C, F, G : युक्त्या  [10] A, B : शिलां चैव pour शिलाश्चैव

[11] A : चत्वारः ; B : चतुरः  [12] B : पारुणे  [13] A, B : गृहम् pour अग्रकम्

नन्द्यावर्तशिलादेवाः[1] प्रोच्यन्ते[2] स्थापनक्रमात् । तद्व्याससदृशं ब्रह्म[3]शिलाव्यासमुदाहृतम् ॥ ४ ॥
[4]तद्व्यासाग्न्यंशकेशं स्याद्वेदांशेऽशं तु चोन्नतम् । लिङ्गव्याससमं मध्ये [5]निम्नमर्धाङ्गुलं तु वा ॥ ५ ॥
[6]गुणाक्षियवमानं वा [7]गाधं तु समतां नयेत् । [8]रत्नन्यासार्थमत्रैव निम्नं रत्निप्रमाणतः[9] ॥ ६ ॥

[जलाधिवासः[10]]

[11]कृत्वैवं [12]पञ्चगव्यैश्च स्नाप्य [13]पीठादि संस्कृतम् । जलाधिवासनं कुर्यान्नाभिमात्रे जले बुधः ॥ ७ ॥
चतुर्गात्रसमायुक्तां[14] प्रपां [15]कृत्वातिसुन्दराम्[16] ।

[मण्डपः[17]]

प्रासादस्याग्रतो [18]वैशे सौम्ये वा मण्डपं कुरु ॥ ८ ॥
नवहस्तविशालं तु कलास्तम्भसमन्वितम् । सर्वालंकारसंयुक्तं [19]मध्येऽग्न्यंशेन वेदिका ॥ ९ ॥
[20]विशालं [21]तत्त्रिभागैकमुत्सेधं सोपवेदिकम् । [22]महाशास्वीशकोणे [23]च योनिकुण्डानि कल्पयेत् ॥ १०
उत्तरे स्नानवेदिं[24] च युक्त्या तु परिकल्पयेत् । गोमयालेपनं कृत्वा पुण्याहप्रोक्षणं कुरु ॥ ११ ॥

---

1 C, F, G : वेदाः pour देवाः 2 A, B, C : प्रोच्यते 3 A : तिल pour शिला
4 A : तद्व्द्वयंशकेशं स्याद् ; B : तद्व्यंशकं प्रशस्यं स्याद् 5 B : निम्नं मध्याङ्गुलं तु वा
6 B : गुणाक्षयावमानं वा ; C : गुणाक्षयसमानं वा ; F : गुणाक्षयसमानं वा
7 A : भार्सं pour गाधं 8 A : कर्तव्या सार्धमन्त्रैव ; C, G : रत्नन्यासार्धमन्त्रैर्वा
9 F : प्रमाणकम् pour प्रमाणतः
10 cf. *Kāmikāgama* II 35, 121-124 :
प्राग्वत्संस्नाप्य देवीं तु वस्त्रगन्धादिनार्चयेत् । प्रदक्षिणं नयेद्ग्रामे जलतीरे निवेश्य च ॥
स्थण्डिलं तत्र निक्षिप्य स्थापयेत्तत्र पिण्डिकाम् । कलशान्स्थापयेदष्टौ लोकपालाधिपान्क्रमात् ॥
देवीं च कलशानिष्ट्वा लम्बकूर्चसमन्वितान् । नववस्त्रपरिच्छन्नां फलकोर्ध्वे जलान्तरे ॥
स्थापयेदभितोऽष्टौ तु कलशान्सूत्रसंयुतान् । पिधानाम्बरहैमांस्तान्सकूर्चाञ्शक्त्यधिष्ठितान् ॥
11 B : कृत्वा तु 12 C, G : पञ्चगव्यस्थं स्नाप्य ; F : पञ्चगव्यैस्संस्नाप्य
13 A : पीठादयो स्मृतः ; B : पीठादयः स्मृताः ; C, G : पीठादयो स्मृताः
14 A, B : युक्तं pour युक्तां 15 B : कृत्वा तु pour कृत्वाति 16 F : सुन्दरम् pour सुन्दराम्
17 cf. *Vīrāgama* 70, 2b-5a et 17:
प्रासादस्याग्रतः कुर्यान्मण्टपं चतुरश्रकम् । पञ्चसप्ताष्टहस्तं वा नवहस्तमथापि वा ॥
स्तम्भैः षोडशभिर्युक्तं चतुर्द्वारसमन्वितम् । मध्यमे वेदिकां कुर्यात्तालमात्रसमुच्छ्रयाम् ॥
वितानध्वजमाच्छाद्य दिग्ध्वजैश्च प्रलम्बितम् । दर्भमालाभिरावेष्ट्य तोरणैरुपशोभितम् ॥
यावदश्रं भवेत्पीठं तावदश्रं तु कुण्डकम् । वृत्तपीठस्य हे ब्रह्मन्वृत्तकुण्डमिहोच्यते ॥
18 B : याशे pour वैशे 19 A : मध्येऽग्न्यैशोपवेदिका 20 B omet le demi-*śloka* 10a
21 A : तत्र pour तत्त्रि 22 A : महेशा pour महाशा 23 A : कोणेश pour कोणे च
24 B, F : वेदीं pour वेदिं

## [शयनाधिवासः[1]]

स्थण्डिलं शालिभिः कुर्या[2]त्तण्डुलैस्तिललाजकैः । दर्भैः पुष्पैः परिस्तीर्य [3]फलकां चोपरि न्यसेत्॥१२॥
शयनं [4]कल्पयेत्तस्मिन्नववस्त्रैर्विशेषतः । जलात्पीठं समानीय स्नानवेद्यां निधापयेत् ॥ १३ ॥
गव्यैर्गन्धोदकैश्चैव [5]त्वभिषिच्यास्त्रमन्त्रतः । हृदा गन्धादिभिर्यष्ट्वा[6] [7]कण्ठे प्रतिसरं कुरु ॥ १४ ॥
[8]शयने शाययेत्पीठं प्राङ्मुखोत्तरयोनिकम् । शांकरादिषु तद्बाह्ये [9]नन्द्यावर्तशिला[10] न्यसेत् ॥ १५ ॥
[11]गन्धाद्यैस्तु हृदाभ्यर्च्य रक्तवस्त्रेण वेष्टयेत् ।

## [कुम्भस्थापनम्[12]]

नवसंख्यान्नवान्कुम्भान्सूत्रादिभिः समन्वितान् ॥ १६ ॥
नानागन्धाम्बुसंपूर्णान्वेद्यां तु स्थापयेत्क्रमात् । [13]पीठस्य [14]शांकरे प्राच्यां [15]पृष्ठे प्रधानकुम्भकम् ॥१७॥
शक्रादिषु क्रमात् [16]स्थाप्य चान्यकुम्भानि[17] देशिकः । गौरीं प्रधानकुम्भे तु [18]वामादीनन्यकुम्भके ॥ १८

---

[1] Cf. *Virāgama* 70, 5b-6a :
शालिभिर्विकिरेत्तत्र तण्डुलैश्च तिलैस्तथा । पञ्चभिः कम्बलैर्युक्तं पीठं तस्योपरि न्यसेत् ॥

[2] A : स्थण्डिलैस् pour तण्डुलैस्

[3] A : फलकां च परिन्यसेत् ; le mot फलक se trouve ici au féminin au lieu du masculin.

[4] B : कल्पयेद्धीमान्

[5] A omet तु

[6] voir *Ajitāgama*, vol I, p. 218 note 3.

[7] A : कर्णे [8] B : शयनं [9] B : नन्द्यावर्तं pour नन्द्यावर्त [10] A : शिलां pour शिलाः

[11] A, B : गन्धाद्यैः स्वहृदाभ्यर्च्य

[12] cf. *Kāmikāgama* II 35, 146-153:
" तद्देशे करकं न्यसेत् ।
सूत्रवस्त्रपरिच्छन्नं नवरत्नोदरं भवेत् । सहेमपङ्कजं कूर्चफलपल्लववक्त्रकम् ॥
तन्मध्ये सासनां देवीमर्चयेद्गन्धसंमुखैः । वर्धनीरष्टसंख्याताः कूर्चवस्त्रससूत्रकाः ॥
सहेमाः पल्लवोपेताः सापिधानाः फलोद्वहाः । वामाद्यधिष्ठिता बाह्ये परितो विनिवेशयेत् ॥
गन्धाद्यैरर्चयित्वा तु पिण्डिकां वर्धनीमपि । तत्त्वतत्त्वेशसंयुक्तां मूर्तिमूर्तीश्वरीं न्यसेत् ॥
कर्णस्याधो गले कर्णादूर्ध्वे तत्त्वत्रयं न्यसेत् । क्रिया ज्ञानं तथेच्छेति त्रितत्त्वेशाः प्रकीर्तिताः ॥
धारिका दीप्तिमत्युग्रा ज्योत्स्ना चेता बलोत्कटा । धात्रीविधीति मूर्तिभ्यः परिभाव्य क्रमेण तु ॥
पञ्चपक्षेऽथवा प्राह्यं त्वत्रानुक्तं तु यद्भवेत् । लिङ्गसंस्थापनप्रोक्तविधिनाखिलमाचरेत् ॥
चन्दनाद्यैः समभ्यर्च्य होमकर्म समारभेत् ।

[13] C, G : पिण्डस्य [14] A : शांकरो [15] A : कृष्टे ; E, F : त्रिष्टे

[16] A : स्थाप्य मर्त्य pour स्थाप्य चान्य ; B : स्थाप्य मध्ये ; C : स्थाप्यमन्य ; F : स्थाप्यान्य

[17] Le mot कुम्भ se trouve ici au neutre au lieu du masculin

[18] A : वामादीनान्यकुम्भकैः ; B : वामादीनां तु कुम्भकैः ; C : वामादीशान्यकुम्भकैः

ध्यानमन्त्रसमायुक्तं [1]हविरन्तं समर्चयेत् ।

[होमः[2]]

[3]पश्चाद्धोमं प्रकर्तव्यमनेन विधिना क्रमात् ॥ १९ ॥
अग्न्याधानाधिकं [4]सर्वमग्निकार्योक्तमाचरेत् । वञ्जुलं [5]खादिराश्वत्थवटं [6]शक्रान्महादिशि ॥ २० ॥
[7]पालाशं स्यात्प्रधानस्य [8]कथ्यन्ते समिधः क्रमात् । समिदाज्यौदनं [9]मुद्गतिलसर्षपमाषकम्[10] ॥ २१ ॥
अपूपं [11]लाजाः सक्तुश्च [12]क्षौद्रं यथाक्रमेण तु । गौर्यास्तु [13]पञ्चब्रह्माङ्गैः प्रत्येकं तु शताहुतिः ॥ २२ ॥
[14]गौरीमिमायमन्त्रेण गौरीगायत्रिमन्त्रतः[15] । घृतेन जुहुयाद्धीमान्प्रत्येकं पञ्चविंशतिः ॥ २३ ॥
[16]बीजमुख्येन मन्त्रेण स्पृष्ट्वा स्पृष्ट्वा दशाहुतिः । एवं तु जागरं[17] रात्रौ प्रभाते विमले शुभे ॥ २४ ॥
आचार्यो मूर्तिपैः [18]स्नात्वा सकलीकृतविग्रहः । [19]पिण्डिकां [20]कलशानग्निमभ्यर्च्य विधिना ततः ॥ २५ ॥
ततो जयादिभिर्हुत्वा ब्रह्माङ्गैश्च दशाहुतिः । [21]गौरीगायत्रिमन्त्रेण पूर्णाहुतिमथाचरेत् ॥ २६ ॥

[जीर्णपिण्डिकाविसर्जनम्[22]]

आचार्यादीन्समभ्यर्च्य वस्त्रैर्धान्यैर्धनैरपि । गर्भगेहं प्रविश्याथ विसृजेज्जीर्णपिण्डिकाम् ॥ २७ ॥

---

[1] B : हविषान्तं

[2] cf. *Virāgana* 70, 48b-57a:
ततो होमं प्रकुर्वीत लक्षणेन समन्वितम् । पलाशखदिराश्वत्थप्लक्षन्यग्रोधमेव च ॥
उदुम्बरमपामार्गं खदिरं च विशेषतः । पूर्वादीशानपर्यन्तं क्रमेण परिकीर्तितम् ॥
ईशान इन्द्रयोर्मध्ये शमीं चैव तु विन्यसेत् । अष्टोत्तरशतं चैव पञ्चाशत्पञ्चविंशतिः ॥
सर्वेषां चैव होमानां पलाशेध्ममिहोच्यते । समिदाज्यचरूँल्लाजान्मुद्गमाषांश्च सर्षपान् ॥
समिधं सद्यमन्त्रेण वक्त्रेणाज्यं तथैव च । अघोरेण चरुं हुत्वा लाजान्वामेन होमयेत् ॥
नेत्रेणैव तु मुद्गं स्यान्माषे हृदयमुच्यते । ईशानेन तु मन्त्रेण सर्षपं चैव होमयेत् ॥
प्रासादेन तु मन्त्रेण प्रत्येकं पञ्चविंशतिः । गौरीबीजेन मन्त्रेण प्रत्येकं पञ्च विंशतिः ।
सर्वद्रव्यसमायुक्तं हव्यवाहं समुच्चरन् । स्विष्टमग्नेति मन्त्रेण जुहुयात्तदनन्तरम् ॥
जयादिरभ्याधानं च राष्ट्रभृच्चैव होमयेत् । हुतान्ते तु यदस्येति स्विष्टकृद्धूयते क्रमात् ॥

[3] C, F, G : पश्चाद्धोमं तु कर्तव्यम् ; le mot होम se trouve ici au neutre au lieu du masculin

[4] B : सर्वमग्निकार्यक्रमाच्चरेत्   [5] A : खदिर pour खादिर   [6] B : शक्र pour शक्रान् ; C : शंख

[7] B : पलाशं   [8] B : कथिताः   [9] A : मुद्रं pour मुद्ग   [10] A : माषकाः pour माषकम्

[11] A : लाजसक्तुश्च pour लाजाः सक्तुश्च   [12] B : क्षौद्रं चैव यथाक्रमम्   [13] A, B, C : ब्रह्मपञ्चाङ्गैः

[14] **गौरीमिमाय** cf. *Taittriyāraṇyaka* I 1, 37 ; **गौरीगायत्री** ओं महादेव्यै च विद्महे रुद्रपत्नी च धीमहि तन्नो गौरी प्रचोदयात् (*Yogajāgama* T. No. 161, p. 38)

[15] L'ordre des *śloka* dans le ms. B est le suivant: 24b, 25, 23, 24a, 26 etc.

[16] A, B : बीजमन्त्रेण मुख्येन   [17] "कृत्वा" इति शेषः   [18] C, G : सार्धं pour स्नात्वा

[19] A : पिण्डिकात्   [20] C, F, G : कलशानग्नीन्   [21] C : गौरि ponr गौरी

[22] cf. *Virāgama* 70, 26b-29:
ततः प्रभाते विमले सुमुहूर्ते सुलग्नके । आचार्यं पूजयित्वा तु शिल्पिनं पूजयेत्ततः ॥
पश्चाद्गर्भगृहं गत्वा आचार्यः शिल्पिना सह । मृण्मयं वृषभं कुर्यात्सुवर्णखुरशृङ्गकम् ॥
वृषगायत्रिमन्त्रेण प्रासादेन समन्वितम् । वृषभस्य तु शृङ्गेण कर्षयेत्पीठमेव च ॥
पीठं विसर्जयेत्तत्र जलमध्ये तु निक्षिपेत् ।

[पिण्डिकास्थापनम्[1]]

[2]वज्रबन्धाष्टबन्धं वा[3] [4]सुधापाकं परिस्तरेत् । नन्द्यावर्तशिलां योज्य [5]बन्धोर्ध्वे पङ्कमालिपेत् ॥ २८
मुहूर्ते समनुप्राप्ते सर्वालंकारसंयुतम् । [6]वेद्यास्तु पीठमुद्धृत्य शनैर्गर्भगृहं विशेत् ॥ २९ ॥
युक्त्या पीठं समुद्धृत्य लिङ्गस्य [7]मूर्धमार्गतः । शनैः सुयोजयेत्पीठं नालमुत्तरगं[8] विदुः ॥ ३० ॥ 14
गन्धद्रव्येण सुदृढं विवरं तु [9]निवर्तयेत् । शिलाभिर्वेष्टकाभिर्वा[10] स्थलं दृढतरं कुरु ॥ ३१ ॥

[कुम्भाभिषेकः[11]]

शुद्धिं कृत्वा तु [12]गव्यैश्च पुण्याहप्रोक्षणं कुरु । [13]वेद्यास्तु कुम्भानानीय पीठाग्रे तु निधापयेत् ॥ ३२ ॥
कुम्भाद्बीजं समानीय [14]पीठकण्ठे तु योजयेत् । तज्जलैरभिषिच्याथ परितोऽष्टघटैरपि ॥ ३३ ॥
संस्नाप्य स्नपनं कृत्वा चार्चनोक्तं [15]समाचरेत् । [16]प्रभूतं च हविर्दत्त्वा ताम्बूलं च निवेदयेत् ॥ ३४ ॥

इति [17]श्रीमद्रौरवतन्त्रे [क्रियापादे] [18]पिण्डिकास्थापनविधिर्नामैकोनत्रिंशः पटलः

---

[1] cf. *Virāgama* 70, 31-34 :

लिङ्गे पीठं समायोज्य सुस्निग्धं कारयेत्ततः । अष्टबन्धं प्रकर्तव्यं लक्षणेन समन्वितम् ॥
लाक्षा चैव मधूच्छिष्टं शर्करा सर्जरं तथा । वालुकेनेष्टकाचूर्णं सदृशं घनतैलकम् ॥
समं कृत्वा तु विप्रेन्द्र तैलमर्धं विधीयते । ताम्रपात्रे विशेषेण पाचयेच्छिल्पिना सह ॥
लिङ्गपीठकयोर्मध्ये पक्वद्रव्यं विनिक्षिपेत् । एवं यः कुरुते मर्त्यः शिवलोके महीयते ॥

[2] Pour plus de détails au sujet du वज्रबन्ध et de l'अष्टबन्ध voir *Ajitāgama* 18, 216-218

[3] B : वस्त्रबन्धाष्टबन्धं वा ; C, E : वज्रहस्ताष्टबन्धं वा [4] C, F, F : सुधापङ्कं

[5] A : बन्धार्थे ; B : बन्धार्धे [6] A : वेद्यां तु ; F : वेद्या तु [7] B : मूर्ध्नि pour मूर्ध

[8] A : उत्तरणं pour उत्तरगं [9] A, E, F : निवृत्तये [10] B : इष्टिकाभिर्वा pour इष्टकाभिर्वा

[11] cf. *Virāgama* 70, 54-59:

ततः प्रभाते विमले स्नानं कृत्वा तु देशिकः । नववस्त्रपरीधानः सोष्णीषः सोत्तरीयकः ॥
कुण्डलैः कर्णिकाहारैरर्घ्याङ्गुलीयकमेव च । प्रशान्तमानसो भूत्वा स्नापयेल्लिङ्गमूर्धनि ॥
गौरीबीजेन वर्धन्या स्नापयेत्पिण्डिकोपरि । पूर्वादीशानपर्यन्तं विद्येशान्स्नापयेत्ततः ॥
अष्टोत्तरशतेनैव पञ्चाशत्पञ्चविंशतिः । स्नपनं कारयेत्तत्र यथाविभवविस्तरम् ॥
गन्धैः पुष्पैश्च धूपैश्च दीपैश्चैव सुपूजयेत् । हविर्निवेदयेत्पश्चात्ताम्बूलं दापयेत्ततः ॥
ब्राह्मणान्भोजयेत्तत्र शैवान्संभोजयेत्ततः । पीठस्थापनमेवोक्तम् "

[12] B : गव्येन [13] A : वेद्यां तु [14] A : पीठं कर्णे तु ; B : पीठकर्णे तु [15] A : समर्चयेत्

[16] B, C, F : प्रभूतहविषं दत्त्वा [17] A : श्रीरौरवतन्त्रे ; B omet श्रीमद्रौरवतन्त्रे

[18] A : पिण्डिकास्थापनविधिपटलोऽष्टाविंशः; B : पिण्डिकास्थापनं नाम अष्टाविंशः पटलः ; C : पिण्डिकास्थापनविधिर्नाम पञ्चमः पटलः; E : पिण्डिकास्थापनविधिः पञ्चमः पटलः; F : पिण्डिकास्थापनपटलः पञ्चमः

# [त्रिंशः पटलः]

## [[1]क्षेत्रलिङ्गप्रतिष्ठाविधिः[2]]

### [क्षेत्राष्टकम्[3]]

* उभयार्थं तु कर्तव्यं मोक्षार्थं जन्मवेदनात्[4] । तटाकतीरे [5]वाप्यास्तु नद्यास्तीरे [6]समुद्रके ॥ १ ॥
तीरे तु सागराणां [7]तु पर्वताग्रे वनान्तरे । [8]श्मशाने [9]चेश्वरे हर्म्ये स्थापयेत्क्षेत्रलिङ्गकम् ॥ २ ॥
[10]क्षेत्राष्टका इमे प्रोक्ता दशवृद्ध्युत्तरं फलम् । [11]पौरुषादार्षकं श्रेष्ठमार्षाद्गाणपकं वरम्[12]॥ ३ ॥

---

[1] Le manuscrit sur ôles n° 15545 de l'Institut Français d'Indologie renferme quelques citations des *Rauravāgama*, *Acintyaviśvasādākhya* et *Kāmikāgama* relatives à la *kṣetraliṅgapratiṣṭhā* notamment les *śloka* 1b à 12a dont le texte nous a été très utile pour le rétablissement des passages corrompus. Ce manuscrit est représenté en note par le symbole H.

[2] Pour क्षेत्रलिङ्गप्रतिष्ठा voir *Acintyaviśvasādākhya*, *samādhiliṅgasthāpanapaṭala*, *Ajita* 18, *Kāmika* I 64 et II 66, *Kāraṇa* I 59 et II 21, *Kiraṇa* III 26, *Cintya* 20, *Dīpta* 20, *Makuṭa* 10, *Mataṅgaqārameśvara*, *kriyāpāda* 39, *Yogaja* 4, *Santānasamhitā* 19, *Suprabheda* I 36, et *Sūkṣma* 42.

[3] cf. *Acintyaviśvasādākhya*, n° 15545, folio 1a :

वक्ष्ये समाधिलिङ्गस्य प्रतिष्ठां द्विजसत्तमाः । द्विविधं तत्सुसंप्रोक्तमालये वा बहिस्थले ॥
प्राकारचतुरस्यान्ते (चतुर्थस्यान्ते ?) पञ्चमस्य सुमध्यमे । स्थापितं विधिना लिङ्गं परं श्रृणुत सांप्रतम् ॥
नदीतीरे तटाके वा उद्याने स्वमठेऽपि वा । अन्यत्र च मनोयोग्ये स्थापितं द्विविधं भवेत् ॥

cf. *Kāmika* II 66, 5b-7a :

स्वप्रधानं पराङ्गं च द्विविधं स्थापनं मतम् । ग्रामादौ वा नदीतीरे पुष्करिण्यास्तटेऽपि वा ॥
वने चोपवने वापि पर्वते वा मनोरमे । स्थानेऽन्यत्र च कर्तव्यं स्वप्रधानस्य मन्दिरम् ॥

[4] B : वेदनम् pour वेदनात्

[5] B : वाप्यां तु    [6] B : समुद्रके    [7] B : च pour तु

[8] A : दशाने ; E : ईशाने ; G : मशाने    [9] A, G : चेश्वरो

[10] A : क्षेत्राष्टकानुमे ; C : क्षेत्राष्टका इमे

[11] A : पौरुषादार्षं श्रेष्ठमार्षाद्गाजपरं वरम् ; B : पौषादर्शश्रेष्ठमासाद् गाणपरं स्मृतम् ; C : पौरुषादार्षं श्रेष्ठं मार्षमुद्गाणपः परम् , E : पौरुषादार्षं श्रेष्ठमार्षाद्गाणपः परम् ; le ms. H ajoute : गाणपाद्दैविकं श्रेष्ठं दैवे स्वायंभुवं वरम

[12] Pour les détails relatifs aux liṅga tels que पौरुष, आर्ष, गाणप et दिव्य voir *Amśumatkāśyapa* T. n° 1, pp. 430-431:

लिङ्गं चतुर्विधं ज्ञात्वा स्थावरं शास्त्रचोदितम् । दैविकं चार्षकं चैव गाणपं मानुषं तथा ॥
चतुर्विधेषु भेदेषु दैविकं लक्षणं श्रृणु । दीर्घाकारं भवेल्लिङ्गं निम्नोन्नतविवर्जितम् ॥
रेखाकोटरसंयुक्तं मुखे धारा यवोन्नता । पर्वताग्राकृतिर्लिङ्गं बहुभं त्वग्रतः शिखा ॥

तस्मान्मुख्यं तु दिव्यं यद्देवालयस्थलाशयम्[1] । साधारणं श्मशानं तु मद्भक्तानां परं भवेत् ॥ ४ ॥

[श्मशाने क्षेत्रलिङ्गस्थापनम्[2]]

[3]तस्माद्वै दीक्षितानां तु [4]योगिनां तु वरं ततः । सर्वेषां [5]च श्मशानं तु वरं [6]ब्रह्मविदां विदुः ॥ ५ ॥

श्मशान[7]भुवनादूर्ध्वं नेत्राग्नियुगतः[8] स्थलम्[9] । शिलाभिर्वेष्टकाभिर्वा स्थलोच्चं परिकल्पयेत् ॥ ६ ॥

तदूर्ध्वं स्थापयेल्लिङ्गं प्रतिमां वा विशेषतः । लिङ्गं चेत्प्राङ्मुखं स्थाप्यं पश्चिमाननमेव वा[10] ॥ ७ ॥

---

करााभ्यां संपुटाकारं ब्रह्मसूत्रविवर्जितम् । इत्येतैर्लक्षणैर्युक्तं लिङ्गं दैविकमुच्यते ॥
मूलस्थूलं भवेल्लिङ्गमग्रमूलं तथैव च । मध्यस्थूलं तु लिङ्गानां नालिकेरफलाकृति ॥
कदलीफलाकृति श्रीबिल्वस्यैव फलाकृति । लिङ्गमार्षकमाख्यातं ब्रह्मसूत्रविवर्जितम् ॥
कूष्माण्डस्य फलाकारं मातुलुङ्गफलाकृति । उर्वारुकफलाकारं कपित्थस्य फलाकृति ॥
तालफलवदाकारं गाणपं लिङ्गमुच्यते । द्वारं वा गर्भमानं वा हस्तमानमथापि वा ॥
शिल्पशास्त्रोक्तमानं वा छत्राकारशिरोन्नतम् । एकवर्णं सुसंस्निग्धं ब्रह्मसूत्रसमन्वितम् ॥
इत्येतैर्लक्षणैर्युक्तं लिङ्गं मानुषमुच्यते ।

[1] C, G : स्थलाशनम् pour स्थलाशयम्

[2] cf. *Acintyaviśvasādākhya*, fol. 1a-3a:
महात्मानश्च सर्वज्ञा नानाश्चर्यसमन्विताः । अनेकजन्मजन्मैश्च[न्मभिः?]कृतकृत्या मदाज्ञया ॥
मदंशभाजिनः प्रीत्या मत्स्वरूपपरायणाः । दयादाक्षिण्यसंयुक्ता निरपेक्षाणिमादिषु ॥
सर्वागमज्ञाः सर्वज्ञा लोकरक्षार्थमागताः । समयादिज्ञानपर्यन्तदीक्षया संयुताश्च ये ॥
येषां मृतस्य काले तु दहनं न प्रशस्यते । यदि मोहेन कुर्याच्चेद्राजराष्ट्रस्य दोषकृत् ॥
तस्मात्समाधिमेतेषां कारयेद्द्विजसत्तमाः । पश्चात्षाण्मासकान्ते तु लिङ्गं संस्थापयेत्सुधीः ॥
सामान्यमिदमाख्यातं विशेषं तु वदाम्यहम् । आचार्यः शिल्पिसंयुक्तः कर्ता कारयिता तथा ॥
वनाद्वनान्तरं गत्वा पर्वतात्पर्वतान्तरम् । यथोक्तं ग्राहयेच्छैलं शुचिं गर्भादिवर्जितम् ॥
निश्चित्य देशिकाद्यैस्तु गृह्णीयादुपलं तथा । लिङ्गं समं वा प्राचिं [प्राज्यं?] वा शिवाधिकमथापि वा ॥
स्वस्तिकं मुखलिङ्गं वा धारालिङ्गमथापि वा । तेषां विशेषं लिङ्गानां शिवाधिक्यं महाफलम् ॥
समाधिस्थापने लिङ्गमिदमेव महामतम् । तस्माच्छिवाधिकं लिङ्गं स्थापयेद्विधिना द्विजाः ॥
अलाभे अन्यलिङ्गं वा प्रतिष्ठाप्य सुपूजयेत् । प्रासादं नागरं वापि द्राविडं वेसरं तु वा ॥
पञ्चप्राकारसंयुक्तमालयं कारयेद् बुधः । विभवस्यानुसारेण अथवा कारयेत्ततः ॥
लिङ्गं संस्थापयेत्पश्चात्पूर्वोक्तविधिना द्विजाः ॥

[3] A : तस्माद्वेदिक्षितीनां तु [4] A : योगिनीनां वरं ; B : योगिनां च वरं ; C, E, F, G : योगीनां तु परं ततः

[5] A : तु pour च [6] A, C, F : ब्रह्मविदो विदुः [7] A, F : भवन pour भुवन

[8] B, E, G : युगतो pour युगतः [9] B : फलम् pour स्थलम्

[10] cf *Kāmika* II 66, 12b-15a:
तदर्थं शिवलिङ्गं वा प्रतिमां वा शिवस्य तु । स्कन्दनन्द्यादिरूपं वा मृतप्रतिकृतिं तु वा ॥
कुर्यादायादिसंयुक्तं शिलाद्यैरुक्तवस्तुभिः । शैलं लोहं तथा वार्क्षं मृण्मयं मणिजं तु वा ॥
अर्धचित्रमथाभासं पटादिपरिकल्पितम् । लिङ्गं चेत्प्रतिमा चेद्वा लिङ्गेरोक्तवर्त्मना ॥

प्रतिमा चेद्वाच्यां तु [1]मुखं पीठं तु वा बुधः । सर्वकामप्रदं वापि जयदं वालयं कुरु[2] ॥ ८ ॥
लिङ्गं च पिण्डिकादींश्च[3] [4]नागराद्युक्तमाहरेत्[5] ।

---

[1] G, H : मुखपीठं तु

[2] Pour les détails relatifs aux *liṅga* tels que सर्वकामप्रद et जयद voir *Aṃśumatkāśyapa* 28, 21-24a et 14-17a:

प्रासादस्योच्चतुङ्गे तु षडष्टांशैर्विभाजिते । अधिष्ठानं युगांशं तु वस्वंशं चरणोदयम् ॥
मञ्चमानं तु वेदांशं तलिपं सार्धसप्तकम् । सार्धत्रिभागमञ्चोच्चं सप्तांशं चरणोदयम् ॥
प्रस्तरोच्चं गुणांशं तु शिवांशं वेदिकोदयम् । गलमानं द्विभागं स्यात्द्रसांशं शिखरं भवेत् ॥
द्विभागं तु शिखामानमेवं स्यात् **सार्वकामिकम्** ।
सप्तशितिभागं तु कृत्वा तु सदनोदयम् । द्विभागं धरातलोत्सेधं युगांशं चरणोदयम् ॥
मञ्चमानं द्विभागेन वेदांशं चरणोदयम् । पादोनद्व्यंशमञ्चोच्चं तलिपोच्चं तु तद्द्वयम् ॥
साधांशं प्रस्तरोत्सेधमेकांशं वेदिकोदयम् । द्विभागं ग्रीवमानं तु वेदभागं तु शीर्षकम् ॥
शेषं स्तूप्यूदयं ख्यातं **जयदं** तदुदाहृतम् ।

voir auussi *Ajitāgama*, 12, 72b-47.

[3] C, G : पिण्डिकादिश्च

[4] A : नाहरेत्युक्तमाहरेत् ; B : नाहरयुक्तमाहरेत् ; C, G : नागरेत्युक्तमाचरेत्

[5] Pour les détails relatifs aux liṅga tels que नागर, द्राविड et वेसर voir *Aṃśumatkāśyapa* 51, 88b-97 :

नागरं द्राविडं लिङ्गं वेसरं च वदाम्यहम् । लिङ्गोदये तु वेदांश एकांशं कन्यसं तति ॥
तुङ्गे त्र्यंशे शिवांशं तु विस्तारं श्रेष्ठमुच्यते । तयोर्मध्येऽष्टभागे तु नवधा तारमुच्यते ॥
अथोदये कलांशे तु पञ्चांशं शान्तिकं भवेत् । वेदांशं पौष्टिकं ख्यातं गुणांशं जयदं भवेत् ॥
आभिचारं [अभिवारं?] द्विभागं स्याद्व्यासमेवं चतुर्विधम् । एवं त्रयोदशव्यासं नागरे तु विधीयते ॥
लिङ्गोच्चे द्विर्नवांशे तु रसभूतयुगांशके । गुणांशे शान्तिकादि स्याद्द्राविडे तु चतुर्विधम् ॥
वेसरे लिङ्गतुङ्गे तु विंशत्यंशविभाजिते । अष्टांशसप्तषट्पञ्चभागैर्व्यासं प्रकल्पितम् ॥
शान्तिकं पौष्टिकं चैव जयदाद्भुतकं भवेत् । वेसरं च चतुर्भेदं हर्म्यं लिगस्य पिण्डिका ॥
पादाधारशिला चैव एकजातिस्त्वसंकरम् । यत्रैव कल्पितं लिङ्गं वृद्धिहेतुरुदाहृतम् ॥
अन्योन्यसंकरश्चेत्तु राज्ञो मुखभयावहम् । तस्मात्सर्वप्रयत्नेन संकरं न समाचरेत् ॥
लिङ्गानां नागराद्येवं ख्यातम्"

Pour les détails relatifs aux पीठ ou पिण्डिका voir *Aṃśumatkāśyapa* 52, 1—23 :

अथातो नागरादीनां लिङ्गानां पीठलक्षणम् । लिङ्गोत्सेधसमं पीठविस्तारं चोत्तमं भवेत् ।
पूजांशोच्चसमं पीठतारं कन्यसमुच्यते । तयोर्मध्येऽष्टभागे तु उत्तमादित्रयं त्रयम् ॥
पीठव्यासं त्रिधा भज्य द्विभागं चोत्तमोन्नतम् । व्यासार्धमधमोत्तुङ्गं तयोर्मध्येऽष्टभाजिते ॥
नवधा पीठतुङ्गं तु उत्तमादित्रयं त्रयम् । क्रमेण कथिता विप्र नागरा ह्येवमुच्यते ॥

## [शिवालये क्षेत्रलिङ्गस्थानम्[1]]

[2]शिवालये मध्यद्वारायां स्थापयेदधमान्तरम्[3] ॥ ९ ॥
[4]मध्यमं चैव मर्यादौ [5]वरं स्याद्बाह्यसालके । परे वावरणोपेतं मध्ययोस्तु विना हि तत् ॥ १० ॥
[6]रोगापमृत्यू मृत्युश्च [7]विपच्च रिपुवर्धनम् । [8]शत्रुनाशो [9]महासंपद्विजयः शिवहर्म्यके ॥ ११ ॥
[10]शक्रादिशांकरान्तासु [11]स्थापनात्तु फलं शुभम् । अन्यक्षेत्रेषु सर्वत्र [12]जयदं प्रविधीयते ॥ १२ ॥

---

लिङ्गस्योच्चसमं व्यासं श्रेष्ठं तन्नवभाजिते । सप्तांशं कन्यसं व्यासं तयोर्मध्येऽष्टभाजिते ॥
नवधा विस्तृतं ख्यातं ब्रह्मविष्ण्वंशयोरपि । उदयं वसुधा भज्य द्विभागं वानलांशके ॥
एकांशं वा विशेषेण स्थलांशे तु निवेशयेत् । शेषं पीठोदयं ख्यातमेवं द्राविडमाचरेत् ।
पूजांशपरिणाहेन समं श्रेष्ठविशालकम् । परिणाहं कलांशे तु भान्वंशमधमं ततिः ॥
तयोर्मध्येऽष्टभागे तु नवधा पीठविस्तृतम् । विष्णुभागसमोच्चं तु पीठं कन्यसमुच्यते ॥
सपादं श्रेष्ठमाख्यातं तयोर्मध्येऽष्टभाजिते । नवधा पिण्डिकोत्तुङ्गं वेसरे ह्येवमाचरेत् ॥
अथवा लिङ्गविष्कम्भत्रिगुणं पीठविस्तृतम् । अथवा लिङ्गविष्कम्भे चतुरश्रीकृते सति ॥
तत्कर्णद्विगुणं वाथ सार्धद्विगुणमेव वा । त्रिगुणं वा विशालं तु पीठानां तु विशेषतः ॥
गर्भगेहत्रिभागैकं चतुर्भागैकमेव वा । पीठव्यासं समाख्यातं विष्णुभागसमोन्नतम् ॥
सामान्यं नागरादीनां लिङ्गनां पिण्डिका इमाः । उपानबाह्यविस्तारं सर्वेषां तु विशेषतः ॥
तदष्टनवदशांशेन हीनमग्रविशालकम् । विष्णुभागसमोत्तुङ्गं सपादं सार्धमेव वा ॥
सामान्यं पिण्डिकानां तु नागरादिसमुन्नतम् । लिङ्गानां सकलानां च सामान्यं पीठलक्षणम् ॥
सकलोदये नवांशे तु व्योमांशं कन्यसोदयम् । गुणांशं श्रेष्ठमानं तु तयोर्मध्येऽष्टभाजिते ॥
नवधा पीठतुङ्गं तु तस्य विस्तारमुच्यते । पीठतुङ्गसमव्यासमधमं पीठमुच्यते ॥
द्विगुणांशोत्तमव्यासं तयोर्मध्येऽष्टभाजिते । नवधा विस्तृतं ख्यातं सकलानां विशेषतः ।
पिण्डिका गोमुखोपेता लिङ्गानां तु विधीयते । गोमुखीरहितं पीठं सकलानां विशेषतः ॥
समाश्रं समवृत्तं वा लिङ्गानां तु विधीयते । सायताश्रायतवृत्तं प्रतिमानां विशेषतः ॥

[1] cf. *Kāmika* II 66, 7b-9a:
देवालयान्तः सालादौ तत्र कल्पितमन्दिरे । परिवारसमोपेतं स्वप्रधानं प्रकीर्तितम् ॥
देवालयादौ सर्वत्र मालिकामण्टपादिषु । परिवारविहीनं यत्कल्पितं त्वङ्गमिष्यते ॥

[2] **A, B** : शिवालय pour शिवालये ; **H** : शिवालयस्य मध्ये तु

[3] **A, B** : दशमान्तरम् pour अधमान्तरम् ;

[4] **A** : मध्यमं मयादौ तु ; **C** : मध्यं मर्यादौ तु ; **E, G** : तन्मध्यमर्यादौ तु ; **H** : मध्यमं मध्यमर्यादौ

[5] **B** : परं pour वरं ; **H** : वारं [6] **A, B** : रोगापमृत्युमृत्युश्च ; **G** . रोगापमृत्युकूरुच

[7] **H** : विपदश्चार्यवर्धनम् [8] **A, H** : शत्रुनाशं [9] **A, H** : महत्संपद्विजयं [10] **H** : शक्रादीशानपर्यन्तं

[11] **A** : स्थापरा तु फला इमे ; **B** ; स्थापनात्तु फलं शुभे ; **H** : स्थापयत्फलमेव तु

[12] **A** : जयं प्रविविधीयते ; **B** : जयं प्रतिविधीयते

[क्षेत्रलिङ्गविषये बालस्थापननिषेधः[1]]

[2]विनास्य बालनिर्माणं स्थापयेन्मूलमेव तु ।

[मण्डपः[3]]

प्रासादाभिमुखे कुर्यात्प्रपां वा मण्डपं तु वा ॥ १३ ॥

नवहस्तप्रमाणेन षोडशस्तम्भसंयुतम् । मध्ये तु वेदिकांशेन [4]रत्निमात्रं समुन्नतम् ॥ १४ ॥

परितस्त्वग्निकुण्डानि महाशासु युगाश्रकम्[5] । सौम्ये तु स्नानवेदीं च[6] हस्तमानेन कल्पयेत् ॥ १५ ॥

तोरणाद्यैस्तरङ्गैश्च[7] वितानाद्यैरलंकुरु[8] । स्थण्डिलं कारयेद्वेद्यां [9]शालिभिस्तिलतण्डुलैः ॥ १६ ॥

[10]लाजपुष्पैश्च दर्भैश्च स्तीर्य ब्रह्माणमर्चयेत्[11] । लिङ्गं तु [12]शाययेत्तत्र लक्षणोद्धारमाचरेत्[13] ॥ १७ ॥

---

[1] cf. *Acintyaviśvasādākhya* fol, 3b:
रत्नन्यासादिकं सर्वं पूर्वोक्तेन समाचरेत् । "सर्वेषां शिवलिङ्गानां स्थापनं तु यथाविधि ॥
तथा सर्वं समाप्याथ विनाकर्षणमात्रकम् । प्रतिष्ठाप्य मुनिश्रेष्ठाः पूजयेत्परमेश्वरम ॥

[2] A : विनास्य बालनिर्वाणं ; C : विनास्य......निर्वरणं ; G : विनाशस्य विनिर्वाणं

[3] cf. *Yogajāgama* 4, 37b-48:
यागमण्टपालंकारो वक्ष्यते विधिना युतः । आलयस्याग्रतः कुर्याद्दक्षिणे चोत्तरेऽथ वा ।
प्रतिष्ठामण्टपं कुर्यान्नवाष्टसप्तहस्तकैः । षोडशस्तम्भसंयुक्तं द्वादशस्तम्भमेव वा ॥
वितानध्वजसंयुक्तं पताकध्वजसंयुतम् । पूर्णकुम्भैरलंकृत्य वस्त्राद्यैः स्तम्भवेष्टितैः ॥
दर्भमालासमायुक्तं पुष्पमाल्यैरलंकृतम् । चतुस्तोरणसंयुक्तमष्टमङ्गलशोभितम् ॥
क्रमुकैर्नारिकेलैश्च कदलीफलसंयुतम् । चित्रवस्त्रेण संवेष्ट्य मुक्तादामैरलंकृतम् ॥
चूतपल्लवसंयुक्तं पताकध्वजसंयुतम् । पूर्णकुम्भैरलंकृत्य नानादीपैः समायुतम् ॥
दूर्वाङ्कुरसमायुक्तं फलपल्लवशोभितम् । एवं मण्टापलंकारं सर्वद्रव्यैर्विचक्षणः ॥
कन्यसत्रयलिङ्गानां कन्यसं मण्टपं भवेत् । मध्यमत्रयलिङ्गानां मध्यमं मण्टपं भवेत् ॥
उत्तमत्रयलिङ्गानां मण्टपं चोत्तमं भवेत् । कूटं वापि प्रपां वापि सर्वत्र परिकल्पयेत् ॥
मण्टपलक्षणमार्गेण कुण्डं वेदिं च कल्पयेत् । तस्य पश्चिमभागे तु उत्तरे वाथ कल्पयेत् ॥
स्नानश्वभ्रं प्रकर्तव्यं लिङ्गानुरूपं कारयेत् । दारुपीठं तु संकल्प्य उत्तरे जलमार्गकम् ॥
एवं मण्टपालंकारम्"

voir aussi *Ajitāgama*, 18, 34-48 et *Rauravāgama* 28, 27-33.

[4] A : मध्यसान्तं ; G : मध्यपान्तं [5] A, B : अग्रकम् pour अश्रकम्

[6] G : वेदिं च pour वेदीं च ; G : वेदिश्च [7] C : अनङ्गैश्च pour तरङ्गैश्च ; F, G : श्च रङ्गैश्च

[8] A : अलंकरेत् pour अलंकुरु ; G : अलंकृतम् [9] B : शालिभिः स्थण्डिलं कुरु

[10] B omet le *śloka* n° 17. [11] C : तिर्यक् ब्रह्माणमुच्चरेत् ; G : स्तीर्य ब्रह्माणमुच्चरेत्

[12] C : साधयेत्तत्र

[13] Pour plus de détails au sujet du *lakṣaṇoddhāra* voir *Ajitāgama* 18, 50-89 et *Rauravāgama* 28, 15-22a.

[जलाधिवासः[1]]

जलाधिवासनं कुर्यात्स्थण्डिलं कुरु पूर्ववत्। जलादानीय लिङ्गं तु स्नानवेद्यां निधापयेत्॥ १८॥

[लिङ्गशुद्धिः[2]]

व्यपोह्य वस्त्रकूर्चादीन्स्नापयेच्छुद्धतोयकैः। [3]गव्यैर्गन्धोदकैश्चैव ब्रह्माङ्गैरभिषेचयेत्॥ १९॥

[शयनाधिवासः[4]]

गन्धादिभिर्हृदाभ्यर्च्य बध्वा [5]प्रतिसरं ततः। गन्धमाल्यैः समावेष्ट्य लम्बकूर्चं तु बन्धयेत्॥२०॥

---

[1] cf. *Yogajāgama* 4, 26b-31a:

जलाधिवासनं प्रोक्तं पञ्चसप्तत्रिरात्रकम्। प्रपां कृत्वा वितानैस्तोरणैस्तरङ्गवेष्टिताम्॥
दर्भमालासमायुक्तां पुष्पमाल्यैरलंकृताम्। नृत्तगेयसमायुक्तं स्तोत्रमङ्गलवाचकैः॥
पिञ्छचामरसंयुक्तं पताकच्छत्रसंयुतम्। तालवृन्तसमायुक्तं हरशब्दसमायुतम्॥
जलमध्ये फलकं स्थित्वा साधयेल्लिङ्गपीठकम्। दर्भैरावेष्ट्य तल्लिङ्गं पीठं ब्रह्मशिलायुतम्॥
नववस्त्रेण संवेष्ट्य ब्रह्मकूर्मसमायुतम्। त्रिसंध्यायां हविर्दत्त्वा ताम्बूलं दापयेत्ततः॥

voir aussi *Ajitāgama* 18, 95-133 et *Rauravāgamā* 28, 24-26,

[2] cf. *Yogajāgama* 4, 31b-37a:

प्रतिष्ठादिनपूर्वे तु जलादुत्तीर्य यत्नतः। लिङ्गं पीठं ब्रह्मशिलां कूर्ममेवं समायुतम्॥
जलादुत्तीर्य देवेशं सर्वतीर्थं समावहेत्। कुम्भोदके तथाभ्यर्च्य पीठवर्धनिकां यजेत्॥
गन्धपुष्पादिभिः पूज्य मूलमन्त्रेण संयुतम्। अष्टमृत्सलिलेनैव बिल्वपत्रैश्च घर्षयेत्॥
गन्धतोयं समभ्यर्च्य रजन्यामलकादिभिः। हविर्निवेदयेत्पश्चात्ताम्बूलं च निवेदयेत्॥
वस्त्राभरणं संवेष्ट्य सर्वालंकारसंयुतम्। रथे वा शिबिकायां वा यानयेत्क्रमशः पुनः॥
सर्वालंकारसंयुक्तं कुर्याद्वास्तुप्रदक्षिणम्। सर्वातोद्यसमायुक्तं प्रविशेदालयं पुनः॥

voir aussi *Ajitāgama* 18, 114-121.

[3] B ; गव्यैर्गन्धाम्बुभिः पश्चाद्

[4] cf. *Yogajāgama* 4, 52b-63a:

वेदिकोपरि विन्यस्य अष्टद्रोणैश्च शालिभिः। तदर्धैस्तण्डुलैर्भूष्य तदर्धैश्च तिलैरपि॥
लाजपुष्पैश्च दर्भैश्च विकिरेत्तु विशेषतः। अण्डजं मुण्डजं चैव रोमजं व्रीलितं [चर्मजं?] तथा॥
दुकूलपट्टदेवाङ्गैः कार्पासवस्त्रमेव वा। पञ्चवर्णं प्रकल्प्याथ श्वेतं रक्तं च कृष्णकम्॥
नीलं पीतनिभं चैव पञ्चवर्णं प्रकल्पयेत्। पुण्याहं वाचयित्वा तु रक्षाबन्धं प्रकल्पयेत्॥
सुवर्णसूत्रं तु संवेष्ट्य त्रियम्बकेन मन्त्रतः। लिङ्गं पीठं समभ्यर्च्य ब्रह्मकूर्मशिलायुतम्॥
रक्षासूत्रं तु संवेष्ट्य मूलमन्त्रं समर्चयेत्। ईशानेन तु मन्त्रेण शयने शाययेद्बुधः॥
प्राक्शिरश्चोर्ध्ववक्त्रं च शयने शाययेद्धृदा। मुकुली पद्ममुद्रा तु सुरभी नालमुद्रका॥
लिङ्गमुद्रा च कर्तव्या पञ्चवक्त्रं च दर्शयेत्। रक्तवस्त्रेण संवेष्ट्य कूर्चपुष्पैर्युतेन च॥
गन्धपुष्पादिभिः पूज्य सर्वातोद्यसमायुतम्। पीठं च नन्दिकावर्तं कूर्मशिलां च स्थापयेत्॥
वेद्यूर्ध्वे लिङ्गमूले तु स्थापयेत्क्रमशस्तथा। वेष्टयेत्पीतवस्त्रेण गन्धपुष्पादिभिर्यजेत्॥
शक्तिबीजमनुस्मृत्य गन्धपुष्पादिनार्चयेत्। ब्रह्मबीजमनुस्मृत्य ब्रह्मकूर्मशिलां यजेत्।

voir aussi *Ajitāgama* 18, 131-137 et *Rauravāgama* 28, 36-41.

[5] C ; प्रतिसरात्मकः ; G ; प्रतिसरात्मकम्

नववस्त्रेण संवेष्टय नृत्तगेयादिभिर्युतम् । [1]वेद्यां तु स्थण्डिले मध्ये [2]शयनं पञ्च कल्पयेत् ॥ २१ ॥
[3]अण्डजं मुण्डजं चैव चर्मजं रोमजं तथा । शाल्मलं शयनं [4]वाथो उपर्युपरि कल्पयेत् ॥ २२ ॥
अलाभे पञ्चवस्त्रेण [5]कल्पयेच्छयनं हृदा । द्वात्रिंशद्दर्भकं[6] कूर्चं प्रागग्रं विन्यसेद्धृदा ॥ २३ ॥
गन्धादिभिः समभ्यर्च्य सर्वातोद्यसमन्वितम् । लिङ्गमानीय वेद्यां तु शाययेच्छयनोपरि ॥ २४ ॥
प्राक्शिरश्चोर्ध्ववक्त्रं च [7]छादयेद्रक्तवस्त्रतः ।

[कुम्भस्थापनम्[8]]

ससूत्रं सापिधानं च सकूर्चं सहिरण्यकम् ॥ २५ ॥
[9]सवितानं सवस्त्रं च [10]गन्धाम्भःपूरितं घटम् । [11]लिङ्गमूर्धान्तिके स्थाप्य मूलमन्त्रं तु विन्यसेत् ॥२६॥

---

[1] C, G : वेद्यास्तु

[2] Une meillere lecture semble être पञ्चशयनं ; mais le mètre ne serait pas respecté.

[3] voir *supra* p. 21 note 1 [4] A : वाथ ; G : वायोर्

[5] A : शयनं कल्पयेद्द्विधा ; B : कल्पयेच्छयनं द्विधा [6] B : दर्भतः pour दर्भकं

[7] C : शाधयेदुक्तवस्त्रकम् ; E : शाययेद्रक्तवस्त्रकम् ; G : छाययेद्रक्तवस्त्रकम्

[8] cf. *Yogajāgama* 4, 63b-78:

निष्कलङ्कानसुषिरान्द्रोणतोयेन पूरितान् । त्रिसूत्रवेष्टितान्कुम्भान्नववस्त्रैश्च शोभितान् ॥
विधाय चक्रपात्राणि सूत्रेणैव विचित्रयेत् । स्वर्णपुष्पसमायुक्तं कूर्चगन्धसमायुतम् ॥
शिवकुम्भं तु संपूज्य वर्धनीं चैव पूजयेत् । नववस्त्रेण संवेष्टय युग्मवस्त्रयुतेन च ॥
देवस्यैव शिरोभागे कल्पयेदासनं तथा । गन्धादिभिः समभ्यर्च्य शिवकुम्भं च विन्यसेत् ॥
पञ्चरत्नसमायुक्तं ध्यानं सदाशिवस्य तु । सद्यमन्त्रेण चावाह्य स्वागतं हृदयेन तु ॥
स्थापयेद्वामदेवेन अघोरेण निरोधयेत् । ईशानेन तु सांनिध्यं पुरुषेण तु संमुखम् ॥
पाद्यमाचमनं चार्घ्यं शिरोमन्त्रेण दापयेत् । गन्धपुष्पं च धूपं च दीपं नैवेद्यमेव च ॥
दापयेद्धृदयेनैव ताम्बूलं दापयेत्ततः । दर्शयेद्दशमुद्राश्च लिङ्गमुद्रां तथैव च ॥
पञ्चवक्त्रं प्रदर्श्याथ ईशानेन पिधाय च । अस्त्रेणैव तु मन्त्रेण दिग्बन्धं च ततः कुरु ।
तस्यैव वामभागे तु वर्धनीं चैव विन्यसेत् । वर्धनीमध्यमे न्यस्त्वा मनोन्मन्यास्तु मन्त्रकम् ।
अब्जमुद्रां प्रदर्श्याथ सुरभीं तालमुद्रिकाम् । स्वर्णवक्त्रसमायुक्तं चक्रपात्रं पिधाय च ॥
दिग्बन्धं तु ततः कुर्यादस्त्रमन्त्रेण दिक्षु च । अभितस्तु घटानष्टौ स्थापयेदष्टदिक्षु च ॥
इन्द्राद्यैशानपर्यन्तमष्टविद्येश्वरान्न्यसेत् । सकूर्चान्सापिधानांश्च सवस्त्रान्हेमसंयुतान् ॥
अष्टमङ्गलरूपाणि तत्तत्स्थानेषु विन्यसेत् । यागविद्येशरूपं च गन्धपुष्पादिनार्चयेत् ।
शिवकुम्भादिकुम्भानां वर्धन्यभिमुखं चरेत् । विद्येश्वरस्य कुम्भानि अष्टविद्येशधारकान् ॥
अष्टमङ्गलरूपाणि उपवेद्युपरि न्यसेत् ॥

voir aussi *Ajitāgama* 18, 138-147 et *Rauravāgama* 28, 42-57a.

[9] A, C, F, G : सापिधानं [10] B, C, F, G : गन्धाम्बु pour गन्धाम्भः [11] A : लिङ्गमूर्ध्नान्तिके

[1]लिङ्गाधेयां च मूर्तिं तां ध्यात्वाभ्यर्च्य हृदा यजेत् । तथैव वर्धनीं पश्चादुत्तरे शक्तिमन्त्रतः ॥ २७
विद्येश्वरघटानष्टौ परितः स्थाप्य पूजयेत् । परिवारघटांश्चैव वेदिबाह्ये न्यसेत्क्रमात् ॥ २८ ॥

[होमः[2]]

[3]पूजयेद्धविरन्तं तु; ततो होमं समाचरेत् । दिशास्वध्ययनं [4]कुर्युश्चत्वारस्तु[5] द्विजोत्तमाः[6] ॥ २९ ॥
विदिशासु [7]जपस्तोत्रं चत्वारश्चानुशैवकाः[8] । [9]आचार्य[10]लक्षणोपेतस्त्वाचार्यो [11]मूर्तिपास्तथा ॥ ३० ॥
स्नानद्वयसमायुक्ताः[12] सकलीकृतविग्रहाः[13] ।[14]आचार्यश्चेशकुण्डे तु शेषकुण्डेषु मूर्तिपाः ॥ ३१ ॥
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् । [15]समिधः सद्यमन्त्रेण [16]चाज्यं वामेन होमयेत् ॥ ३२ ॥
[17]अघोरेण चरुं हुत्वा [18]लाजांस्तत्पुरुषेण तु । [19]सक्तुमीशेन जुहुयात्तिलं वै हृदयेन तु ॥ ३३ ॥
सिद्धार्थं शिरसा हुत्वा [20]शिखया तु फलाहुतिः । अपूपं कवचेनैव मुद्गं नेत्रेण होमयेत् ॥ ३४ ॥
[21]मधु चास्त्रेण जुहुयात्क्षीरं मूलेन होमयेत् । शतं वार्धं तदर्धं वा प्रत्येकाहुतिमाचरेत् ॥ ३५ ॥

---

[1] A, C, G : लिङ्गाधेयं तु मूर्तिं तु तं ध्यात्वाभ्यर्चयेद्धृदा

[2] cf. *Cintyāgama*, 2 , 123-132:

होमकर्म समारभ्य चाचार्यो मूर्तिपैः सह । आचार्यानुज्ञया सर्वे होमं कुर्युश्च मूर्तिपाः ॥
प्रधाने देशिको हुनेदन्यकुण्डेषु मूर्तिपाः । अग्न्याधानादिकं सर्वमग्निकार्योक्तमार्गतः ॥
पञ्चार्णं च नवार्णं च दशार्णं चैव देशिकः । बिल्वाश्वत्थशमीर्हुत्वा क्रमात्तदर्णसंख्यया ॥
पलाशोदुम्बराश्वत्थवटं पूर्वादि दिक्षु वै । शमीखदिरबिल्वार्कमाग्नेयादिविदिक्षु वै ॥
प्रधानस्य पलाशं च सर्वेषां होममाचरेत् । समिदाज्यचरूँल्लाजांस्तिलसिद्धार्थकान्यवान ॥
माषं मुद्गं च शालिं च सक्तुमेकादश क्रमात् । ईशानादीनि चास्त्रान्तं स्वस्वबीजेन होमयेत् ॥
शक्तीनां होमके मन्त्री स्त्रीलिङ्गान्तानि योजयेत् । तत्तद्देवस्य गायत्रीः सप्तसंख्या हुनेद्घृतम् ॥
क्षीरैर्गुलैः फलैः पत्रैः पुष्पैश्चैव हुनेत्ततः । द्रव्यं प्रति विशेषेण मूलमन्त्रं हुनेत्क्रमात् ॥
द्रव्यान्ते व्याहृतिं हुत्वा सहस्रं वार्धमेव वा । अष्टोत्तरशतं चैव अथवा होममाचरेत् ॥
ततः स्पर्शाहुतिं हुत्वा बिम्बे द्रव्यं प्रति प्रति । कुण्डे स्पर्शाहुतिं हुत्वा स्पृष्ट्वा जप्त्वा च बुद्धिमान् ॥

voir aussi *Ajitāgama* 18, 148-165 et *Rauravāgama* 28, 57b 61.

[3] B : पूजयेद्धविरन्नाद्यैः ; C, G : पूजयेद्धविरान्तं तु

[4] B, E : कुर्यात् pour कुर्युः [5] C : अर्चकस्तु pour चत्वारस्तु [6] B : द्विजातयः ; C, G : द्विजोत्तमः

[7] A, G : जपस्तोत्रान् ; B : जपेत्स्तोत्रं ; C : जपेत्स्तोत्रान्

[8] A, B, G : शैवकान् pour शैवकाः [9] C : आचार्यो pour आचार्य ; E : आचार्यं

[10] E : दक्षिण pour लक्षण [11] B : मूर्तिपैः सह ; C, E, G : मूर्तिपैस्तथा

[12] B, C : युक्तः pour युक्ताः [13] B, C : विग्रहः pour विग्रहाः [14] A : आचार्यः शक्रकुण्डेषु

[15] C, G : समिधा [16] A, C et G omettent च

[17] C omet les *śloka* 33, 34 et 35a

[18] G : लाजं pour लाजान् [19] A : सक्थु pour सक्तु [20] G : शिखायां तु

[21] A, B : मधुमन्त्रेण ; G : मधुमस्त्रेण

द्रव्यान्ते व्याहृतिं हुत्वा [1]स्वस्वमन्त्रैस्समाहुतिः । मनोन्मन्यास्तु मन्त्रेण [2]चाज्येनैव शताहुतिः ॥ ३६ ॥
अनन्ताद्यावृतानां तु [3]प्रतिमन्त्रं दशाहुतिः । एवं [4]जागरणं रात्रौ ; प्रभाते सुमुहूर्तके ॥ ३७ ॥

[आधारशिलादिन्यासः[5]]

पुरस्ताद्धोम[6]घटिकादाधारादिशिला[7] न्यसेत् । लिङ्गं प्रासादमध्ये तु[8] किञ्चिदीशानमाश्रितम् ॥ ३८ ॥
[9]योज्यं ब्रह्मशिलामध्यं [10]युक्त्या न्यस्य तु देशिकः । [11]शिलाभिर्वेष्टकाभिर्वा [12]सुधया सुदृढीकृतम् ॥ ३९ ॥

[रत्नादिन्यासः[13]]

पश्चात्स्नानद्वयं कृत्वा सकलीकृतविग्रहः[14] । अन्तर्यागं च कृत्वा तु सादाख्यं हृदि [15]चिन्तयेत् ॥ ४० ॥

---

[1] A : सुवस्त्रेण स्पर्शाहुतिः ; G : त्वस्त्रेण स्पर्शाहुतिः
[2] A omet च ; B : तु pour च
[3] A : प्रतिमभ्र pour प्रतिमन्त्रं
[4] C, G : जागरकं
[5] Cf. *Cintyāgama*, 20, 133-139 :

देशिकः शिल्पिभिः सार्धं गर्भगेहं प्रवेशयेत् । मध्यसूत्रं न्यसेद्धीमान्पीठविस्तारसूत्रकान् ॥
न्यस्त्वा प्रागुदगग्राणि तन्मध्ये विन्यसेच्छिवम् । कूर्मशिलावटाञ्शोध्य प्रोक्षयेत्पुरुषेण तु ॥
पश्चाच्छिल्पिं विसृज्याथ स्नानादि सर्वमाचरेत् । सकलीकरणं कृत्वा प्रोक्षयेत्पञ्चगव्यकैः ॥
स्वस्वबीजेन मूलेन स्वर्णरत्नं सुपूजयेत् । अवटेषु न्यसेद्धीजं प्रणवास्त्रं प्रतिप्रति ॥
कूर्मं वा पद्मपुष्पं वा तत्तद्वाहनमेव वा । तन्मध्ये विन्यसेद्धीमान्पद्मरागेण संयुतम् ॥
वज्रं मरकतं नीलं पुष्परागं प्रवालकम् । मौक्तिकं चैव वैडूर्यं गोमेदं च दिशि क्रमात् ॥
परिवारे तु बीजैश्च विन्यसेत्तु यथाक्रमम् । धेनुमुद्रां प्रदर्श्याथ नववस्त्रेण वेष्टयेत् ॥

Voir aussi *Ajitāgama*, 18, 170b-188 et *Rauravāgama* 28, 68.
[6] Le mot घटिका se trouve au masculin au lieu du féminin.
[7] B, C : शिलां
[8] A : मध्यां तु pour मध्ये तु ; C : मध्यस्थं ; G : मध्यास्तु
[9] A : योग्यं
[10] C : युक्तं न्यस्त्वा तु
[11] B : शिलाभिरिष्टकाभिर्वा
[12] C, G : सुधा वा
[13] cf. *Kāraṇāgama* I 59, 172b-185a:

कूर्मशैलेऽवटाञ्शोध्य प्रोक्षयेत्पुरुषेण तु । चन्दनेनानुलिप्याथो रत्नानि विविधान्न्यसेत् ॥
वज्रं मरतकं पुष्परागं नीलं प्रवालकम् । मौक्तिकं चैव वैडूर्यं स्फटिकं च महामणीन् ॥
इन्द्रादि मध्यपर्यन्तं विन्यसेन्मूलविद्यया । सुवर्णं राजतं ताम्रमायसं त्रपु सीसकम् ॥
आरकूटं च विपुलं देवलोहं क्रमात्तथा । हरितालं त्रयं चैव गन्धकं दरदाञ्जनम् ॥
सौराष्ट्रं गैरिकं चैव माक्षिकं पूर्ववन्न्यसेत् । यवगोधूमनीवारशालिवैणवकानि च ॥
प्रियङ्गुतिलमुद्गानि निष्पावं च क्रमात्तथा । चन्दनं कुङ्कुमं चैव लोहं पत्रं फलत्रयम् ॥
कर्पूरमुशिरं चैव पूर्ववद्विन्यसेत्ततः । वैष्णवं वज्रपाणिं च वृषभध्वजमेव च ॥
लक्ष्मीं च सहदेवीं च शङ्खपुष्पं सुवर्चलाम् । दूर्वां चतुर्मुखं चैव विन्यसेद्देशिकोत्तमः ॥
पृथिवीं शातकुम्भेन समुद्रं रजतेन तु । ताम्रेण वृषभं कृत्वा तोमरं चामरं गजम् ॥
श्रीवत्सं कलशं भेरीं दर्पणं पद्मपुष्करम् । महामेरुं सुवर्णेन कृत्वा रन्ध्रेऽवटे न्यसेत् ॥
दक्षिणे मध्यमे सौम्ये त्ववटेषु क्रमान्न्यसेत् । मुकुलीं पद्ममुद्रां च शोधनीं च प्रदर्शयेत् ॥
पूजयित्वा तु रत्नानि गन्धपुष्पादिभिर्हृदा । पायसेन तु लिप्याथ सद्यं ब्रह्मशिलावटम् ॥
आसनं कल्पयेत्पश्च तस्य मध्ये क्रमेण तु । गन्धपुष्पादिना पूज्य वस्त्रेणावेष्टय सर्वतः ॥

Voir aussi *Ajitāgama* 18, 189 199 et *Rauravāgama* 28. 69.
[14] C, G : चेतसः pour विग्रहः
[15] A : सद्वयेत् ; G : सन्धयेत्

[1]माणिक्यं मध्यमे [2]न्यस्य प्रवालं [3]शक्रगोचरे । स्फटिकं चानले देशे नीलं [4]वै याम्यगोचरे ॥ ४१॥
नैर्ऋत्यां मौक्तिकं [5]न्यस्य वज्रं [6]वारुण्यगोचरे[7] । पुष्परागं तु [8]वायव्ये वैडूर्यं च तथोत्तरे ॥ ४२ ॥
शांकरे पद्मरागं [9]तु हृदा मूलेन विन्यसेत् । मनोन्मन्यादि[10]शक्तीनां मन्त्रेणैव क्रमान्न्यसेत् ॥ ४३ ॥
यवनीवारमुद्गं च[11] सर्षपं तिलमेव च । [12]शालीप्रियङ्गुश्यामं च [13]कुलुत्थं च विशेषतः ॥ ४४ ॥
एतानि नव बीजानि रत्नानीव क्रमान्न्यसेत्[14] । श्यामं च हरितालं चाप्यञ्जनं च [15]मनःशिला ॥४५
सौराष्ट्रं [16]पारदं चैव माक्षिकं गैरिकं तथा । प्रणवेनैव [17]तान्न्यस्य [18]जीवितान्विदधत्विमे ॥ ४६ ॥

[लिङ्गस्थापनम्[19]]

शयनाल्लिङ्गमुद्धृत्य वस्त्रादीनि व्यपोह्य च । अर्घ्यं दत्वा हृदा मन्त्री पुष्पाङ्कुरसमन्वितम् ॥ ४७ ॥
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः । [20]नानाविधैश्च विभवैराचार्यं तोषयेत्तदा[21] ॥ ४८ ॥
मूर्तिपान्पूजयेत् [22]पश्चाद्दैवज्ञं पूजयेत्ततः । भक्तांश्च परिवारांश्च पूजयेत्तु यथोचितम् ४९ ॥
ततो लिङ्गं समुद्धृत्य सर्वालंकारसंयुतम् । [23]हर्म्यं प्रदक्षिणं कृत्वा [24]गेहद्वारे निधापयेत् ॥ ५० ॥

---

[1] B, E, F, G : माणिक्कं [2] A, B : न्यस्त्वा [3] A : शक pour शक्र ; C : चक्रगो चरेत्
[4] B : वै यमगोचरे ; C, G : वैडूर्यदेशके [5] A : न्यस्त्वा
[6] B : वरुण pour वारुण्य ; G, E, F, G : वारुण [7] C : गोचरेत् pour गोचरे
[8] A . वायव्यां [9] B : च pour तु [10] A : तु pour आदि [11] B : मुद्गांश्च pour मुद्गं च
[12] B : शाली प्रियङ्गवं चैव ; E, F, G : शाल्याः प्रियङ्गुश्यामं च [13] A : कुलस्थं च
[14] A : भक्तेनेव कृता न्यसेत् ; B : हुनेद्भक्तानिषु क्रमात् ; C : ...कृता न्यसेत् ; F : ...न क्षता न्यसेत् ; C : गिन्वक्षत न्यसेत्
[15] C, G : मनोशिला [16] C : पारतं [17] A : तान्न्यस्त्वा ; B : तन्न्यस्य
[18] A : जीवितान्वितयास्त्वमे ; B : जीवितान्वितयास्विमे ; C : जीवितान्वितयास्त्विमे
[19] cf. *Cintyāgama* 20, 142-151:

सुमुहूर्तस्य पूर्वे तु सर्वातोद्यसमन्वितम् । शङ्खध्वनिसमायुक्तं वाद्यघोषसमन्वितम् ॥
धूपदीपसमायुक्तं छत्रचामरसंयुतम् । उद्धृत्य शयनाल्लिङ्गं पिण्डिकया समन्वितम् ॥॥
घतं शिरोऽर्पणं कुर्याद्धेमदूर्वाङ्कुराक्षतैः । रत्नसिंहासने वापि शिबिकारज्जुयन्त्रके ॥
धामप्रदक्षिणं कृत्वा द्वारे दत्त्वार्घ्यपाद्यके । सुस्थिते सुस्थिरे लग्ने स्थाप्य द्वाराभिसंमुखम् ॥
नन्द्यावर्तशिला योज्य पीठं पश्चात्प्रवेशयेत् । लिङ्गं वियोजयेत्पीठं योजयेत्तु शनैः शनैः ॥
स्वस्वमूलेन संयोज्य वालुकाभिः प्रपूर्य च । लिङ्गमूर्ध्नि च संस्पर्शेत्सव्यहस्ताङ्गुलित्रयम् ॥
स्थाप्य चन्द्रार्कवत्तिष्ठ दशबीजं जपेद्दश । लाक्षासर्जरपाषाणं मधूच्छिष्टं च गुग्गुलुम् ॥
शङ्खधूलिं गुलं चैव महिषाज्येन संयुतम् । गुलवत्तण्डयेद्धीमाँल्लूखले मुसलेन तु ।
त्रियम्बकेन मन्त्रेण बन्धयेदष्टबन्धनम् ।......पूर्वोक्तविधिना चैव बेरशुद्धिं समाचरेत् ॥
एवं क्रमेण विधिवत् षडध्वन्यासमाचरेत् ।

Voir aussi *Ajitāgama* 18, 202b-213a.
[20] A : नानार्थैर्विभवैश्चैव ; C, G : नानार्थैर्विविधैश्चैव [21] C, F, G : ततः pour तदा
[22] C, F, G : तत्र pour पश्चात [23] C, F, G : हर्म्यप्रदक्षिणं [24] C, F, G : गेहे द्वारे

गन्धादिभिः सम यं [1]घृतशिरोऽर्पणं कुरु । मुहूर्तं लिङ्गमुद्धृत्य गर्भगेहं समाविशेत् ॥ ५१ ॥
आचार्यः सुप्रसन्नात्मा मूलमन्त्रमुदाहरन् । लिङ्गं सदाशिवं [2]चिन्त्य स्थापयेद्द्वारदिङ्मुखम्[3] ॥ ५२ ॥
[4]अधिष्ठानसमाप्तौ तु[5] पुरतो [6]द्वारबन्धतः । [7]मूर्धेष्टकायाः पूर्वं वा लिङ्गस्थापनमाचरेत् ॥ ५३ ॥
नन्द्यावर्तशिलां योज्य परितः शांकरादिषु । [8]कल्केनैवाष्टबन्धैर्वा बन्धयेत्तद्दृढं [9]यथा[10] ॥ ५४ ॥

[ पिण्डिकायोजनम् ]

मनोन्मन्यास्तु मन्त्रेण योजयेत्पिण्डिकां तथा[11] । शिलालाभे[12]ष्टकागर्भं [13]सुधया पिण्डिकां कुरु ॥५५॥
[14]स्थलं च समतां कृत्वा ततः शिल्पिविसर्जनम् । [15]पुण्याहप्रोक्षणं कृत्वा [16]गव्याभिषेचनं कुरु ॥ ५६ ॥
गन्धोदकेन [17]संस्नाप्य पुष्पं [18]मूर्धनि विन्यसेत् । पश्चासनं च संकल्प्य समभ्यर्च्य यथाविधि ॥ ५७ ॥

---

[1] A : घृतं pour घृत ; C : घृते    [2] A : चान्यत् pour चिन्त्य    [3] G : दिङ्मुखः pour दिङ्मुखम्

[4] voir *Ajitāgama* 18, 31b-33a et *Suprabhedāgama* I, 36, 3-4a

[5] C, F : अधिष्ठानं समाप्तौ तु ; G : अधिष्ठानं समाप्ते तु    [6] C : द्वारबन्धनः ; G : द्वारबन्धनम्

[7] A : मूलेष्टकायाः; C, G : कुलेष्टकायाः

[8] A : कलैकनैवाष्टबन्धैः ; B : कनकेनाष्टबन्धैर्वा ; C, F, G, : कल्केनैवाष्टगन्धैर्वा

[9] B : गुरुः pour यथा

[10] Pour les détails relatifs au *kalka* voir *Aṃśumatkāśyapa* 87, 1-7:

अथ कल्कविधानं तु वक्ष्ये संक्षेपतः क्रमात् । नद्यां वापि तटाके वा दीर्घिकायामथापि वा ॥
सस्यक्षेत्रे तथा विप्र निरूषरजले शुभे । सुदृढा चूर्णतुल्याभा स्थूलवालुकमिश्रिता ॥
संग्राह्या शर्करा ह्येषा पेष्य प्रक्षालनं कुरु । शर्कराशोषणं कृत्वा सूक्ष्मचूर्णं तु तत्कुरु ॥
त्रिफलोदके संमृज्य पिण्डं कृत्वा तु शोषयेत् । कपित्थनिर्यासस्यैव जलं त्रिविधमुच्यते ॥
पञ्चांशकं तु निर्यासं सार्वं वा पञ्च षड्गुणम् । सृतं स्वच्छजलं चैव सेकं चेति क्रमोदितम् ॥
स्वच्छसेकजलैः पिण्डं पेषयेन्नवनीतवत् । पश्चात्कार्पासतूलैश्च मिश्रं कृत्वा सुपेषयेत् ॥
कल्के भिन्ने तु यत्तन्तु कदलीदण्डतन्तुवत् । एतत्कल्कं समालेप्यं प्रथमं कल्कमेव हि ॥

Pour les détails relatifs à l'*aṣṭabandha* voir *Ajitāgama* 18, 216-218.

[11] C, G : पिण्डिका यथा pour पिण्डिकां तथा

[12] Nous constatons ici le chute de la voyelle initiale d'*iṣṭakā* qui ne correspond à aucun *saṃdhi* Pāṇinnén. Le sens ne permet pas d'y voir un composé.

[13] C, G : सुधायां    [14] C : सुस्थलं च सतां कृत्वा    [15] A : पुण्याहं pour पुण्याह

[16] B : कुरु गव्याभिषेचनम्    [17] B : संस्थाप्य    [18] C : मूर्धनेच ; E : मूर्ध्नि च ; G : मूर्ध्नि तु

[पूर्णाहुतिः, कुम्भाभिषेकश्च[1]]

पश्चादग्निं[2] समभ्यर्च्य [3]करीरान्स्थापितान्यजेत्[4]। जयादिरभ्याधानं[5] च राष्ट्रभृच्चैव[6] होमयेत्॥ ५८॥
स्विष्टमग्नेतिमन्त्रेण[7] पूर्णाहुतिं [8]समाचरेत्। कुम्भानुद्धृत्य शिरसा [9]बाह्यधामप्रदक्षिणम्॥ ५९॥
कृत्वालंकारसंयुक्तं लिङ्गाग्रे [10]स्थापयेत्क्रमात्। [11]षडध्वानं न्यसेल्लिङ्गे सूक्ष्मदेहस्य देहकम्॥ ६०॥
कुम्भाद्देवं समादाय मूललिङ्गस्य मध्यमे। हृदा मूलं समुच्चार्य [12]ध्यानयुक्तः समाहितः॥ ६१॥
योजयेत्सूक्ष्मदेहे तु [13]मयूराण्डे मयूरवत्। मनोन्मनीं च वर्धन्यां पिण्डिकायां च योजयेत्॥ ६२॥
अनन्तादि[14]शिखण्डयन्तानानीयावृतके[15] न्यसेत्। तत्कुम्भस्थोदकैः[16] स्नाप्य [17]चार्चनोक्तं समर्चयेत॥६३
[18]परिवारघटाद्बीजान्परितो विष्टरे न्यसेत्। हविष्यं दापयेत्पश्चाद्भद्रो भद्रपरः पुरे[19]॥ ६४॥
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात्॥ ६५॥

इति [20]श्रीमद्रौरवतन्त्रे[21] [क्रियापादे] [22]क्षेत्रलिङ्गप्रतिष्ठाविधिर्नाम त्रिंशः पटलः

---

1 cf. *Cintyāgama* 20, 152-164:

ततः कुम्भाभिषेकार्थं रक्षासूत्रं तु धारयेत्। लिङ्गं च पिण्डिकां कृत्वा गन्धपुष्पावगाहनम्॥
श्वेतवस्त्रेण संवेष्ट्य दिग्बन्धं चास्त्रमन्त्रतः। कुण्डस्थानं समाश्रित्य पूर्ववत्परिषेचयेत्॥
जयादिरभ्याधानं च राष्ट्रभृच्च क्रमाद्धुनेत्। पूर्णाहुतिं च शिरसा हुनेत्कुम्भेषु योजयेत्॥
नैवेद्यं धूपदीपं च उपचारादि संयजेत्। उद्धृत्य शिरसा बाह्य शिवकुम्भं तु देशिकः॥
अन्यकुम्भान्समादाय मूर्तिपास्तु शिरःसु च। सर्वातोद्यसमायुक्तं कृत्वा धामप्रदक्षिणम्॥
लिङ्गाग्रे विन्यसेत्कुम्भान्क्रमेण दलिकोपरि। श्रुतिकुम्भान्गृहीत्वा च स्नापयेत्परमेश्वरम्।
सुमुहूर्ते विशेषेण न्यसेन्मन्त्रस्वरूपकम्। धूपदीपं समाश्रित्य यजेन्नीराजनादिभिः॥
अर्चयेद्गन्धपुष्पैश्च कल्पयेत्पद्मासनम्। मन्त्ररूपं समादाय कुम्भाद्बिम्बे सुयोजयेत्॥
कुम्भाम्भोरुहमध्याच्च बिम्बस्य हृदि पद्मके। न्यस्त्वा वस्तुमयं बीजं प्रोक्ष्य मन्त्रस्वरूपकम्॥
बिम्बमूर्ध्नि समापूर्य साङ्गं मन्त्रस्वरूपकम्। कुम्भतोयाभिषेकेन इष्टनाम तु कल्पयेत्॥
तस्य वामे तु विन्यस्य वर्धन्याश्च मनोन्मनीम्। बीजं विद्येश्वराणां च आवृते विन्यसेत्सुधीः॥
मूलेन विन्यसेद्धीमान्कुम्भैः स्नात्वार्चयेत्क्रमात्। पायसान्नादिनैवेद्यं पञ्चवक्त्रे निवेदयेत्॥
ताम्बूलं दापयेत्पश्चादुपचारैश्च संयजेत्। एवं यः स्थापयेल्लिङ्गं स पुण्यां गतिमाप्नुयात्॥

voir aussi *Ajitāgama*, 18, 165-170 et 223b-268, et *Rauravāgama* 28, 62-64 et 83-90.

2 C, F, G : अग्नीन् pour अग्निं   3 C, F : करीन्द्रान्   4 A : न्यसेत् pour यजेत्
5 A, C, E, G : अभ्याधानैः pour अभ्याधानं   6 C : अपि pour एव ; E : चक्र ; G : अत्र
7 A, B : मूलेन pour मन्त्रेण   8 B : अथाचरेत् pour समाचरेत्
9 B : बाह्ये ग्राम pour बाह्यधाम   10 C, F, G : स्थापयेद्बुधः   11 C : षडध्वने
12 A : ध्यानयुक्तसमाहितम् ; C, G : ध्यानयुक्तं समाहितम्   13 A : मयूराण्ये
14 C, E : शिखण्डयन्ता चा pour शिखण्डयन्ताना   15 C, F : आवृतकं pour आवृतके
16 C : उदके pour उदकैः   17 A omet च   18 C omet le *śloka* n° 64
19 A, G : भद्राभद्रा परा पुरे ; C : भद्राभद्रौ परापुरे   20 A : श्रीरौरवतन्त्रे   21 A ajoute संहितायां
22 A : क्षेत्रलिङ्गप्रतिष्ठाविधिपटल एकत्रिंशः ; B : क्षेत्रलिङ्गविधिर्नाम एकत्रिंशः पटलः ; C : लिङ्गप्रतिष्ठाविधिर्नाम एकचत्वारिंशत्पटलः ; E ; लिङ्गप्रतिष्ठाविधिरेकचत्वारिंशत्पटलः ; F, G : क्षेत्रलिङ्गप्रतिष्ठाविधिपटलः एकचत्वारिंशत

# [एकत्रिंशः पटलः]

## [गौरीस्थापनविधिः[1]]

### [ गौरीप्रतिष्ठात्रैविध्यम्[2]]

अथ [3]गौरीप्रतिष्ठां च वक्ष्येऽहं शृणु सुव्रत । त्रिविधं तत्समाख्यातं [4]वीरयोगक्रमं तथा ॥ १ ॥
गौरीमेव[5] स्थितां[6] [7]यत्र केवलं तदुदाहृतम् । तदेव [8]वीरमाख्यातं शम्भुना सह योगकम् ॥ २ ॥
[9]प्राकारे [10]शयनस्थाने [11]स्थाप्यं [12]यानं क्रमं विदुः । मृदा वाश्ममयं वीरं योगं लोहजमुच्यते ॥ ३ ॥
[13]मृण्मयं लोहजं [14]वाथ [15]दृषद्वाप्युभयं तथा । [16]संपातस्थानकं वीरं [17]योगक्रमं त्रिभङ्गिकम् ॥ ४ ॥

---

[1] Pour गौरीस्थापनविधि voir *Aṃśumadāgama* 80, *Acintyaviśvasādākhya* 59, *Kāmika* II 44, *Kāraṇa* I 89 et II 84, *Yogaja* 13, *Vīra* 65, *Santāna* 35, *Sahasra* 41 et *Suprabheda* I 38.

[2] cf. *Aṃśumadāgama* 80, 2b-3:
स्वतन्त्रं केवलं चेति द्विविधं परिकीर्तितम् । स्वतन्त्रं वीरमित्युक्तं परिवारादिभिर्युतम् ॥
परिवारादिहीनं यत्केवलं चेति कथ्यते ।

cf. *Kāraṇāgama* II 84, 1-3:
अथातः संप्रवक्ष्यामि सर्वलोकहिताय च । सर्वज्ञानप्रदं चैव शक्तित्रयमिहोच्यते ॥
योगं पीठसमायुक्तं भोगं वामसमन्वितम् । वीरं स्वतन्त्रमित्युक्तं शक्तित्रयमिहोच्यते ॥
मूललिङ्गसमीपे तु वामभागेऽर्धमण्टपे । आसनं स्थानकं प्रोक्तं द्विविधं भोगशक्तिका ॥

cf. *Suprabhedāgama* I 38, 4b-6 et 14b:
त्रिभेदमन्यच्छक्तीनामेकं युक्तं सहेति च । शक्तिस्तु केवलं यत्र स्थाप्यते त्वेकमुच्यते ॥
पूर्वं शम्भुं प्रतिष्ठाप्य शक्तेस्तु स्थापनं तथा । कृतं युक्तं विधानेन युक्तं तत्परिकीर्तितम् ॥
शक्तिं शंभुमथैकत्र स्थापयेत्तत्सहैव तु । मृण्मयं शैलजं चैकं शेषं लोहजमुच्यते ॥

[3] A : गौरीप्रतिष्ठाया pour गौरीप्रतिष्ठां च ; C, F, G : गौरीप्रतिष्ठायां    [4] A, B : वीरो pour वीर

[5] G : एवं pour एव    [6] C, F, G : स्थितं    [7] F : स्येवं pour यत्र

[8] C, F, G : बीज pour वीर    [9] A : प्रकारे ; C : प्राकारा ; G : प्राकार    [10] B : शयने स्थाने

[11] C : स्थाप्य    [12] B, C, G : यानक्रमं    [13] B : मृन्मयं लोहजं ; C, F, G : कामं लोहजकं

[14] F : च pour वा

[15] A : वृषं द्वाप्युभयं तु वा ; B : प्रपश्चाप्यमयं तु वा ; C : दृष्टाद्वाप्युभयं तथा ; F : दृष्ट्वाप्युभयं तु वा

[16] C, G : संपाद pour संपात    [17] C, G : योगं कामं

[गौरीलक्षणम्[1]]

द्विपादं [2]द्विभुजं शान्तं द्विनेत्रं श्यामसंनिभम् । करण्डमकुटं[3] वापि केशबन्धमथापि वा ॥ ५ ॥
उत्पलं दक्षिणे हस्ते धृत्वा [4]वामं प्रलम्बयेत् । ईषत्समीक्ष्य तं देवं [5]सूत्रयुक्त्या तु कल्पितम्[6] ॥ ६ ॥
संपातस्थानकं चेत्तु समसूत्रेक्षणं तथा । [7]नासान्तोभयहस्तं चाप्युभयोरुत्पलं भवेत् ॥ ७ ॥
उभयोरम्बुजं वाथ [8]सिंहकर्णकरेण धृत् । एवं कृत्वा विधानेन ततः स्थापनमाचरेत्[9] ॥ ८ ॥

[रत्नादिन्यासः[10]]

[11]मण्टपं भूषयित्वा तु गोमयालेपनादिभिः । स्थण्डिलं शालिभिः कृत्वा [12]दर्भपुष्पादिभिः स्तरेत् ॥ ९ ॥
निधाय पीठं तत्रैव रत्नहेमाम्बुजं[13] न्यसेत् । देव्यास्तु कवचेनैव देवीं पीठोपरि न्यसेत् ॥ १० ॥
सुस्निग्धं सुदृढं कृत्वा [14]गव्यैः कृत्वाभिषेचनम् । गन्धादिभिः समभ्यर्च्य [15]स्थण्डिलेऽन्ये[16] तु विन्यसेत् ॥ ११ ॥

---

[1] cf. *Aṃśumadāgama* 80, 6b-7 :
द्विहस्ता च द्विनेत्रा च किरीटमकुटान्विता । नीलोत्पलं दक्षहस्ते वामहस्ते प्रसारितम् ॥
गौरीरूपमिदं प्रोक्तं स्त्रीमानवशतः क्रमात् ।

cf. *Virāgama* 65, 4-6:
देव्या रूपमहं वक्ष्ये शृणुष्व कमलासन । द्विनेत्रां चारुवदनां सुस्तनां च सुयौवनाम् ॥
द्विहस्तां च द्विपादां च नीलोत्पलयुतौ करौ । करण्डमकुटां चैव सर्वाभरणभूषिताम् ॥
दुकूलपट्टवसनच्छन्नवीरसमन्विताम् । पादनूपुरसंयुक्तां देव्या रूपमिहोच्यते ॥

[2] C, G : त्रिभुजं [3] C : मुकुटं pour मकुटं [4] C : यामं
[5] A : सूत्रं युक्त्यानुकल्पितम् [6] B, C, F : कम्पितम् pour कल्पितम् [7] A : नाक्षान्त pour नासान्त
[8] B : सिह्यकर्णं करेण धृत् ; G : सिंहकण्ठकरेण धृत् [9] B : आश्रयेत् pour आचरेत्

[10] cf. *Kāraṇāgama* 1 89, 6b-10:
रत्नन्यासं ततः कुर्यान्मण्टपे समलंकृते । स्थण्डिलं शालिभिः कुर्यात्तिलदर्भैः परिस्तरेत ॥
तन्मध्ये विन्यसेत्पीठं नवकोष्ठसमायुतम् । इन्द्रनीलं न्यसेदैन्द्रे वैडूर्यं वह्निगोचरे ॥
याम्यायां तु महानीलं मुक्तां निर्ऋतिगोचरे । वारुणे स्फटिकं चैव वायव्ये पुष्यरागकम् ॥
प्रवालं सौम्यदेशे तु वज्रमीशानगोचरे । माणिक्यं मध्यमे न्यस्त्वा दिक्पालानां तु बीजकैः ॥
प्रतिमां तत्र विन्यस्य सुस्निग्धं कारयेत्ततः ।

[11] A : मण्डपं [12] B : दर्भैः pour दर्भ [13] A : अम्बुजे pour अम्बुजं
[14] C : खर्वैश्चैवाभिषेचयेत् ; F: गव्यैश्चैवाभिषेचयेत् [15] B : स्थण्डिले विन्यसेद्बुधः
[16] La forme attendue normalement pour le loc. sing. du pronom *anya* devrait être *anyasmin*

[नेत्रोन्मीलनम्[1]]

समभ्यर्च्य हृदा मन्त्री गन्धैः पुष्पैश्च धूपकैः । [2]स्वर्णसूचिप्रहाराभ्यां [3]भ्रूरेखादीन्समालिखेत् ॥ १२ ॥
[4]भ्रूरेखां पक्ष्मरेखां च कृष्णमण्डलरेखिकाम्[5] । ज्योतिर्मण्डलमालिख्य गौरीनेत्रमुदाहरन् ॥ १३ ॥
[6]मधुवाता [7]ऋतायेति मधुना तर्पयेद्बुधः । [8]घृतं मिमिक्षेतिमन्त्रेण [9]नेत्रयोस्तु घृतार्पणम् ॥ १४ ॥
[10]गौर्धेनुभव्यमन्त्रेण सवत्सां गां प्रदर्शयेत् । [11]ब्रह्मजज्ञानमन्त्रेण [12]ब्राह्मणान्दर्शयेत्ततः ॥ १५ ॥
[13]गौरीमिमायमन्त्रेण कन्यासङ्घं[14] प्रदर्शयेत् । [15]छन्नवस्त्रं परित्यज्य गव्यैः कृत्वाभिषेचनम्[16] ॥१६ ॥

[1] cf. *Kāraṇāgama* I 89, 11-18:

नेत्रद्वययुतर्क्षे तु नेत्रमोक्षणमारभेत् । मण्टपे स्थण्डिलं कृत्वा अष्टद्रोणैश्च शालिभिः ॥
तन्मध्ये नलिनं लिख्य साष्टपत्रं सकर्णिकम् । तरङ्गवेष्टनं कृत्वा बेरं तु प्राङ्मुखं कुरु ॥
हेमसूचिप्रहाराभ्यां पक्ष्मरेखां समालिखेत् । असितं मण्डलं लिख्य दृष्टिमण्डलमालिखेत् ॥
ज्योतिर्मण्डलकं पश्चान्नेत्रमुच्चार्य लेखयेत् । वस्त्रहेमाङ्गुलीयाद्यैः संपूज्योद्वास्य शिल्पिनम् ॥
हिरण्यदूर्वया विद्वान्मध्वाज्याभ्यां तु तर्पयेत् । सौवर्णमुत्तमं पात्रं ताम्रपात्रं तु मध्यमम् ॥
मृण्मयं चाधमं पात्रं प्रस्थेनैव तु पूरितम् । मध्वाज्याभ्यां प्रपूर्याथ तत्सूक्ताभ्यां प्रदर्शयेत् ॥
धेनुं गौर्धेनुहव्येति ब्रह्मसूक्तेति भूसुरान् । प्रच्छन्नपटमावर्ज्य जनसङ्घान्प्रदर्शयेत् ॥
पञ्चमृत्पञ्चगव्यैश्च स्नापयेत्पुरुषेण तु । शुद्धतोयेन संस्नाप्य गन्धादिभिर्यजेद्धृदा ॥

cf. *Suprabhedāgama* I 38, 17-24a:

पूर्ववद्रत्नविन्यासं कृत्वा तदनु बिम्बकम् । सुस्निग्धं कारयित्वा तु नेत्रमोक्षणमारभेत् ॥......
हेमसूचिप्रहाराभ्यां नेत्रमन्त्रेण देशिकः । भ्रूरेखां प्रथमं लिख्य पक्ष्मरेखां द्वितीयकम् ॥
श्वेतमण्डलमालिख्य ततो वै कृष्णमण्डलम् । ज्योतिर्मण्डलं मध्ये तु कर्तव्यं शिल्पिना बुधः ॥
शिल्पिमुद्वास्य गुरुणा कर्तव्यं कर्म चोत्तरम् । हिरण्यनखसंप्रोततर्जनीमध्यमाङ्गुलिः ॥
नासां नेत्रेऽप्यसौ धीमाञ्छक्तिमन्त्रेण संस्पृशेत् । कांस्ये मधुघृताभ्यां तु सौवर्णया तु दूर्वया ॥
हृन्मन्त्रेण तु संसिच्य सवत्सां गां पयस्विनीम् । गौर्धेनुहव्यमन्त्रेण देशिको गां प्रदर्शयेत् ॥
ब्राह्मणादीञ्जनान्सर्वान्वीक्षयित्वाक्षिमन्त्रतः । बिम्बशुद्धिं ततः कृत्वा शुद्धतोयैर्विचक्षणः ॥

[2] A : हिरण्य pour स्वर्ण    [3] B : मश्रुरेखां समालिखेत् ; C, F : भ्रूरेखादि समाचरेत् ; G : भ्रूरेखादीन् समाचरेत्

[4] A : भ्रूरेखा पक्ष्मरेखा च ; B : भ्रूरेखा पद्मरेखां च    [5] A : रेखकान् pour रेखिकाम्

[6] cf. *Taittirīyasaṃhitā* 4. 2. 9. 3 et 5. 2. 8. 6    [7] A : रतायेति

[8] cf. *Taittirīyāraṇyaka* 10. 10. 2.

[9] A : नेत्रयोरस्त्रतर्पणम्

[10] cf. *Āpastambamantrapāṭha* 2. 10. 9 ; A, G : गौर्धेनुर्भव्यमन्त्रेण ; B : गौर्येन भव्यमन्त्रेण

[11] cf. *Taittirīyasaṃhitā* 4. 2. 8. 2.

[12] A : ब्राह्मणान् भोजयेत्ततः    [13] cf. *Taittirīyāraṇyaka* 1. 9. 4

[14] A : सौम्यां pour सङ्घं    [15] G : छिन्न pour छन्न    [16] A : अभिषेचयेत् pour अभिषेचनम्

[ग्रामप्रदक्षिणम्, जलाधिवासश्च[1]]

[2]वस्त्रैराभरणैर्माल्यैर्भूषयित्वा सुगन्धकैः। सर्वालंकारसंयुक्तं ग्रामं कृत्वा प्रदक्षिणम्॥ १७॥
जलाशयं ततः प्राप्य जलाधिवासनं कुरु।

[मण्टपः[3]]

देवेश्वरालयाग्रे वा [4]देव्यालयाग्रकेऽपि वा॥ १८॥
नवाष्टसप्तहस्तं[5] वा मण्टपं तु [6]समाश्रकम्। पङ्क्तित्रयसमायुक्तं कलाचरणसंयुतम्॥ १९॥
[7]मण्टपं वाथ कूटं वा प्रपां वा शक्तितः कुरु। द्वारतोरणसंयुक्तं वितानाद्यैरलंकृतम्॥ २०॥
[8]मध्येशं वेदिकाव्याससमुत्सेधं मुष्टिमात्रकम्। [9]गुणाक्षकरजव्याससमोत्सेधोपवेदिका॥ २१॥
शांकरे च महाशासु पञ्चकुण्डाम्बुजाकृति[10]। योनिकुण्डानि वा कल्प्य गोमयालेपनं कुरु॥ २२॥

---

[1] cf. *Virāgama* 65, 26-30 :
अलंकृत्य च तां देवीं कुर्याद्ग्रामप्रदक्षिणम्। नदीतटाकतीरे वा गोमयेनानुलेपिते॥
पीठं तत्रैव निक्षिप्य गौरीं तत्रोपरि न्यसेत्। स्नापयेत्पञ्चगव्येन जलाधिवासनं कुरु॥
नववस्त्रेण संवेष्ट्य कूर्चेनैव समन्वितम्। जलमध्ये न्यसेद्देवीं गौरीबीजेन देशिकः॥
पूर्वादीशानपर्यन्तं वर्धनीं विन्यसेत्ततः। सवस्त्रां सापिधानां च वामाद्याश्चैव विन्यसेत्॥
तस्योर्ध्वे च प्रपां कृत्वा दीपयुक्तं विधीयते। एकरात्रं त्रिरात्रं वा पञ्चरात्रमथापि वा॥
cf. *Suprabhedāgama* I 38, 24b-27a :
सर्वालंकारसंयुक्तं कृत्वा ग्रामप्रदक्षिणम्। जलाधिवासनं पश्चात्त्रिरात्रं वैकरात्रकम्॥
चतुरश्रां प्रपां कृत्वा दर्भमालाविभूषिताम्। वस्त्रैरावेष्टयित्वा तु पुष्पैर्दर्भैर्विशेषतः॥
कण्ठमात्रे जले शुद्धे शक्तिं तत्राधिवासयेत्। दिक्पालाधिपकुम्भानि विन्यसेत्परितो जले॥
[2] B : वस्त्रैश्च pour वस्त्रैर्
[3] cf. *Aṃśumadāgama* 80, 15b-18a :
पूर्वे वा चोत्तरे वापि मण्टपं कारयेद्बुधः। मण्टपं नवधा भज्य मध्ये वेदीं प्रकल्पयेत्॥
कुण्डानि परितः कल्प्य पद्मकुण्डं चतुर्दिशि। पावकादिषु कोणेषु योन्याकाराणि कल्पयेत्॥
इन्द्रईशानयोर्मध्ये प्रधानं वृत्तकं कुरु। मण्टपं भूषयेत्पश्चात्"
cf. *Suprabhedāgama* I 38, 27b-31a et 45 :
प्रतिष्ठामण्टपं कृत्वा सर्वालंकारसंयुतम्। षोडशस्तम्भसंयुक्तं चतुर्द्वारसमायुतम्॥
चतुस्तोरणसंयुक्तं दर्भमालाभिशोभितम्। तन्मध्ये वेदिकां कृत्वा तत्त्रिभागैकविस्तृताम्॥
हस्तमात्रसमुत्सेधां दर्पणोदरसंनिभाम्। तालमात्रसमुत्सेधामुपवेदीं प्रकल्प्य वै॥
तस्योत्तरसमीपे तु तद्वद्वै स्नानमण्डपम्। तन्मध्ये स्नानवेदीं च तिस्रो वा द्व्येकमेखला॥
नवपञ्चाग्निकं वापि त्र्यं वा चैकमेव वा। योन्याकाराणि विधिवत्ततः कुण्डं प्रकल्पयेत्॥
[4] A : देव्याचार्याग्रकेऽपि वा [5] C : कृत pour हस्त [6] A : समाश्रमम् [7] A : मण्डपं
[8] मध्येशं ; C. F, G : मध्येसं [9] A : गुणाक्षकरजं व्यासमुत्सेधं सोपवेदिका ; C : गुणकर्षकरं जव्यासमुत्सेधं सोपवेदिका ; F : गुणकर्षकरव्याससमुत्सेधं सोपवेदिका
[10] La forme grammaticale correcte est पञ्चकुण्डमम्बुजाकृति ; mais le mètre ne serait pas respecté.

[1]मण्डपस्योत्तरे देशे स्नानश्वभ्रं प्रकल्पयेत् । देव्यास्तु [2]पीठविस्तारत्रिगुणं श्वभ्रविस्तृतम्[3] ॥ २३ ॥
[4]त्रिद्वयेकमेखलं वाथ [5]वेदाग्न्यक्षाङ्गुलं ततम् । उन्नतं [6]चैकं कर्तव्यं मेखलात्रयसंयुतम् ॥ २४ ॥
अधस्तान्मेखलाहीनं [7]चैकमेखलयापि वा । नालमुत्तरतः [8]कुर्यात्तत्त्रिभागैकमानतः ॥ २५ ॥
व्यासायामसमं कुर्याद्बाह्ये[9] मेखलमन्तरे[10] । जल[11]धारासमायुक्तं गुणमात्रविशालतः ॥ २६ ॥

[शयनाधिवासः[12]]

ततः शिल्पिनमुद्वास्य पुण्याहप्रोक्षणं कुरु । स्थण्डिलं वेदिकायां तु [13]शालिभिर्विमलैः कुरु ॥ २७ ॥
तस्मिन्नलिममालिख्य तण्डुलैस्तिललाजकैः । दर्भैः पुष्पैः परिस्तीर्य [14]शयनं पश्च कल्पयेत् ॥ २८ ॥
जलाद्गौरीं [15]समानीय स्नानश्वभ्रे निधापयेत् । व्यपोह्य वस्त्रकूर्चादीन्[16] गव्यैः कृत्वाभिषेचनम्[17] ॥२९ ॥
[18]शुद्धाद्भिः स्नापयेत्पश्चाद्गौर्या[19] मन्त्रमुदाहरन् । [20]गन्धादिभिर्हृदाभ्यर्च्य नववस्त्रं धरेत्ततः ॥ ३० ॥
बध्वा प्रतिसरं पश्चात्कूर्चमालभ्य[21] मूर्धनि । शयने शाययेत्पश्चा[22]त्प्राक्शिरश्चोर्ध्ववक्त्रकम् ॥ ३१ ॥

---

[1] C, G : मण्टप pour मण्डप

[2] A : पीठविधृता त्रिगुणं ; B : पीठवित्रृतेस्त्रिगुणं C, F, G : पीठविस्तारं त्रिगुणं

[3] B : विस्तृति pour विस्तृतम्

[4] A : त्रिद्वैयमेखलं ; B : त्रिद्वैधमेखलां ; C : त्रिद्वयमेखलं ; F : तद्वयं मेखलं ; G : त्रिद्विमेखलं

[5] A : देव्याग्न्यक्षांगुलास्तृतम् ; B : देव्याग्न्यक्षङ्गुलांस्तथा ; C, F : वेदाग्न्यक्षाङ्गुलस्मृतम्

[6] A, B : चैव pour चैकं ; F, G : चैक

[7] A, B : चैकमेखलयोरपि [8] A, B : कुर्यात्त्रित्रिभागैकभागतः [9] B : बाह्य pour बाह्ये

[10] C : अन्धरे pour अन्तरे [11] B, C, G : धार pour धारा

[12] cf. *Kāraṇāgama* I 89, 31-40 :

गोमयालेपनं कृत्वा कुर्याच्छिल्पिविसर्जनम् । मण्टपं भूषयेत्पश्चाद्वसुदिक्षु ध्वजान्वितम् ॥
वितानदर्भमालाभिः संयुक्तं चाष्टमङ्गलैः । नालिकेरफलैश्चैव मुक्तादामैः प्रलम्बितम् ॥
गात्रवेष्टनसंयुक्तं युगतोरणभूषितम् । भूसुरान्भोजयेत्तत्र उच्छिष्टोद्वासनं कुरु ॥
गोमयालेपनं कृत्वा यागमण्टपशुद्धये । पञ्चगव्येन संप्रोक्ष्य पूर्वं वा पश्चिमे तथा ॥
वास्तुहोमं ततः कृत्वा पर्यग्निकरणं कुरु । पुण्याहं वाचयित्वाथ अष्टद्रोणैश्च शालिभिः ॥
वेद्यूर्ध्वे स्थण्डिलं कुर्यात्तदर्धैस्तण्डुलैरपि । तदर्धैस्तिलसंयुक्तैर्दर्भैः पुष्पैः परिस्तरेत् ॥
तन्मध्ये शयनं कल्प्य चर्मजाद्यैरनुक्रमात् । द्वारपूजादिकं सर्वं स्थापनक्रमवत्सुधीः ॥
जलादुत्तीर्य गौरीं तु स्नानश्वभ्रोपरि न्यसेत् । वस्त्रकूर्चं विसृज्याथ पूर्ववच्छुद्धिमाचरेत् ॥
नवाम्बरेण संछाद्य गन्धपुष्पादिभिर्हृदा । कौतुकं बन्धयेत्पश्चाद्गौरीगायत्रिमन्त्रतः ॥
आरोप्य सुमुहूर्ते तु प्राक्शिरश्चोर्ध्ववक्त्रकम् । शयने शाययेद्गौरीं रक्तवस्त्रेण वेष्टयेत् ॥

[13] G : शालिपिष्टमलंकुरु [14] voir *supra* p. 41 note 2

[15] B : समादाय [16] C : कूर्चादि pour कूर्चादीन् [17] A, G : कृत्वाभिषेचयेत्

[18] C : शुद्धां च [19] B : गौरी pour गौर्या [20] B : गन्धाद्भिश्च pour गन्धादिभिः

[21] C, G : कूर्चमालां च ; कूर्चमाला च [22] B : प्राकशिरां pour प्राक्शिरः



[कुम्भस्थापनम्[1]]

नववस्त्रेण संवेष्ट्य कवचेन तु मन्त्रतः । नवसंख्या[2]श्रवान्कुम्भान्सूत्रादिभिः समन्वितान् ॥ ३२ ॥
गौर्यास्तु [3]गौरीकुम्भं तु स्थापयेत्तु शिरोऽन्तिके । वामादिवसुकुम्भं तु शक्रादिषु निधापयेत् ॥ ३३ ॥
तत्तन्मन्त्रं न्यसेत्तेषु [4]हविरन्तं समर्चयेत् । [5]दिशास्वध्ययनं कुर्याद्धोमकर्म समाचरेत्[6] ॥ ३४ ॥

[होमः[7]]

अग्न्याधानादिकं [8]सर्वमग्निकार्योक्तमाचरेत् । [9]पलाशोदुम्बराश्वत्थवटाः पूर्वादिषु क्रमात् ॥ ३५ ॥

---

[1] cf. *Kāraṇāgama* I 89, 41-45a:
देव्याश्च दक्षिणे भागे गौरीकुम्भं तु विन्यसेत् । ससूत्रान्सापिधानांश्च सवस्त्रान्कूर्चसंयुतान् ॥
हेमपङ्कजसंयुक्तान्द्रोणोदकसुपूरितान् । गौरीरूपं ततो ध्यात्वा तद्रूपं तु घटे न्यसेत् ॥
परितोऽष्टौ घटान्न्यस्त्वा सूत्रादिभिः समन्वितान् । इन्द्रादिषु क्रमेणैव वामादिवसुशक्तिकाः ॥
स्वस्वबीजसमायुक्तं न्यस्त्वा संपूजयेद्बुधा । मुकुलीं पद्ममुद्रां च बिम्बमुद्रां प्रदर्शयेत् ॥
दिशास्वध्ययनं कुर्यात्ततो होमं समाचरेत् ।

[2] C : नव pour नवान्

[3] B : गौरि pour गौरी [4] B : हविषान्तैः ; C, G : हविषान्तं [5] C, G . दिशामध्ययनं

[6] cf. *Virāgama* 65, 47:
चतुर्दिक्षु चतुर्वेदैः कुर्यादध्ययनं ततः । गौरीमूलं जपेत्तत्र आग्नेयादि चतुर्दिशि ॥

[7] cf *Kāraṇāgama* I 89, 45b-52:
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् । कुण्डमध्ये यजेद्देवीं रक्तपद्मोपरि स्थिताम् ॥
आषाढाश्वत्थखदिरवटाः पूर्वादिदिक्षु वै । औदुम्बरमपामार्गं शम्यर्कं पावकादिषु ॥
पलाशं तु प्रधानं स्याज्जुहुयाद्देशिकोत्तमः । समिधो जुहुयाद्धीमान्सद्योजातेन मन्त्रतः ॥
गौरीगायत्रिमन्त्रेण घृतं हुत्वा विशेषतः । अघोरेण चरुं हुत्वा लाजं वामेन होमयेत् ॥
तिलमस्त्रेण जुहुयात्सर्षपं कवचेन तु । यावकं पञ्चमेनैव द्रव्यान्ते व्याहृतिं हुनेत् ॥
शतमर्धं तदर्धं वा प्रत्येकं जुहुयात्क्रमात् । गौरीमिमायमन्त्रेण होमयेत्पञ्चविंशतिः ॥
गौरीबीजमनुस्मृत्य होमयेच्छतसंख्यया । द्रव्यान्ते तु स्पृशेद्गौरीं गौरीमिमायमन्त्रतः ॥
गेयनृत्तादिभिर्युक्तं रात्रिशेषं व्यपोह्य च ॥

cf. *Virāgama* 65, 40b-46:
ततो होमं प्रकुर्वीत नव वा पञ्च एव वा । समिदाज्यचरूँल्लाजान्मुद्गमाषयवांस्तथा ॥
गौरीमूलेन मन्त्रेण समिधा हूयते क्रमात् । आज्यं गायत्रिमन्त्रेण हृदयेन चरुस्तथा ॥
शिरोमन्त्रेण लाजश्च मुद्गं वामेन हूयते । माषं सद्येन होतव्यं यवमीशानमन्त्रतः ॥
एवमेव क्रमेणैव प्रत्येकं तु शताहुतिः । घृतमिक्षेति मन्त्रेण घृतेनैव शताहुतिः ॥
देवस्य त्वेति मन्त्रेण अन्नाहुतिमथाचरेत् । द्रव्यान्ते व्याहृतिं हुत्वा स्पर्शयेत्प्रतिमां ततः ॥
हव्यवाहेति मन्त्रेण सर्वद्रव्यसमन्वितम् । स्विष्टमग्नेति मन्त्रेण जुहुयात्तदनन्तरम् ॥
नृत्तगेयसमायुक्तं रात्रौ जागरमुच्यते ।

[8] A : सर्वं कर्माग्निकार्यमाचरेत् ; B : सर्वं कर्म पूर्णान्तमाचरेत्

[9] A : पालाशौदुम्बराश्वत्थवटाः ; B : पालाशोदुम्बराश्वत्थवटं

शांकरे च [1]पलाशः स्यात्समित्परिधयस्तथा । [2]गौरीगायत्रिमन्त्रेण[3] समिद्धोमं समाचरेत् ॥ ३६ ॥
[4]गौरीमिमायमन्त्रेण [5]हृदा च घृतहोमकम् । शिखया चरुहोमं तु प्रत्येकं तु शताहुतिः ॥ ३७ ॥
पञ्चाशत्पञ्चविंशद्वा प्रत्येकं होममाचरेत् । द्रव्यान्ते व्याहृतिं हुत्वा ततो वै स्पर्शमाहुतिम्[6] ॥ ३८ ॥
[7]ब्रह्माङ्गैस्तत्तदङ्गानि स्पृष्ट्वा स्पृष्ट्वा दशाहुतिः ।

[कुम्भाभिषेकः[8]]

एवं जागरणं रात्रौ स्नापयेदथ ऋक्षके[9] ॥ ३९ ॥
आचार्यो मूर्तिपैः सार्धमात्मशुद्धिं समाचरेत्[10] । विम्बकुम्भानलान्सर्वान्समभ्यर्च्य विधानतः ॥ ४० ॥

---

[1] B : फलाशस्य pour पलांशः स्यात्  [2] C : गौरि pour गौरी

[3] Pour गौरीगायत्री voir *Suprabhedāgama* I 38, 12b-14a;
उच्यते गौरिगायत्री गणाम्बिकायै विद्महे । इत्युच्चार्य तदन्ते तु महातपायै धीमहि ॥
एवमुक्त्वा तदन्ते तु तन्नो गौरी प्रचोदयात् । गौरीगायत्रिसंज्ञाख्या चतुर्विंशतिकाक्षरा ॥
voir aussi *supra* p. 33 note 14.

[4] voir *supra* p. 33 note 14  [5] A : हृदार्चं pour हृदा च

[6] G, F. G : आहुतिः pour आहुतिम्  [7] B omet le demi-*śloka* 39a

[8] cf. *Kāmikāgama* II 44, 86b-96:
ततः प्रभाते शुद्धस्तु मूर्तिपैः सह देशिकः । उत्थाप्य देवीं कुम्भांश्च प्राग्वद्वह्निं च तर्पयेत् ॥
दत्त्वा पूर्णाहुतिं पश्चात्प्रविशेद्भवनं ततः । मानुषे दैविके वापि प्राग्वत्संस्कृत्य विन्यसेत् ॥
कशिलां पूर्वमन्त्रेण रत्नहेमादिगर्भिताम् । प्राग्वद्धात्रीश्वरीं नीत्वा मूलमुच्चार्य विन्यसेत् ॥
सुमुहूर्ते सुलग्ने तु मन्त्रन्यासं च कारयेत् । चला चेत्स्नानवेद्यां तु मन्त्रन्यासं समाचरेत् ॥
देव्यग्रे तु घटान्न्यस्य कुम्भाद्बीजं तु तद्धृदि । विन्यसेदनुकुम्भेभ्यः पीठस्य परितो मुनून् ॥
तत्त्वमूर्त्यादिविन्यासं पूर्ववत्कारयेत्ततः । तत्तत्कुम्भोदकैश्चैव तद्देशेऽभिषेचयेत् ॥
स्नपनं कारयेदन्ते नैवेद्यं चोत्सवं गुरुः । स्तुत्वानेकविधैः स्तोत्रैरमुं श्लोकं पठेत्ततः ॥
यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी । तावदत्र त्वया देवि स्थातव्यमिह मन्दिरे ॥
संपूज्य देशिकादींश्च दक्षिणां दापयेत्ततः । उत्तमादिविभिन्नां तु लिङ्गस्थापनचोदिताम् ॥
ततः कल्याणकर्म स्याच्चतुर्थे कर्मवित्ततः । देव्याः स्वयं प्रधानायाः सहजायाश्च वर्जयेत् ॥
कर्म वैवाहिकं विप्राः प्रतिष्ठैवं समीरिता ।

cf. *Suprabhedāgama* I 38, 48-63 :
प्रभाते सुमुहूर्ते तु सर्वातोद्यसमायुतम् । आचार्यमूर्तिपांश्चैव दैवज्ञं संप्रपूजयेत् ॥
पूर्णाहुतिं ततो दत्त्वा बीजमुख्येन मन्त्रतः । शक्तिबिम्बं ततोत्थाप्य स्नानवेद्युपरि न्यसेत् ॥
वर्धनीं तु ततोत्थाप्य देशिकश्चोत्तराननः । बिम्बस्य हृदये मूर्ध्नि नाभौ मूले तु विन्यसेत् ॥
न्यस्त्वा ब्रह्माङ्गमन्त्राणि विन्यसेत्सर्वमातृकाः । वर्धकुम्भस्थशक्तींश्च बिम्बे संयोज्य मूलतः ॥
बीजमुख्येन मन्त्रेण तज्जलेनाभिषिच्य वै । वामादिशक्तिकुम्भाद्भिः संस्नाप्य स्वस्वमन्त्रकैः ॥
स्नानलेपादिभिरद्भिः स्वस्वमन्त्रैर्विशेषतः । पाद्यमाचमनं चार्घ्यं दद्याद्देव्यै हृदादिभिः ॥
अभ्यर्च्य गन्धपुष्पाद्यैः सर्वालंकारसंयुतम् । पायसं हविषं तत्र हृदयेन प्रदापयेत् ॥

[1]गौरीगायत्रिमन्त्रेण [2]चाज्येनैव दशाहुतिः। गौर्यास्तु मूलमन्त्रेण पूर्णाहुतिं समाचरेत् ॥ ४१ ॥
गौरीबिम्बं [3]ततोद्धृत्य स्नानवेद्यां निधापयेत् । व्यपोह्य वस्त्रकूर्चादीन्हृदा गन्धादिभिर्यजेत् ॥ ४२ ॥
[4]घृतशिरोऽर्पणं कृत्वा पादयोर्बाहुमूर्धनि । कुम्भानानीय [5]वेद्यास्तु [6]बिम्बाग्रे स्थण्डिले न्यसेत् ॥४३ ॥
[7]कुम्भाद्बीजं समादाय [8]प्रतिमाहृदि विन्यसेत् । कलान्यासं ततः कृत्वा [9]कुम्भाद्भिरभिषेचयेत् ॥ ४४ ॥
[10]आम्रपांसुहरिद्रैश्च [11]गन्धाद्भिरभिषेचयेत् । वस्त्रैराभरणैर्माल्यैर्गन्धैर्धूपैश्च दीपकैः[12] ॥ ४५ ॥
[13]हविरन्तं समभ्यर्च्य [14]गौरीगायत्रिमन्त्रतः । [15]सर्वासां चैव शक्तीनामर्चायां[16] तु विशेषतः ॥ ४६ ॥
कल्याणं कारयेद्धीमान्विवाहविधिमार्गतः ॥ ४७ ॥

इति [17]श्रीमद्रौरवतन्त्रे [क्रियापादे] [18]गौरीस्थापनविधिर्नाम एकत्रिंशः पटलः

एवमेकं समाख्यातं युक्तं तत्र वदामि ते । मण्डपं विधिना कृत्वा तन्मध्ये वेदिकां क्रमात् ॥
सर्वालंकारसंयुक्तां वितानध्वजभूषिताम् । तन्मध्ये स्थण्डिलं कृत्वा वह्निं तत्रैव संयजेत् ॥
तत्र मानुषनाहे तु उमारुद्रौ तु वारुणे । वामभागे ह्युमां न्यस्त्वा सर्वालंकारसंयुताम् ॥
नववस्त्रैरुमारुद्रौ प्रशान्तायेति भूषयेत् । आचार्यो ब्रह्मवद्ध्यात्वा विवाहे सर्वकर्मणि ॥
पूर्वोक्तेन विधानेन अग्न्याधानादिकं तथा । विष्णुं तत्रैव चाहूय देवीमुदकपूर्वकम् ॥
रुद्रस्य दक्षिणे हस्ते बीजमुख्येन दापयेत् । वामेऽश्मानं तु संस्थाप्य गौरीगायत्रिमन्त्रतः ।
देव्याः पादं च रुद्रेण स्पर्शयित्वाश्मनि न्यसेत् । शिवमन्त्रेण मन्त्रज्ञो लाजं हुत्वा त्रयं बुधः ।
शक्तियुक्तं ततः सर्वं प्रभूतं हविषं ददेत् । युक्तमेवमिदं प्रोक्तं सहैव स्थापनं शृणु ।
आरम्भस्थापनान्तं यत्सर्वकर्म सहैव तु । सहैव इति विख्यातं चोत्सवो विधिचोदितः ॥

[9] C, G : अपऋक्षकैः pour अथ ऋक्षके [10] A : अथाचरेत् pour समाचरेत्

[1] C : गौरि pour गौरी [2] A omet च dans चाज्येनैव

[3] La forme grammaticale correcte est तत उद्धृत्य ; mais le mètre ne serait pas respecté

[4] A : घृतं pour घृत [5] A, B : वेद्यां तु [6] F : शिवाग्रे [7] C : कुम्भाद्बिम्बं

[8] B : प्रतिमां हृदि ; C, G : प्रतिमे हृदि [9] C : कुम्भाद्यैः pour कुम्भाद्भिः

[10] C, F, G : अत्र pour आम्र ; une meilleure lecture semble être आम्लपांसुहरिद्रैश्च (आम्लपांसुः = நெல்லிப் பொடி)

[11] C : गन्धाद्यैः pour गन्धाद्भिः [12] C, F, G : गन्धैश्च धूपदीपकैः [13] B, C, F, G : हविषान्तं

[14] C : गौरि pour गौरी

[15] cf. *Virāgama* 65, 57-63 :

कल्याणं कारयेत्पश्चान्मण्डपे सविशेषतः । गोमयालेपनं कृत्वा शालिना विकिरेत्ततः ॥
शाल्युपरि सुसंस्थाप्य मानुषे तु पदे तथा । स्थण्डिले स्थापयेद्देवीं दिशि दक्षिणतो न्यसेत् ॥
तस्याग्रे स्थण्डिलं कृत्वा अग्निमुखं च कारयेत् । तत्र विष्णुं समाहूय दद्यादुदकपूर्वकम् ॥
गौरीबीजेन संयुक्तं ब्रह्माङ्गेन समावृतम् । हृदयेनादिष्टमन्त्रेण अश्मानं स्पर्शयेत्ततः ॥
आचार्यहस्ते संपूर्य लाजान् हृदयमन्त्रतः । ईशानेन तु मन्त्रेण लाजहोमं तु कारयेत् ॥
प्रदक्षिणं ततः कृत्वा लाजहोमं पुनः पुनः । त्रिःकृत्वा तु विशेषेण हुत्वा चित्रादिभिस्तथा ॥
हुत्वान्ते तु यदस्येति जुहुयात्तदनन्तरम् । भिन्नासनमिदं प्रोक्तम्"

[16] A : अम्भाया pour आचार्यां ; B : अङ्गानां ; G : अङ्गायाः

[17] A : श्री pour श्रीमद् ; B omet श्रीमद्रौरवतन्त्रे

[18] A : गौरीस्थापनविधिपटलो द्वात्रिंशः ; C : गौरीस्थापनविधिर्नाम एकत्रिंशत्पटलः; F, G : गौरीस्थापनविधिपटलः एकत्रिंशत्

# [द्वात्रिंशः पटलः]

## [द्वारपालस्थापनविधिः[1]]

### [द्वारपालस्थानं तन्मानं च[2]]

लक्षणं द्वारपालानां स्थापनं[3] शृणु [4]वक्ष्यते । द्वारेषु मूलहर्म्यस्य[5] [6]मण्डपे वान्तरालके ॥ १ ॥
शोभादिगोपुरान्तेषु[7] [8]द्वारस्यैव तु पार्श्वयोः । स्तम्भोदय[9]समं श्रेष्ठं [10]द्वारोदयमथाधमम् ॥ २ ॥
तयोर्मध्येऽष्टभागे तु[11] नवधोच्चं [12]परावरे । तस्मादायांश[13]संयुक्तमायादि[14] शोभनार्थकम् ॥ ३ ॥
राज्ञः [15]कर्तुश्च राष्ट्रस्य [16]वास्तोश्चैवानुकूलतः । यत्तन्मानं गृहीत्वा तु [17]कुर्याद्विंशघनेन तु ॥ ४ ॥

---

[1] Pour द्वारपालस्थापनविधि voir *Aṃśumadāgama* 23, *Kāraṇa* II 86, *Dīpta* 67, *Vīra* 41, *Sahasra* 44 et *Suprabheda* I 39.

[2] cf. *Aṃśumatkāśyapa* 44, 1b-2:
अन्तर्मण्डलसालादिस्त्वधुना प्रोच्यते क्रमात् । द्वारशोभा द्वारशाला द्वारप्रासादहर्म्यके ॥
द्वारगोपुर इत्येते क्रमान्नाम्ना प्रकीर्तिताः ।

cf. *Aṃśumadāgama* 23, 6–10:
" स्थानं वक्ष्ये द्विजोत्तम ।
द्वारस्योभयपार्श्वे तु स्वाधिष्ठानस्य चोर्ध्वतः । भित्तियुक्तं वियुक्तं वा स्थापयेद्द्वारपालकान् ॥
द्वारमन्तर्मुखं विद्याद्द्वारपालान्बहिर्मुखे । स्तम्भोत्सेधांशमानेन द्वारपालोदयं विदुः ॥
स्तम्भोत्सेधसमं वाथ त्रिपादं वाथ संग्रहे । तयोर्मध्येऽष्टभागं च एकांशेन तु ह्रासयेत् ॥
एवं बिम्बोदयं ख्यातं शुभायादौ तु संभवे । शालादिगोपुरान्तानां स्तम्भमानेन कल्पयेत् ॥
मण्टपद्वारदेशे तु द्वारपालांश्च कल्पयेत् ।

cf. *Suprabhedāgama* I 39, 20b-21:
द्वारोत्सेधसमा भद्राः किरीटाद्यङ्गदोज्ज्वलाः । प्रासादे मण्डपे द्वारे द्वारे द्वारे च कीर्तिताः ॥
महामर्यादिभित्तिस्था द्वारगोपुरपार्श्वयोः ।

[3] B : स्थापने [4] C, G : वच्मि ते [5] C : हर्म्यस्थ pour हर्म्यस्य

[6] C, G : मण्टपे च pour मण्डपे वा [7] E : गोपुरं तेषु pour गोपुरान्तेषु

[8] A : द्वारास्ये चतुः पार्श्वयोः ; B : द्वारमस्य तु पार्श्वयोः [9] C, F : सहस्रेषु pour समं श्रेष्ठं

[10] A : द्वारोदयाधमम् ; C, F, G : द्वारोदयाधमं भवेत् [11] A : भागेन pour भागे तु ; F : भागं तु

[12] A : वरे वरात् ; B : वरं वरात् ; G : परोऽवरात् [13] D : आयाम pour आयांश

[14] A : मावादि pour आयादि ; C. F. G : आपादि [15] A : कर्तव्य pour कर्तुश्च

[16] A : वास्तोच्चे वानुकूलितम् ; D : वासेच्छावानुकूलतः ; C : वस्त्वोच्चेवानुकूलितम् ; F : तस्योच्चेवानुकूलितम्

[17] B : कुर्याद्वै शयमेन तु

[प्रतिमाद्रव्यम्[1]]

लोहजं शैलजं वापि सौधजं धातुजं तु वा[2] । लोहजं [3]सुघनं वापि सगर्भं वा मृदादिभिः ॥ ५ ॥
[4]सौधजं [5]चेष्टकागर्भं [6]शिलाधातु नगर्भकम् ।

[द्वारपाललक्षणम्[7]]

नन्दिकालौ तु पूर्वे तु[8] दक्षिणेऽदक्षिणे स्थितौ ॥ ६ ॥

---

[1] cf. *Aṃśumadāgama* 23, 1:

द्वारपालविधिं वक्ष्ये श्रूयतां रविसत्तम । शिलादार्विष्टकादीनि कारयेल्लक्षणान्वितम् ॥

[2] B : तथा pour तु वा [3] A : सुखसं वापि ; B : सुखदं वापि ; C, F, G : सुखनं वापि

[4] E omet les *śloka* 6, 7 et 8 [5] A: ज्येष्ठ pour चेष्टका

[6] A : शिलायां तु न गर्भकम् ; C, G : शिलादारु न गर्भकम्

[7] cf. *Dīptāgama* 67, 1b-8:

पूर्वद्वाराधिपौ ज्ञेयौ नन्दिकालावुभौ तथा । दण्डी मुण्डी महावीर्यौ दक्षिणद्वारपालकौ ॥
भृङ्गी च विजयश्चैव पश्चिमद्वारपालकौ । अनन्तः पशुपतिश्चैव उत्तरद्वारपालकौ ॥
नन्दीशो दण्डहस्तः स्यात्कालः परशुधारकः । दण्डीशो दण्डहस्तः स्यान्मुण्डी वै भिण्डिपालधृत् ॥
भृङ्गी वै खड्गहस्तः स्याद्विजयः शूलधारकः । अनन्तो वज्रहस्तः स्यात्पशुपतिः पाशधारकः ॥
नन्दीशः श्यामवर्णः स्यात्कालो वै धूम्रवर्णकः । इन्द्रनीलनिभो दण्डी मुण्डी वै श्वेतवर्णकः ॥
भृङ्गी मयूरग्रीवाभो विजयो रक्तवर्णकः । अनन्तः कालवर्णः स्यात्पशुपतिर्नील एव च ॥
त्रिणेत्राश्चतुर्भुजाः सर्वे सर्वाभरणभूषिताः । किंचित्त्रिभङ्गिकं कार्यं वामपादं तु कुञ्चितम् ॥
इत्येवं लक्षणं कृत्वा ततः स्थापनमारभेत् ।

cf. *Yogajāgama* 6, 244b-252a:

नन्दीशः श्यामवर्णस्तु द्विहस्तः परशुसंयुतः । परशुं वामहस्ते तु दक्षिणे वेणुदण्डकम् ॥
कालेशः कुङ्कुमाभस्तु परशुवेणुदण्डधृत् । द्विनेत्रौ द्विभुजौ चैव नन्दिकालौ वयोधरौ ॥
पूर्वद्वारे स्थितौ यत्र नन्दिकालौ महात्मनः । अनन्तः पशुपतिश्चैव दक्षिणद्वारपालकौ ॥
अनन्तो रक्तवर्णस्तु वज्रायुधसमन्वितः । पशुपतिर्नीलवर्णस्तु शक्तिहस्तोग्रलोचनः ॥
पश्चिमद्वारपालौ च दण्डी मुण्डी तथैव च । दण्डी घनेन्द्रचापाभः खड्गहस्तोग्रदंष्ट्रकः ॥
मुण्डी कुन्देन्दुवर्णश्च भिण्डिपालयुतस्तथा । विजयश्चैव भृङ्गीश उत्तरद्वारपालकः ॥
विजयश्चेन्द्रगोपाभः शूलहस्तो भयंकरः । भृङ्गीशो भृङ्गवर्णस्तु क्षुरिकायुधहस्तधृत् ॥
त्रिभङ्गं कुञ्चितं पादमुग्रदंष्ट्रसमन्वितम् । प्रासादमण्डपद्वारे द्वारे चैव प्रकीर्तिताः ।

cf. *Suprabhedāgama* I 39, 18b-20a:

सर्वे त्रिभङ्गियुक्ताश्च सर्वे कुञ्चितपादकाः । उग्रदंष्ट्राः सुवृत्ताश्च सर्वे निर्देशहस्तकाः ॥
सर्वे चतुर्भुजोपेता द्विभुजा वा त्रिणेत्रकाः । द्विनेत्राश्चोग्रदंष्ट्राश्च हलपल्लवहस्तकाः ॥

[8] B : पूर्वे च ; C, F : पूर्वौ तु

# DVĀRAPĀLA







DAṆḌĪ DAKṢIṆA-DVĀRA MUṆḌĪ

[1]दण्डिमुण्डी अवाच्यां तु [2]विजयो भृङ्गिरेव च । वारुणे [3]रक्षकावेतौ [4]गोपत्यनन्तकाविमौ ॥ ७ ॥
उत्तरद्वाररक्षार्थं दक्षिणेऽदक्षिणे न्यसेत् । [5]श्यामाभकुङ्कुमाभौ च नन्दिकालौ [6]क्रमात्स्थितौ ॥ ८ ॥
[7]इन्द्रगोपनिभौ[8] चैव मयूरस्येव[9] कन्धरम्[10] । [11]अवाच्यां द्वारिकौ भासा [12]पद्मरागाभनीलकौ ॥ ९ ॥
वारुणे द्वारपालौ तु [13]सितकालाभावुत्तरे । [14]दण्डं गदा च खड्गश्च त्रिशूलं [15]भिन्दिपालकः ॥१०॥
[16]वेत्रं गदा च वज्रं च नन्यादीनां तु [17]चिह्नकम् । त्रिनेत्राश्चतुर्भुजाः सर्वे त्वतिरौद्राः सदंष्ट्रकाः ॥११॥
जटा[18]मकुटयुक्ताश्च [19]करण्डं वा किरीटकम् । [20]द्वारपार्श्वकहस्तौ द्वौ [21]पूर्वे चिह्नं परेऽञ्जलिः ॥१२॥
[22]अग्रहस्तद्वयोः [23]पूर्वे सूच्यन्ये[24] [25]हरपल्लवम् । हस्तानां वेशनीत्रं[26] चाप्युद्धृतालम्बनं तथा ॥ १३ ॥

---

[1] A B : दण्डमुण्डमवाच्यां तौ ; le forme grammaticale correcte est दण्डिमुण्डिनौ

[2] A : विजयो भिक्रिरीभि च ; B : विजयो रमिकीरितौ [3] A : क्षेकरापेतौ ; C, F : रक्षकाले तु

[4] A : गोपानश्चान्तकापिगौ ; B : गोपानश्चान्तकाविमौ ; F : कोपनश्चान्तकावुभौ ; G : गोपानश्चान्तकावुभौ

[5] C, F, G, : श्यामाभं कुङ्कुमाभं च [6] A : क्रमान्तितौ ; B : क्रमान्तिकौ ; C : त्वसन्निभौ ; F : स्वयमान्निभौ

[7] E omet le *śloka* 9.

[8] A : निभं pour निभौ [9] A : मयूरस्य तु

[10] Le mot कन्धरा se trouve ici au neutre au lieu du féminin.

[11] A : अवाच्युद्वारकाभासमौ ; B : अवाच्यद्वारकाभासौ ; C : अवाप्यश्वारिकाभासौ ; G : अवाच्यां द्वारिकौ भासौ

[12] A : पद्मरागाभिनीलकम् ; B : पद्मरागाभिनीलकौ ; C : पद्मरागान्तरालकम् ; G : पद्मरागाभरालकम्

[13] A : शीतकालाभमुत्तरे ; C, F : सितं कालाभमुत्तरे [14] A : दण्डं गदां च खड्गं च

[15] A : भिन्दिवालकम् [16] A : वेलं pour वेत्रं [17] G : शक्तिकम् [18] C : मुकुट pour मकुट

[19] A : करण्डा वा किरीटिका ; B : सकरण्डकिरीटकाः [20] A : द्वारपार्श्वं च हस्तौं द्वौ ; B : द्वारपार्श्वे च हस्तौ द्वौ

[21] A : पूर्वे चिह्नापराञ्जली • [22] A : अग्नि pour अग्र

[23] A : पूर्वं सूच्यन्तं ; cf. *Nāṭyaśāstra* 9, 64 : खटकाख्ये यदा हस्ते तर्जनी संप्रसारिता । हस्तः सूचीमुखो नाम तदा ज्ञेयः प्रयोक्तृभिः ॥

cf. *Saṃgītaratnākara* 7, 147:

ऊर्ध्वप्रसारिता यत्र खटकामुखतर्जनी । हस्तः सूचीमुखः स स्यात् ।

[24] La forme grammaticale correcte est अन्यस्मिन्

[25] C : हरवल्लभम् ; une meilleure lecture semble être अलपल्लवम् cf. *Nāṭyaśāstra* 9, 91:

आवर्तिताः करतले यस्याङ्गुल्यो भवन्ति हि । पार्श्वगतविकीर्णाश्च स भवेदलपल्लवः ॥

cf. *ibid.* le commentaire d'Abhinavagupta:

अलपल्लवमाह—आवर्तिता इति । कनिष्ठादिक्रमेण वर्तना परिवर्तनं वा कुर्वन्त्यः । इयर्तीत्यरः चलः चलत्पल्लवाकारत्वाद् अलपल्लवः । अलपद्मक इति च तन्नाम ।

cf. *Saṃgītaratnākra* 7, 144-145:

व्यावर्तिताख्यं करणं कृत्वैव समवस्थिताः । यस्याङ्गुल्यः करतले पार्श्वगाः सोऽलपल्लवः ॥
अलपद्मः स एव स्यादङ्गुलीनां च केचन । अस्य व्यावर्तितस्थाने परिवर्तितमूचिरे ॥

[26] A : नीलं pour नीत्रं

[1]शृङ्गारं युक्तितः कुर्यात्सर्वाभरणवासधृत्[2]। [3]सुस्थितो द्वारपार्श्वाङ्घ्रिरन्याङ्घ्रि[4]तलमुद्धृतम् ॥ १४ ॥
चिह्नदण्डे निधातव्यमुद्धृताङ्घ्रितलं रुरो। अन्यद्भङ्गत्रयं [5]त्विष्टभङ्गस्थानकमेव वा ॥ १५ ॥
[6]सुस्थितो द्वारपार्श्वेऽङ्घ्रिरन्यत्कुञ्चितमाचरेत्।

[नेत्रोन्मीलनं कुम्भस्थापनादि च[7]]

स्थापयित्वोक्तदेशेषु हृदा कृत्वाक्षिमोचनम्[8] ॥ १६ ॥

गव्याभिषेचनं कृत्वा स्नापयेद्गन्धतोयकैः। [9]संछाद्याहतवस्त्रेण वेदीं [10]कृत्वाग्रतो बुधः ॥ १७ ॥
[11]हस्तवितस्तिविस्तारोत्सेधां दर्पणसंनिभाम्[12]। [13]वृत्तकुण्डं तदग्रे तु गोमयालेपनं कुरु ॥ १८ ॥
स्थण्डिलं शालिभिः कुर्याद्दर्भैः पुष्पैः परिस्तरेत्। द्रोणाम्बुपूरितं कुम्भं सूत्रादिभिरलंकृतम् ॥ १९ ॥
गन्धाम्बु पूरये[14]त्तस्मिन्स्थापयेत्स्थण्डिलोपरि[15]। मूलमन्त्रं न्यसेत्तस्मिंस्तद्रूपं तु विचिन्तयेत् ॥ २० ॥
गन्धैः पुष्पैश्च धूपैश्च दीपैरर्घ्यैः[16] [17]सुपूजयेत्। [18]पुण्याहप्रोक्षणं कृत्वा ततो होमं समाचरेत् ॥ २१ ॥

[होमः[19]]

समिदाज्यौदनैः पश्चाद्धृदा मूलेन मन्त्रतः। प्रत्येकं शतमर्धं वा जुहुयात्तु क्रमेण वै[20] ॥ २२ ॥

---

1 A : शृङ्गारयुक्तितः 2 C : वास्त्रधृक् ; F : वस्त्रधृक्
3 A : सुस्थित pour सुस्थितो ; C, G : संस्थितं 4 A, B : गत pour तल
5 A : स्विष्ट pour त्विष्ट ; C : स्वष्ट ; G : स्विष्ट 6 A : सुस्थित pour सुस्थितो ; B, C, G : सुस्थितं
7 cf. *Dīptāgama* 67, 15-21:
नेत्रबीजं समुच्चार्य नेत्रमोक्षणमारभेत्। तर्पयेन्मधुनाज्येन तत्तद्धृदयमुच्चरन्।
संस्नाप्य पञ्चगव्येन पञ्चगव्यमुदाहरन्। त्वमग्ने रुद्रमन्त्रेण शुद्धतोयेन सेचयेत् ॥
गन्धादिना समभ्यर्च्य हृदयमन्त्रं समुच्चरन्। तेषामग्रे तु कर्तव्यं स्थण्डिलं शालिना कुरु ॥
तन्मध्ये पद्ममालिख्य साष्टपत्रं सकर्णिकम्। सुतलैः शोभितं कृत्वा तिलदर्भैः परिस्तरेत् ॥
द्वारपालाधिदैवत्यं कुम्भं तन्मध्यमे न्यसेत्। द्रोणतोयेन संपूर्णं ससूत्रं सापिधानकम् ॥
सवस्त्रं पल्लवोपेतं तत्तद्बीजसमन्वितम्। दर्भमालासमायुक्तानष्टौ च कलशान्न्यसेत् ॥
ससूत्रान्सापिधानांश्च सवस्त्रान्वारिपूरितान्। अर्चयित्वा विधानेन नैवेद्यान्तं स्वनामतः ॥
8 C, F, G : मोक्षणम् pour मोचनम् 9 B : संछाद्य हस्तवस्त्रेण 10 B : कृत्वा गतो बुधः
11 A : हस्तं वितस्तिविस्तारं ; B : हस्तविस्तारमुत्सेधं 12 B : दर्पणोदरसंनिभम् 13 C : वृत्तं कुण्डं
14 B : पश्चात् pour तस्मिन् 15 A : तण्डुल pour स्थण्डिल 16 G : अन्यैः pour अर्घ्यैः
17 B : स्तु pour सु ; C : श्च 18 A : पुण्याहं प्रोक्षणं
19 cf. *Dīptāgama* 67, 22-25 :
तस्याग्रे स्थण्डिलं कृत्वा वालुकैर्हस्तमानकम्। अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ॥
तत्तद्धृदयमन्त्रेण समिदाहुतिमाचरेत्। घृतमिश्रे घृतं हुत्वा शिरसा च चरुं हुनेत् ॥
त्वमग्ने रुद्रमन्त्रेण हुत्वा लाजं विचक्षणः। अक्षतं तिलसंमिश्रं क्षीरं मन्त्रेण होमयेत् ॥
प्रत्येकं शतमर्धं वा जुहुयात्क्रमशः पुनः। एवं जागरणं रात्रौ" ॥
20 A : वा pour वै

[कुम्भाभिषेकः[1]]

मुहूर्ते समनुप्राप्ते [2]पूर्णाहुतिं समाचरेत् । विसृज्याच्छाद्य [3]वस्त्रं तु गव्यैः [4]कृत्वाभिषेचनम् ॥ २३ ॥
शुद्धाद्भिरभिषिच्याथ [5]सब्रह्माङ्गकला न्यसेत् । [6]वेद्या आदाय कुम्भं तु बिम्बाग्रे तु निधापयेत् ॥ २४ ॥
कुम्भाद्बीजं समादाय [7]बिम्बस्य हृदि योजयेत् । तदद्भिरभिषिच्याथ हविरन्तं हृदार्चयेत् ॥ २५ ॥
एवं दौवारिकाष्टानां[8] स्थापनं प्रोच्यते तथा[9] ॥ २६ ॥

इति [10]श्रीमद्रौरवतन्त्रे [क्रियापादे][11]द्वारपालस्थापनविधिर्नाम द्वात्रिंशः पटलः

---

[1] cf. *Diptāgama* 67, 25b-31a :

"प्रभाते स्थापनं भवेत् ॥
पूर्णाहुतिं तु शिरसा स्विष्टान्तं हि समाचरेत् । तत्तत्कुम्भं समुद्धृत्य सर्वालंकारसंयुतम् ॥
सुमुहूर्ते सुलग्ने च नक्षत्रकरणान्विते । कुम्भाद्बीजं समादाय हृद्देशे तु न्यसेत्क्रमात् ॥
दशकुम्भं समुद्धृत्य पूर्वादितः प्रदक्षिणम् । पिण्डिकायां न्यसेद्धीमान्हर्म्यपालकबीजकान् ॥
तेनोदकेन संप्रोक्ष्य तत्तद्धृदयमुच्चरन् । गन्धपुष्पादिना पूज्य स्वस्वबीजमुदाहरन् ॥
शुद्धान्नं दापयेत्पश्चादुपदंशसमन्वितम् । पश्चादाचमनं दद्यात्ताम्बूलं च निवेदयेत् ॥
द्वारपालाधिपानां तु स्थापनं चोच्यते क्रमात् ।

[2] B : पूर्णाहुतिमथाचरेत् [3] G : वस्त्रेण [4] A : कृत्वाभिषेचयेत्
[5] A : सब्रह्माङ्गं कलां न्यसेत् [6] A : वेद्यामादाय [7] A : बिम्बे हृदि विन्यसेत्
[8] A : अष्टौ च pour अष्टानां [9] A : अथवा pour तथा
[10] A : श्रीरौरवतन्त्रे ; B omet श्रीमद्रौरवतन्त्रे
[11] A : द्वारपालस्थापनविधिपटलस्त्रयस्त्रिंशः ; B : द्वारपाल थापनं नाम त्रयस्त्रिंशः पटलः; C : द्वारपालस्थापनविधिर्नाम चतुश्चत्वारिंशः पटलः ; E : द्वारपालस्थापननिधिश्चतुश्चत्वारिंशत्पटलः ; F : द्वारपालस्थापनपटलश्चतुश्चत्वारिंशत् ; G : द्वारपालस्थापनविधिपटलश्चत्वारिंशत्

[1]शृङ्गारं युक्तितः कुर्यात्सर्वाभरणवासधृत्[2] । [3]सुस्थितो द्वारपार्श्वाङ्घ्रिरन्याङ्घ्रि[4]तलमुद्धृतम् ॥ १४ ॥
चिह्नदण्डे निधातव्यमुद्धृताङ्घ्रितलं शरो । अन्यद्भङ्गत्रयं [5]त्विष्टभङ्गस्थानकमेव वा ॥ १५ ॥
[6]सुस्थितो द्वारपार्श्वेऽङ्घ्रिरन्यत्कुञ्चितमाचरेत् ।

[नेत्रोन्मीलनं कुम्भस्थापनादि च[7]]

स्थापयित्वोक्तदेशेषु हृदा कृत्वाक्षिमोचनम्[8] ॥ १६ ॥
गव्याभिषेचनं कृत्वा स्नापयेद्गन्धतोयकैः । [9]संछाद्याहतवस्त्रेण वेदीं [10]कृत्वाग्रतो बुधः ॥ १७ ॥
[11]हस्तवितस्तिविस्तारोत्सेधां दर्पणसंनिभाम्[12] । [13]वृत्तकुण्डं तदग्रे तु गोमयालेपनं कुरु ॥ १८ ॥
स्थण्डिलं शालिभिः कुर्याद्दर्भैः पुष्पैः परिस्तरेत् । द्रोणाम्बुपूरितं कुम्भं सूत्रादिभिरलंकृतम् ॥ १९ ॥
गन्धाम्बु पूरये[14]त्तस्मिन्स्थापयेत्स्थण्डिलोपरि[15] । मूलमन्त्रं न्यसेत्तस्मिंस्तद्रूपं तु विचिन्तयेत् ॥ २० ॥
गन्धैः पुष्पैश्च धूपैश्च दीपैरर्घ्यैः[16] [17]सुपूजयेत् । [18]पुण्याहप्रोक्षणं कृत्वा ततो होमं समाचरेत् ॥ २१ ॥

[होमः[19]]

समिदाज्यौदनैः पश्चाद्धृदा मूलेन मन्त्रतः । प्रत्येकं शतमर्धं वा जुहुयात्तु क्रमेण वै[20] ॥ २२ ॥

---

[1] A : शृङ्गारयुक्तितः [2] C : वासधृक ; : F : वस्त्रधृक्
[3] A : सुस्थित pour सुस्थितो ; C, G : संस्थितं [4] A, B : गत pour तल
[5] A : स्विष्ट pour त्विष्ट ; C : स्वष्ट ; G : स्त्विष्ट [6] A : सुस्थित pour सुस्थितो ; B, C, G : सुस्थितं
[7] cf. *Dīptāgama* 67, 15-21:

नेत्रबीजं समुच्चार्य नेत्रमोक्षणमारभेत् । तर्पयेन्मधुनाज्येन तत्तद्धृदयमुच्चरन् ।
संस्नाप्य पञ्चगव्येन पञ्चगव्यमुदाहरन् । त्वमग्ने रुद्रमन्त्रेण शुद्धतोयेन सेचयेत् ॥
गन्धादिना समभ्यर्च्य हृदयमन्त्रं समुच्चरन् । तेषामग्रे तु कर्तव्यं स्थण्डिलं शालिना कुरु ॥
तन्मध्ये पद्ममालिख्य साष्टपत्रं सकर्णिकम् । सुतलैः शोभितं कृत्वा तिलदर्भैः परिस्तरेत् ॥
द्वारपालाधिदैवत्यं कुम्भं तन्मध्यमे न्यसेत् । द्रोणतोयेन संपूर्णं ससूत्रं सापिधानकम् ॥
सवस्त्रं पल्लवोपेतं तत्तद्बीजसमन्वितम् । दर्भमालासमायुक्तानष्टौ च कलशान्न्यसेत् ॥
ससूत्रान्सापिधानांश्च सवस्त्रान्वारिपूरितान् । अर्चयित्वा विधानेन नैवेद्यान्तं स्वनामतः ॥

[8] C, F, G : मोक्षणम् pour मोचनम् [9] B : संछाद्य हस्तवस्त्रेण [10] B : कृत्वा गतो बुधः
[11] A : हस्तं वितस्तिविस्तारं ; B : हस्तविस्तारमुत्सेधं [12] B : दर्पणोदरसंनिभम् [13] C : वृत्तं कुण्डं
[14] B : पश्चात् pour तस्मिन् [15] A : तण्डुल pour स्थण्डिल [16] G : अन्यैः pour अर्घ्यैः
[17] B : स्तु pour सु ; C : श्च [18] A : पुण्याहं प्रोक्षणं
[19] cf. *Dīptāgama* 67, 22-25 :

तस्याग्रे स्थण्डिलं कृत्वा वालुकैर्हस्तमानकम् । अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ॥
तत्तद्धृदयमन्त्रेण समिदाहुतिमाचरेत् । घृतमिश्रे घृतं हुत्वा शिरसा च चरुं हुनेत् ॥
त्वमग्ने रुद्रमन्त्रेण हुत्वा लाजं विचक्षणः । अक्षतं तिलसंमिश्रं क्षीरं मन्त्रेण होमयेत् ॥
प्रत्येकं शतमर्धं वा जुहुयात्क्रमशः पुनः । एवं जागरणं रात्रौ " ॥

[20] A ; वा pour वै

[कुम्भाभिषेकः[1]]

मुहूर्ते समनुप्राप्ते [2]पूर्णाहुतिं समाचरेत् । विसृज्याच्छाद्य [3]वस्त्रं तु गव्यैः [4]कृत्वाभिषेचनम् ॥ २३ ॥
शुद्धाद्भिरभिषिच्याथ [5]सब्रह्माङ्गकला न्यसेत् । [6]वेद्या आदाय कुम्भं तु बिम्बाग्रे तु निधापयेत् ॥ २४ ॥
कुम्भाद्बीजं समादाय [7]बिम्बस्य हृदि योजयेत् । तदद्भिरभिषिच्याथ हविरन्तं हृदार्चयेत् ॥ २५ ॥
एवं दौवारिकाष्टानां[8] स्थापनं प्रोच्यते तथा[9] ॥ २६ ॥

इति [10]श्रीमद्रौरवतन्त्रे [क्रियापादे][11]द्वारपालस्थापनविधिर्नाम द्वात्रिंशः पटलः

---

[1] cf. *Dīptāgama* 67, 25b-31a :

"प्रभाते स्थापनं भवेत् ॥
पूर्णाहुतिं तु शिरसा स्विष्टान्तं हि समाचरेत् । तत्तत्कुम्भं समुद्धृत्य सर्वालंकारसंयुतम् ॥
सुमुहूर्ते सुलग्ने च नक्षत्रकरणान्विते । कुम्भाद्बीजं समादाय हृद्देशे तु न्यसेत्क्रमात् ॥
दशकुम्भं समुद्धृत्य पूर्वादितः प्रदक्षिणम् । पिण्डिकायां न्यसेद्धीमान्हर्म्यपालकबीजकान् ॥
तेनोदकेन संप्रोक्ष्य तत्तद्धृदयमुच्चरन् । गन्धपुष्पादिना पूज्य स्वस्वबीजमुदाहरन् ॥
शुद्धान्नं दापयेत्पश्चादुपदंशसमन्वितम् । पश्चादाचमनं दद्यात्ताम्बूलं च निवेदयेत् ॥
द्वारपालाधिपानां तु स्थापनं चोच्यते क्रमात् ।

[2] B : पूर्णाहुतिमथाचरेत्  [3] G : वस्त्रेण  [4] A : कृत्वाभिषेचयेत्
[5] A : सब्रह्माङ्गं कलां न्यसेत्  [6] A : वेद्यामादाय  [7] A : बिम्बे हृदि विन्यसेत्
[8] A : अष्टौ च pour अष्टानां  [9] A : अथवा pour तथा
[10] A : श्रीरौरवतन्त्रे ; B omet श्रीमद्रौरवतन्त्रे
[11] A : द्वारपालस्थापनविधिपटलस्त्रयस्त्रिंशः ; B : द्वारपालस्थापनं नाम त्रयस्त्रिंशः पटलः ; C : द्वारपालस्थापनविधिर्नाम चतुश्चत्वारिंशः पटलः ; E : द्वारपालस्थापननिधिश्चतुश्चत्वारिंशत्पटलः ; F : द्वारपालस्थापनपटलश्चतुश्चत्वारिंशत् ; G : द्वारपालस्थापनविधिपटलश्चत्वारिंशत्

# [त्रयस्त्रिंशः पटलः]

## [परिवारस्थापनविधिः[1]]

### [परिवाराष्टकस्थानम्[2]]

[3]अतः परं प्रवक्ष्यामि परिवारविधिक्रमम् । अन्तर्मण्डल[4]मध्ये वा बाह्ये वान्तरहारके[5] ॥ १ ॥
मध्ये [6]वाभ्यन्तरे बाह्ये मध्यहारे तथैव च । [7]उक्षं दुर्गां च [8]चामुण्डीं गणेशं चैव षण्मुखम् ॥ २ ॥
ज्येष्ठां चैव हरिं भानुं पूर्वादिक्रमशो न्यसेत् । [9]मूलहर्म्यं निरीक्ष्यास्ते कल्पयेद्बिम्बविष्टरम् ॥ ३ ॥

### [उक्षस्थानं बिम्बविष्टरस्थानं च[10]]

त्रिचतुर्दण्डमारभ्य द्विद्विदण्डविवर्धनात् । [11]त्रिचतुस्त्रिंशद्दण्डैर्वा यावत्तावद्विशेषतः ॥ ४ ॥
[12]उक्षस्थानमयुग्मे च[13] युग्मे स्याद्बिम्ब[14]विष्टरम् । प्रतिषोडशभेदं स्यादुक्तदण्डे तु [15]मध्यमे ॥ ५ ॥
[16]उक्तदण्डावसाने[17] वा तयोः[18] [19]पीठावसानकम् ।

---

[1] Pour परिवारस्थापनविधि voir *Aṃśumatkāśyapa* 50, *Ajita* 39 et 46, *Kāmika* I, 72 et 74 et II 69, *Kāraṇa* I 60, 61 et 68 et II 87 et 88, *Dipta* 68 et 69, *Yogaja* 17, *Vira* 41 et 72 et *Suprabheda* I 39, 40 et 51.

[2] cf. *Diptāgama*, 68, 1-2:

> परिवारस्थापनं वक्ष्ये शृणु वह्ने विशेषतः । वृषः कात्यायनी चैव मातरो गणनायकः ॥
> सुब्रह्मण्यस्तथा ज्येष्ठा केशवो भास्करस्तथा । पूर्वाद्यैशानपर्यन्तमन्तर्हारे स्थिता इमे ॥

voir aussi *Ajitāgama*, *paṭala* 39 *śl.* 1-3 et 7-10

[3] Dans le ms. F ce *paṭala* se trouve après le *paṭala* suivant.

[4] A : मण्डप pour मण्डल [5] A : भारके pour हारके [6] A : बाह्यान्तरे ; F : चाद्यन्तरे

[7] La forme grammaticale correcte est उक्षाणं ; mais le mètre ne serrait pas respecté.

[8] C : चामुण्डि [9] A, C : मूलहर्म्यान्निरीक्ष्यास्ते

[10] cf. *Kāraṇāgama* I 60, 38b-40 et 49-51a:

> "पीठस्थानं विधीयते ॥
> मूलप्रासादविस्तारं यत्तद्दण्डमिहोच्यते । प्रासादं तु समारभ्य रसदण्डान्तिकेऽपि वा ॥
> रुद्रदण्डान्तिके चैव मनुदण्डान्तिकेऽपि वा । कारयेत्तत्र पीठानि.................. ॥
> "वृषभस्थानमुच्यते ॥
> पीठाद्दण्डद्वयं त्यक्त्वा तस्याग्रे स्थापयेद्वृषम् । अथवान्यप्रकारेण वृषस्थानं विधीयते ॥
> गुणहस्तान्तरं वापि पक्षहस्तान्तरं तु वा । पीठाग्रे तु प्रकर्तव्यम्"

[11] B omet le *śloka* 4b ; C : त्रिचतुस्त्रिंशतिर्दण्डं

[12] B : युग्म pour उक्ष [13] C, F : तु pour च [14] A, B, C : ब्रह्म pour बिम्ब

[15] C, F : मध्यमम् [16] A, B : युक्त pour उक्त [17] A : अवसानं pour अवसाने

[18] A : वा भयोः ; B : वा ययोः [19] C : पिण्ड pour पीठ

PARIVĀRĀṢṬAKA.



[पीठलक्षणम्[1]]

[2]चतुर्विंशाङ्गुलं वाथ त्रिषडङ्गुलमेव वा ॥ ६ ॥
[3]भान्वङ्गुलविशालं[4] वा [5]तत्तुल्यतुङ्गविष्टरम् । मेखलात्रयसंयुक्तं कर्तव्यं तत्सकर्णिकम् ॥ ७ ॥
अश्मजं सौधजं वापि [6]चेष्टजं वाथ कल्पयेत् । प्रतिमां चापि [7]तन्माने [8]स्वेष्टमुच्चं तु गृह्यताम्[9]॥ ८॥

[वृषभः[10]]

[11]द्वारोच्चे गर्भगेहे तु नवभागविभाजिते ।

---

[1]cf. *Aṃśumatkāśyapa* 50, 150-153a:
"पीठं चेल्लक्षणं शृणु ॥
भानुद्वयाङ्गुलं तारमुत्सेधं भानुमात्रकम् । मेखलात्रयसंयुक्तं वेदमात्रविशालकम् ॥
गुणाङ्गुलं तदुत्सेधं पद्मोच्चं तु गुणाङ्गुलम् । षडंशं पद्मविस्तारं शेषोर्ध्वकम्पनीव्रकम् ॥
शिलाभिर्वेष्टकाभिर्वा सुधया वा प्रकल्पयेत् । परिवारासनं ह्येवम्"
cf. *Kāraṇāgama* I 60, 25-28:
प्रतिमानामभावे तु पीठं वा कल्पयेत्सुधीः । विमानेन युतं वापि हीनं वा स्थापयेत्सुधीः ॥
पक्षतालप्रविस्तारमुत्सेधं तु तदर्धकम् । द्विमेखलासमायुक्तमेकैकं चतुरङ्गुलम् ॥
उत्सेधं तत्समं ज्ञेयं तन्मध्येऽब्जं तु कारयेत् । षडङ्गुलप्रमाणेन पद्मं कुर्याद्दलाष्टकम् ॥
अग्न्यङ्गुलप्रमाणेन तन्मध्ये कर्णिकां कुरु । वृत्तं वा चतुरश्रं वा एवं पीठं तु कारयेत् ॥
voir aussi *Ajitāgama, paṭala* 39 *śl.* 16-21
[2] B : चतुर्विंशकुलं  [3] A : भानुशूल pour भान्वङ्गुल  [4] C : विलेपं pour विशालं
[5] A : तत्तुव्य pour तत्तुल्य ; B, C, F : तत्तुल्यं  [6] B : पीठजं ; C : तेष्टजं
[7] A, B : तन्मध्ये  [8] C, F : विष्टमुच्चं तु  [9] B : गृह्य तौ
[10] cf. *Suprabhedāgama* I 40, 6-16:
वृषभस्य तु उत्सेधं द्वारमानेन वै शृणु । द्वारोत्सेधचतुर्थांशमर्धं पादोनकं तथा ॥
समं वा द्विगुणं वापि त्रिगुणं वा विशेषतः । तत्काले वृषभायामं द्विसप्तत्यङ्गुलं स्मृतम् ॥
चतुर्भागमुखं तत्र त्रिभागं नासिका तथा । द्व्यङ्गुलं तु तथा नेत्रमन्तः पादसुविस्तरम् ॥
शृङ्गायामं द्विभागं तु तन्मूलं भागविस्तरम् । तीक्ष्णाग्रौ तु प्रकर्तव्यौ चानुपूर्वात्क्रमेण तु ॥
कर्णायामं दशाङ्गुल्यं तद्विस्तारं तदर्धता । कला तु कर्णमूलं हि तदन्तश्च तदेव तु ॥
त्रिभागं नेत्रयोर्मध्ये तद्वच्छृङ्गौ तु मध्यमम् । अक्षिकर्णान्तरं भागं कर्णाच्छृङ्गान्तरं तथा ॥
द्व्यङ्गुलं नासिकाद्वारे तद्वकं भागमानतः । जिह्वास्यौ दन्तपङ्क्ती च यथायुक्त्या च कारयेत् ॥
अष्टादशाङ्गुलं चोरू तन्नाहं त्रिगुणं तथा । जङ्घा दशाङ्गुला ज्ञेया तदूर्ध्वे तु चतुष्कला ॥
षडङ्गुलं ततः पादं तदर्धं खुरमुच्यते । जङ्घायाः पश्चिमं पादं कलोर्ध्वं तु कलाधिकम् ॥
पुच्छं स्यादग्रमूलान्तं चतुरङ्गुलविस्तृतम् । मध्यमं द्व्यङ्गुलं तारमग्रमेकाङ्गुलं स्मृतम् ॥
वृषणौ द्विकलायामौ विस्तारं स्याच्च द्व्यङ्गुलम् । वृषस्य लक्षणं प्रोक्तम्"
voir aussi *Ajitāgama* 36, 363b-375a:
[11] A, B : द्वारोच्चगर्भगेहं तु

[1]नवधा वृषभस्योच्चं [2]तस्योच्चाग्न्यंशमासनम् ॥ ९ ॥
उन्नतं कुक्षि[3]विस्ताराद्ग्न्यंशा[4]धिकविस्तरम् । [5]आयामोच्चघनाधिक्यं भद्रं वा पद्मपीठकम् ॥ १० ॥
उपपीठाकृतिर्वापि कल्पयेद्वृषविष्टरम् ।

[त्रिशूलम्[6]]

तदग्रे द्वारतुल्योच्चं वषोच्चं वा त्रिशूलकम् ॥ ११ ॥
शूलोच्चे भूतषट्सप्तभागेंऽशं वा विशालकम् । विस्तारार्धं त्रिपादं [7]वाप्यग्न्यंशेऽशं तु वा[8] घनम् ॥

---

[1] A : नवधा वृषभः सोच्चं ; C : नव चा वृषभस्योच्चं

[2] A : तस्योच्चात्यंशमासनम् ; B : तस्योच्चात्यंशमानकम् ; C : तस्योच्चान्त्यंशमासनम्

[3] A : विस्तारं pour विस्ताराद्     [4] C : अन्यान्य pour अग्न्यंशा ; E : अन्याशा

[5] A : आयामाच्चन्दनाधिक्यं ; C : आयामोच्चन्दनाधिक्यं ; F : आयामोच्चन्नताधिक्यं

[6] cf. *Kāraṇāgama* **I**, 68, 2-5 et 7b-25:

सर्वदेवमयं शूलं महास्त्रं परमं शुभम् । हैमराजतताम्रेण आयसेनैव वा कुरु ॥
गर्भद्वारे च हस्ते च तुङ्गानि योजयेत्ततः । गर्भादधिकमादाय शूलमुत्तममुच्यते ॥
मध्यमं समगर्भं तु तद्गर्भं भूतभागकम् । त्रिभागमधमं ज्ञेयं कनिष्ठोत्तममध्यमम् ॥
अष्टधा विभजेत्तत्र उत्तमादि त्रयं त्रयम् । द्वारोत्सेधसमं मानमुत्तमं शूलमुच्यते ॥........
आयामं भूतभागैकं पत्रायाममिति स्मृतम् । नाडिकांशं भजेत्तत्र एकांशं पत्रविस्तरम् ॥
संगृह्य पत्रमानं तु चतुरश्रं समं कुरु । पत्राधारं विसृज्याथ पार्श्वयोरुभयोरपि ॥
वृत्ताकारं यथा तत्र वर्तयेत्तदनु क्रमात् । तयोर्बाह्यान्तरं ग्राह्यं भ्रामयेद्दिङ्मुखं तु तत् ॥
पार्श्वपत्रद्वयं ह्येवं भवेत्तद्वर्तुलद्वयात् । पत्रतारेण चाग्रे तु धारानिशितसंयुतम् ॥
तारार्धं मुकुलं कुर्यान्मध्यमूलाग्रतः क्रमात् । पत्रविस्तारमुद्दिष्टं भागैकं घनमुच्यते ॥
तारार्धताग्रके मूले चान्तरं पार्श्वपत्रयोः । पत्रायामं च नवधा भज्य भागेन मूलतः ॥
पादायाममिति प्रोक्तं तदर्धं पादविस्तरम् । द्विगुणं मध्यपादस्य विस्तारं पार्श्वपत्रवत् ॥
पत्राणां पादमूले तु कुर्याद्वै कुण्डलीकृतम् । विचित्रपत्रविहितं पत्रलेखेन कारयेत् ॥
तस्याधः पालिका कार्या पत्रायामत्रिभागतः । तत्तारं नवधा भज्य व्योमांशं पालिकायतम् ॥
त्र्यंशेनाब्जं तु तस्याधः कोणेष्वश्वत्थपत्रवत् । कर्तव्या पालिका ह्येवं तदधः कल्पयेद्गलम् ॥
पालिकायास्तु विस्तारं विभजेत्तु दशांशकम् । एकांशं गलविस्तारमुत्सेधं तत्समं भवेत् ॥
पालिकार्धं घटाकारमुत्सेधं स्यात्तदर्धतः । तस्याधः कर्णिकारेण कर्णं कुर्यात्तु बुद्धिमान् ॥
पादेन कुम्भकारेण तस्याधो नाडिका भवेत् । घटवन्नाडिकामानं तन्मानं युगमार्जितम् ॥
एकभागान्तरं कुर्यात्तत्प्रमाणेन हीरिका । हीरिकाथ प्रकर्तव्या शेषं दण्डमिहोच्यते ॥
नाडिकायास्तु विस्तारचतुर्भागत्रिभागिकम् । दारुदण्डस्य विस्तारं तदर्धं लोहदण्डकम् ॥
दण्डमूले तु पद्मं स्याद्विस्तारं पालिकासमम् । तदर्धमानमित्युक्तं तन्मानं गुणभाजितम् ॥
एकांशं पट्टिका ज्ञेयं शेषांशेन कुशेशयम् । वृत्तं वा चतुरश्रं वा कारयेत्तु कुशेशयम् ॥
हीरिकासममानेन पद्मोर्ध्वे पट्टिकां कुरु । मध्यपत्रस्य मध्ये तु लिखेदब्जं तु तन्मुखम् ॥
एवं लक्षणमाख्यातम्"

[7] A : वा विन्यसेशं तु ; B : वा विन्यस्येशं तु ; C : वाखिग्न्यंशेंशं तु     [8] B : वामके pour वा घनम्

[1]हस्तं वृषाग्रतो नीत्वा [2]हस्तं पीठोच्चविस्तृतम् । त्रिमेखलासमायुक्तं तस्योर्ध्वे शूलसंस्थितिः[3] ॥१३॥
[4]विस्तारार्धं त्रिपादं [5]वाप्यर्धांशोंऽशं तु वा घनम् । शूलोच्चे भूतभागैकं [6]पत्रोच्चं तु विशालकम् ॥१४॥
[7]पत्रादधोऽर्धमग्न्यंशं [8]वा स्यात्पालिघटोदयम् । शेषं युक्त्या तु[9] कर्तव्यं [10]महापीठं समुच्यते ॥ १५ ॥

[महापीठम्[11]]

एकहस्तं समारभ्य वह्न्यङ्गुलविवर्धनात् । अक्षहस्तावधिर्यावन्नवधा पीठविस्तरम् ॥ १६ ॥
विस्तारसदृशोत्सेधं[12] तत्तुङ्गं [13]युगषड्भजेत् । [14]उपानोदयमेकांशं भूतांशं [15]जगती भवेत् ॥ १७ ॥

---

[1] A : हत्वा pour हस्तं [2] A: हसं pour हस्तं ; F : हंसम्

[3] A : संस्थितः pour संस्थितिः ; B : संयुतम्

[4] C et F omettent le demi-*śloka* n° 14a

[5] B: वाप्यर्ध्यंशोंशं [6] B : पद्मोच्चं

[7] A : पत्रादयोर्धत्र्यंशं ; B : पत्रादयोर्थत्यंशं ; C : पत्रादयोर्ध्वमन्यांशं ; F : पत्रादथोर्धमरन्यंशं

[8] A : वाभ्यपारपठोदयम् ; B : वाभ्यपारं घटोदयम् [9] A : नु pour तु [10] A : महापीठसमोच्यते

[11] cf. *Aṃśumatkāśyapa* 5?, 156b-171a:

महापीठं प्रकर्तव्यं तस्य लक्षणमुच्यते । मूलधामस्य द्वारोच्चमुत्तमं पीठविस्तृतम् ॥
त्रिपादं मध्यमं प्रोक्तं द्वारतुङ्गार्धकन्यसम् । शुद्धद्वारस्य विस्तारमधमं पीठमुच्यते ॥
द्विगुणं मध्यमं प्रोक्तं त्रिगुणं श्रेष्ठमुच्यते । अथवा व्योमहस्तं तु अधमं पीठविस्तृतम् ॥
द्विहस्तं मध्यमं प्रोक्तं त्रिहस्तं श्रेष्ठमुच्यते । तद्विस्तारसमं तुङ्गं कृत्वा चैवाष्टविंशतिम् ॥
उपानोच्चं द्विभागं स्यात्षडंशं जगती भवेत् । कुमुदोच्चं तु भूतांशं कम्पमेकांशमुच्यते ॥
वेदांशं कर्णमानं तु ऊर्ध्वकम्पं शिवांशकम् । महापट्टी गुणांशं वा द्विभागं वा विशेषतः ॥
वेदांशं पद्मतुङ्गं तु द्विभागं कर्णिकोदयम् । अथवा कर्णिकोत्सेधं गुणांशं द्विजसत्तम ॥
पद्मोच्चं पञ्चभागं तु महापट्टी द्विभागधा । उपानोच्चं शिवांशेन शेषं पूर्ववदेव हि ॥
अथ पीठोदयं विप्र धरातलं यथा कुरु । तदूर्ध्वे पद्ममानं तु पीठोच्चेऽग्न्यंशमुच्यते ॥
अधिष्ठानोक्तमार्गेण वेशनिष्क्रान्तिमाचरेत् । पद्मतारे युगांशं वा भूतांशं कर्णिका भवेत् ॥
पीठाकारं युगाश्रं वा वृत्तं वाष्टाश्रमेव वा । कलाश्रं वाथ कर्तव्यं तद्वृत्तं मण्डलाम्बुजम् ॥
लोहजं शैलजं वाथ इष्टकामयमेव वा । सुधया वेष्टकागर्भं नानाचित्रैर्विचित्रितम् ॥
भूतैश्च मकरैर्व्यालैर्वृषभैश्च विभूषितम् । नानावर्णैर्विचित्रं वा भूषयेद्धेमराजतैः ॥
पीठव्यासे तु षट्सप्तवसुनन्दांशकेऽपि वा । अंशमस्योपपीठोच्चमुपपीठोक्तवत्कुरु ॥
तदूर्ध्वे तु महापीठमुक्तव्यासोदयान्वितम् । उपपीठं विना पीठं कर्तव्यं वा द्विजोत्तम ॥

voir aussi *Ajitāgama* 39, 43-52

[12] C, F : सदृशोच्चं तु pour सदृशोत्सेधं [13] A : युगषड्भजत् ; B : युगषट्क्रमम्

[14] C : उपानोदयेनमेकांशं : E : उपानोदये दशेकांशं [15] B : जगतो pour जगती

[1]युगांशं कुम्भतुङ्गं स्यात्कम्पमंशेन कल्पयेत्। अग्न्यंशं [2]कण्ठमानं तु [3]कम्पमेकांशमुन्नतम्॥ १८ ॥
[4]द्विभागं पट्टिकामानं कम्पमेकेन कल्पयेत्[5]। [6]वेदांशेन दलोच्चं तु [7]पक्षांशं कर्णिकोदयम्॥ १९ ॥
[8]अङ्गानां वेशनिष्क्रान्तमधिष्ठानोक्तवत्कुरु। युगाष्टकोणयुक्तं वा मध्यभद्रयुतं तु वा ॥ २० ॥
[9]कोणेषूक्तयुतं वापि [10]कर्णं वा [11]नालकान्वितम्। भूतेश्वरं तु विघ्नं तु कर्णिकायां प्रतिष्ठयेत्[12] ॥ २१ ॥

[स्थापनम्[13]]

तत्तत्स्वनाममन्त्रेण[14] [15]मखे कुम्भाधिवासनम्[16]।

---

[1] E omet le demi-*śloka* n° 18a  [2] A : कर्म pour कण्ठ ; F : कर्णं  [3] E : पक्ष pour कम्प
[4] A : विभागं  [5] B : कम्पकेन प्रकल्पयेत्  [6] A : वेदांशं pour वेदांशेन
[7] C : वृक्षांशं  [8] C, F : अंशानां
[9] A : कोणें सूक्ष्मयुतं ; F : कोणेषु क्षयितं  [10] C : कण्ठं pour कर्णं  [11] A : नाटिकान्वितम्
[12] A : कर्णिकाया: प्रतिष्ठाये ; B : कर्णिकायां प्रतिष्ठय ; C : कर्णिकाशां प्रतिष्ठयेत्
[13] Pour plus de détails au sujet du परिवारस्थापन voir *Kāmikāgama* I 72, 1-14a:

स्थापनं परिवाराणां संक्षेपाच्छृणुत द्विजा: । त्रिहस्तं तु समारभ्य करस्यैकस्य वर्धनात् ॥
मण्डपस्यास्य विस्तारो नवहस्तान्तमेव हि । तन्मध्ये वेदिकोपेतं षोडशस्तम्भसंयुतम् ॥
रविस्तम्भयुतं वापि चतु:स्तम्भयुतं तु वा । कुण्डं वा स्थण्डिलं वापि शरवेदैकसंख्यया ॥
वृत्तं वा चतुरश्रं वा कुण्डं कुर्याद्दिगश्रकम् । मातॄणां नवकुण्डं वा चैककुण्डमथापि वा ॥
योग्यानां रत्नविन्यासं नेत्रोन्मीलनमेव च । पञ्चगव्यादिभिस्तेषां शुचिं तोयाधिवासनम् ॥
ततो मण्डपसंस्कारं ततो बिम्बादिशोधनम् । कौतुकं शयनारोहं कुम्भविन्यासमेव च ॥
कृत्वा तु पूर्ववत्सर्वं स्वनामाद्यक्षरेण तु । तत्तद्वर्णादि संस्थाने यजेत्सम्यक्शिवद्विजा: ॥
तेषां मूर्त्यादिविन्यासं कृत्वा होमं समाचरेत् । पलाशोदुम्बराश्वत्थवटै: पूर्वादिदिक्षु च ॥
समिदाज्यचरूँल्लाजांस्तिलं च जुहुयात्क्रमात् । तत: प्रभाते बिम्बाद्यं कुम्भानग्नींश्च पूजयेत् ॥
दक्षिणां दापयेत्पश्चादाचार्यादेर्विधानत: । निष्कादिदशनिष्कान्ता गुरावन्येषु पूर्ववत् ॥
मुहूर्तनाडिकापूर्वं मन्त्रन्यासं समाचरेत् । कुम्भाद्बीजं समादाय विन्यसेत्स्वस्वदेशके ॥
प्रासादतारपादं वा तदर्धं वा त्रिपादकम् । समं सपादं सार्धं वा सजगत्पादुका बहि: ॥
न्यस्त्वा संस्थापयेत्पीठानथवादौ विधाय तान् । प्रतिष्ठां कारयेन्मुक्तारत्नन्यासं प्रदक्षिणम् ॥
जलाधिवासनं कुर्यादन्यत्कर्म समाचरेत् ।

Pour plus de détails au sujet du वृषभस्थापन voir *Kāmikāgama* I 74, 63b-79:

"स्थापनं श्रूयतां द्विजा: ॥
कालोऽपि पूर्ववज्ज्ञेयस्तद्वदेवाङ्कुरार्पणम् । मण्टपं परिवारोक्तमार्गेणैव समाचरेत् ॥
पञ्चैककुण्डे होम: स्यात्तथैव स्थण्डिलेऽपि वा । रत्नन्यासं प्रकर्तव्यं शैले वा लोहजेऽप्यथ ॥
रत्नार्थं हेमपद्मं वा मृण्मयादौ विवर्जयेत् । ततोऽक्षिमोचनं शुद्धिर्ग्रामादीनां प्रदक्षिणम् ॥
तोयाधिवासनं प्राप्य ततो मण्टपसंस्कृति: । द्विजसंभोजनं पुण्यतोयसेचनमेव वा ॥
वास्तुहोमं तथा शय्या स्नपनं कौतुकं तथा । वृषस्य दक्षिणे शृङ्गे कौतुकं बन्धयेद्गुरु: ॥

शयनारोपणं कुम्भस्थापनं पूर्ववन्नयेत् । सप्तवर्गाच्चतुर्थान्तं सप्तस्वरविभूषितम् ॥
बिन्दुनादसमायुक्तमादौ प्रणवसंयुतम् । वृषभाय नमश्चान्ते तस्मिन्ब्रह्माङ्गकल्पना ॥
मध्यकुम्भे वृषः प्रोक्तः परितोऽष्टसु लोकपाः । अथ विद्येश्वरान्वापि वृषस्य परितो न्यसेत् ॥
उक्षा च गोपतिश्चापि शङ्कुकर्णस्तथैव च । तीक्ष्णशृङ्गस्तथा नन्दी विषाणी पशुभृत्तथा ॥
महोदरोऽष्टमश्चैतान्स्वस्वबीजेन विन्यसेत् । संपूज्य गन्धपुष्पाद्यैर्मुद्गान्नं तु निवेदयेत् ॥
चरुकल्पे तथैव स्यात्तत्त्वमूर्त्यादिकं न्यसेत् । अग्निकार्यं ततः कुर्यात्प्रागुक्तविधिना सह ॥
समिदाज्यचरूँल्लाजान्मुद्गमाषान्क्रमाद्धुनेत् । प्रभाते देशिकः शुद्धः पूजां होमं च कारयेत् ॥
आचार्यपूजा स्यादन्ते होतृभ्यश्चापि दक्षिणा । सुमुहूर्ते सुलग्ने तु मन्त्रन्यासं समाचरेत् ॥
चलं चेद्वृषभस्थानं वेद्यन्ते च स्वदेशके । मूलमन्त्रेण संस्थाप्य गन्धपुष्पादिभिर्यजेत् ॥
ततः कुम्भान्समाहृत्य वृषाग्रे स्थण्डिले न्यसेत् । कुम्भाद्बीजं समादाय वृषस्य हृदये न्यसेत्॥
अन्येभ्यो बीजमादाय तत्पीठे परितो न्यसेत् । ततः कुम्भोदकेनैव स्नापयेद्वृषमादरात् ॥

voir aussi *Ajitāgama paṭala* **46.**

Pour plus de détails au sujet du शूलस्थापन voir *Suprabhedāgama* I 51, 15b-24a:

"ततः स्थापनमारभेत् ।
जलाधिवासनं स्नानं कृत्वा मण्डपसंस्कृतिम् । वस्त्रैराच्छाद्य शूलं तु स्थण्डिले शयनोपरि ॥
न्यस्त्वा शूलाधिपान्देवानर्चयित्वा यथाक्रमम् । कलशान्विन्यसेत्तत्र शूलास्त्राधिपसंयुतान् ॥
सकूर्चान्सवस्त्रसंयुक्तांस्तदायुधांश्च बैजिकान् । तत्तदग्नौ हुतं हुत्वा तत्तन्मन्त्रैस्तु बुद्धिमान् ॥
सुमुहूर्ते सुलग्ने तु तत्तन्मन्त्राणि संस्मरन् । मध्यपत्राधिपो रुद्रो दक्षिणे तु पितामहः ॥
वामपत्रे तथा विष्णुस्त्रिपत्राणां तु देवताः । वामा ज्येष्ठा च रौद्री च शूलमूले तु देवताः ॥
फलका स्कन्ददैवत्या कुम्भे तु वरुणः स्थितः । तदर्धं चाग्निदैवत्यं दण्डे चैव सरस्वती ॥
पीठे चैवमुमादेवी भूमिभागे वसुंधरा । स्थापयेत्क्रमशो विद्वान्गन्धपुष्पाक्षतान्वितम् ॥
स्वनामाद्येन बीजेन कलशैरभिषेचयेत् । अभ्यर्च्य हृदयेनैव हविष्यं तु निवेदयेत् ॥
शूलसंस्थापनं प्रोक्तम्"

Pour plus de détails au sujet du महापीठस्थापन voir *Kāmikāgama* I, 72, 14b-32a:

महापीठप्रतिष्ठाया विधानमधुनोच्यते । पूर्वपश्चिमसोमेषु मण्डपं पूर्ववन्न्यसेत् ॥
वेदैकसंख्यया कुण्डं वेदाश्रं स्थण्डिलं तु वा । पञ्चगव्यादिभिः पीठशुद्धिं कृत्वा च कौतुकम् ॥
स्थण्डिले वेदिकायां तु कुम्भन्यासं तु कारयेत् । मध्यपूर्वयमाप्येन्दुशंकरस्थघटेष्वथ ॥
अविघ्नं च तथामोदं प्रमोदं प्रमुखं तथा । दुर्मुखं विघ्नकर्तारं न्यस्त्वा वर्णांस्तु भावयेत् ॥
अविघ्नो विद्रुमप्रख्य आमोदः श्यामवर्णकः । प्रमोदः कृष्णवर्णश्च प्रमुखः स्फटिकप्रभः ॥
दुर्मुखः कुङ्कुमाभश्च [विघ्नकर्ताञ्जनप्रभः । क्रमादेतांश्च सर्वांस्तु] ध्यात्वैवं पूजयेद्गुरुः ॥
पीठे तत्त्वेशमूर्त्यादिन्यासं होमं समाचरेत् । जङ्घागलकपद्मान्तमात्मतत्त्वादिकं न्यसेत् ॥
समिदाज्यचरूँल्लाजान्सर्षपं च यवं तिलम् । क्रमेण जुहुयाद्धीमान्पलाशोदुम्बरौ वटम् ॥
अश्वत्थं प्राग्दिगारभ्य पूर्ववद्धोममाचरेत् । संपूज्य पीठं कुम्भांश्च प्रभाते पावकं तथा ॥
दक्षिणां पूर्ववद्दत्त्वा मन्त्रन्यासं समारभेत् । अविघ्नं कर्णिकामध्ये विन्यसेत्कुम्भमध्यगम् ॥
आमोदादीन्न्यसेद्धीमांश्चतुर्दिक्ष्वीशकोणके । तत्तत्कुम्भोदकेनैव स्नापयेत्पीठमादरात् ॥

समिदाज्यौदनैस्तेन प्रत्येक तु[1]शताहुतीः ॥ २२ ॥
हुत्वा पूर्णाहुतिं [2]कृत्वा कुम्भाद्वीजं [3]हृदि न्यसेत् । अभिषिच्य [4]घटाद्भिश्च [5]हविष्यान्तं समर्चयेत् ॥२३॥
इति [6]श्रीमद्रौरवतन्त्रे [क्रियापादे] [7]परिवारस्थापनविधिर्नाम त्रयस्त्रिंशः पटलः ॥

---

एवं स्याद्भूतपीठस्य पैशाचेऽप्येवमाचरेत् । किं तु मध्यमकुम्भस्य मध्यमे नीललोहितम् ॥
नक्षत्रं पूर्वदिग्भागे राशिं चैव तु दक्षिणे । पश्चिमे क्षेत्रपालं च सोमे विघ्नगणान्न्यसेत् ।।
रुद्रांश्च पूर्वदिक्कुम्भे याम्ये मातृगणान्न्यसेत् । गणान्पश्चिमदिग्भागे यक्षानुत्तरदिग्गते ॥
ग्रहानीशानदिग्भागे वह्नावसुरसंज्ञकान् । राक्षसान्पितृदेशे तु वायौ नागगणान्न्यसेत् ॥
तद्बाह्ये कलशान्स्थाप्य लोकपालाधिदैवतान् । संपूज्य गन्धपुष्पाद्यैर्नैवेद्यान्तं हि देशिकः ॥
एतदेव विशेषं स्यादन्यत्सर्वं समानकम् । कर्णिकायां न्यसेत्पञ्चगणानष्टौ दलेषु च ।।
दलबाह्ये न्यसेद्धीमाँल्लोकेशान्स्वस्वदिग्गतान् । मन्त्रन्यासविशेषोऽयं पिशाचबलिपीठके ॥
अनुक्तं यत्नयेत्सर्वं प्रतिमास्थापनोक्तवत् ।

[14] A, B : मन्त्रैस्तु pour मन्त्रेण
[15] A : मुखे pour मखे ; B : कुम्भे
[16] A : कुम्भाधिवासयेत् ; C : कुम्भे निवासयेत्
[1] A : शताहुतिः
[2] A : हुत्वा pour कृत्वा ; B : पश्चात्
[3] B : न्यसेद्धृदि ; C, F : हृदा न्यसेत्
[4] A : घटातोयैः ; C, F : घटैस्तोयैः
[5] A : हविषान्तं
[6] A : श्री pour श्रीमद् ; B omet श्रीमद्रौरवतन्त्रे
[7] A : परिवारस्थापनविधिपटलश्चतुस्त्रिंशः ; B : परिवारस्थापनं नाम चतुस्त्रिंशः पटलः ; C : परिवारस्थापनविधिर्नाम सप्तमः पटलः ; E : परिवारस्थापनविधिः सप्तमः पटलः ; F : परिवारस्थापनपटलः सप्तमः


UTTAMADAŚATĀLA
AṄGULA YAVA
UṢṆĪṢA 1
PŪRVAKEŚA 3 -
AKṢISŪTRA 4 3
PUṬA 4 3
4 3
HANU
GALA 4
HIKKĀ SŪTRA 3 7
HṚDAYASŪTRA 12 3
NĀBHISŪTRA 13 3
LIṄGAMŪLA 13 3
URUDĪRGHA 27 -
JĀNU 4 -
JAṄGĀDĪRGHA 27 -
PĀDADĪRGHA 4 -
124


MADHYAMADAŚATĀLA
AṄGULA YAVA
UṢṆĪṢA
5 - PŪRVAKEŚA
4 6 AKṢISŪTRA
4 4 PUṬA
3 6 HANU
4 - HIKKĀSŪTRA
13 -
HṚDAYASŪTRA
13 -
NĀBHISŪTRA
13 -
YONIMŪLA
24 - ŪRUDĪRGHA
4 - JĀNU
24 - JAṄGHĀDĪRGHA
4 - PĀDADĪRGHA
120

**SOMEŚA**

# [चतुस्त्रिंशः पटलः]

## [सोमेश्वरस्थापनविधिः[1]]

### [सोमेश्वरस्थानम्, तन्मानं च[2]]

अतः परं प्रवक्ष्यामि सोमेशस्थापनं परम्। [3]लिङ्गस्यापरभागे तु गर्भगेहे विशेषतः ॥ १ ॥
मर्त्यपैशाचयोश्चैव कर्तव्यं भद्रपीठकम्[4]। लिङ्गस्य त्रिगुणायामं सार्धं [5]वेदगुणं तु वा ॥ २ ॥
[6]देवोदयेऽग्निभागैकचतुर्भागं तु चोन्नतम्। प्रासादे मूलभूमौ[7] तु [8]स्तम्भमानसमोन्नतम् ॥३॥
देवस्योदयमुत्कृष्टं त्रिपादं कन्यसोदयम्। तयोर्मध्येऽष्टभागे तु नवधा देवतोन्नतम् ॥ ४ ॥
[9]तेष्विष्टं कर्तृयजमानमानुकूल्यं नृपादिनाम्। तन्मानं तु परिग्राह्य युक्त्या शूलं तु कारयेत् ॥ ५ ॥

---

[1] Pour सोमेश्वरस्थापनविधि voir *Ajita* 41, *Kāmika* I 68 et II 47, *Kāraṇa* I 79, II 58 et 67 *Vira* 67 et *Suprabheda* I 34 et 37

[2] cf. *Suprabhedāgama* I 34,5-14:

पूजाभागसमायामं तदूर्ध्वं प्रतिमोच्छ्रयम्। द्विगुणं त्रिगुणं तत्र मध्यमं चोत्तमं त्विह ॥
एकैकस्य त्रिभिर्भेदैर्नवमानमुदाहृतम्। गर्भं तु नवधा कृत्वा नवधा दीप्यमुच्यते ॥
द्वारस्योच्छ्रयमाने तु षोडशांशविभाजिते। भुवङ्गं च पतङ्गं च ऊर्ध्वाधोंऽशद्वयं त्यजेत् ॥
शुद्धद्वारमिदं शेषमेतन्मानेन चोत्तमम्। तत्त्रिभागद्विभागं च मध्यमं त्विति कीर्तितम् ॥
तत्त्रिभागैकमधममेकैकं त्रित्रिभाजितम्। प्रोक्तं हि नवधा मानं स्तम्भमानमथ शृणु।
स्तम्भायामार्धभागेन कर्तव्यं कन्यसं बुधैः। त्रिपादं मध्यमं प्रोक्तं समं चैवोत्तमं भवेत् ॥
प्रत्येकं त्रिविधैर्भागैर्नवमानं पुरोक्तवत्। उत्तमं तु चतुस्तालं त्रितालं मध्यमं तथा।
द्वितालमधमं विद्धि हस्तमानमथ शृणु। एकहस्तं समारभ्य नवहस्तान्तमेव च।
नवमानं करेणैव त्वङ्गुलीनां वशाच्छृणु। यजमानसमं ज्येष्ठं त्रिपादं चैव मध्यमम्।
अधमं त्वर्धमित्युक्तं यजमानानुरूपतः। एतान्युक्तानि मानानि मानाङ्गुलेन भाजिते ॥

voir aussi *Ajitāgama* 36, 1-17a

[3] B : लिङ्गव्यापारभागे तु

[4] Pour plus de détails au sujet du प्रतिमापीठ voir *Suprabhedāgama* I 34, 17-19a:

यदुक्तोत्सेधमानं तु त्रिभागं संविभज्य वै। उष्णीषात्पादपर्यन्तं द्विभागेनैव कारयेत् ॥
पीठमानमथैकांशं त्रिविधं पद्ममेकतः। द्विभागं पीठमानं स्यादासने तु विशेषतः ॥
बिम्बायामचतुर्थांशं पीठोच्चं स्थानकस्य तु।

voir aussi *Ajitāgama* 36, 17b-19a.

[5] B : वेदाङ्गुलं तु वा    [6] B : दैवादैशानभागैक ; C : देवादयोऽग्निभागैक ; F : देवालयेऽग्निभागैक

[7] B : भौमं pour भूमौ    [8] A : स्तम्भमासनमोन्नतम् ; B : स्तम्भमानं न यौतकम्

[9] A : तेषु विष्टम्भकं तु न्यासमनुकूलनृपादिनम् ; B : तेषु विष्टम्भकन्यासमनुकूलं नृपादियम् ; cf. *Suprabhedāgama* I 34,20b: आचार्यशिल्पिकर्तॄणामिष्टमानं प्रगृह्य च।

[ ईश्वरप्रतिमालक्षणम् ]

[1]प्रतिमालक्षणोक्तेन कारयेत्परमेश्वरम् । शूलं च [2]रज्जुबन्धं च [3]कल्कबन्धं तथैव च ॥ ६ ॥

---

[1] Pour प्रतिमालक्षण voir le *paṭala* suivant

[2] Pour plus de détails au sujet du रज्जुबन्ध voir *Aṃśumatkāśyapa* 85, 1-2a, 6b-7 et 27b-33a:

अथ वक्ष्ये विशेषेण रज्जुबन्धं शृणु द्विज । सर्वासु शूलसंध्यासु ताम्रपत्रैस्तु वेष्टयेत् ॥
शूलेऽष्टबन्धमालिप्य रज्जुबन्धं ततो विदुः ।......रज्जुबन्धं तु नाभेस्तु मध्यस्थादूर्ध्वगात्त्रिधा ॥
सुषुम्ना मध्यमा ख्याता पिङ्गला तस्य दक्षिणा । इडा वै तस्य वामस्था प्रधाना नाड्यस्त्विमे ॥......
द्विसप्ततिसहस्राणि नाड्यः परिकीर्तिताः । नाडिभिः स्वावृतं शूलं जीर्णकाश्वत्थपत्रवत् ॥
नालिकेरफले पक्वे त्वत्यल्पसलिलान्विते । चर्मसारं गृहीत्वा तु सारादन्यं व्यपोह्य च ।
नाड्यस्ता अभिसंकल्प्य पश्चादावृतनाडिकाः । षड्यवं तु परीणाहं रज्जुमापादयेद्दृढम् ॥
पश्चान्निरन्ध्रं रज्जुभ्यां बन्धयेद्दक्षिणावृतम् । हृत्पद्मं साष्टपत्रं तु रज्जुना कारयेद्बुधः ॥
तस्य नालं तु नाभ्यन्तं सुषुम्नासहबन्धितम् । जीवस्थानं तु तत्पद्ममित्युक्तं हि मया तव ॥
मूलमन्त्रमनुस्मृत्य रज्जुबन्धमिदं कुरु । रज्जुबन्धमिदं ख्यातम्"

voir aussi *Ajitāgama* 35, 185-205a.

[3] Pour plus de détails au sujet du कल्कबन्ध voir *Aṃśumatkāśyapa* 87, 1-17a:

अथ कल्कविधानं तु वक्ष्ये संक्षेपतः क्रमात् । नद्यां वापि तटाके वा दीर्घिकायामथापि वा ॥
सस्यक्षेत्रे तथा विप्र निरूषरजले शुभे । सुदृढाश्चूर्णतुल्याभाः स्थूलवालुकमिश्रिताः ॥
संग्राह्य शर्करा ह्येषां पेष्य प्रक्षालनं कुरु । शर्कराशोषणं कृत्वा सूक्ष्मचूर्णं तु तत्कुरु ॥
त्रिफलोदकेन संमृज्य पिण्डं कृत्वा तु शोषयेत् । कपित्थनिर्यासस्यैव जलं त्रिविधमुच्यते ॥
पञ्चांशं चैव निर्यासात्सार्धं वा पञ्च षड्गुणम् । सृतं स्वच्छजलं चैव सेकश्चेति क्रमोदिताः ॥
स्वच्छसेकजलैः पिण्डं पेषयेन्नवनीतवत् । पश्चात्कार्पासतूलैश्च मिश्रं कृत्वा सुपेषयेत् ॥
कल्कभिन्नं तु यत्तन्तु कदलीदण्डतन्तुवत् । एतत्कल्कं समालिप्य प्रथमं कल्कमेव हि ॥
निर्यासात्त्रिगुणं सार्धत्रिगुणं वा चतुर्गुणम् । मरीचित्रिफलं ह्येतं त्रियवं परिपठ्यते ॥
तेषु चान्यजलाभ्यां तु मर्दयेत्तु पुनः पुनः । क्रमेण लेपयेत्कल्कं द्वियवं त्रियवं घनम् ॥
शनैः शनैः क्रमाल्लिप्य भिन्नच्छिद्रविवर्जितम् । द्विमासं सार्धमासं वा मासं वा शोषयेत्ततः ॥
कूर्चं न्यस्त्वा ततो विप्र पेषण्या पेषयेत्क्रमात् । ततः स्वच्छजलैः कल्कं प्रमाणान्तं तु पूरयेत् ॥
बहु कृत्वा प्रमाणं तु शोध्यमानं समानयेत् । अङ्गोपाङ्गं च प्रत्यङ्गं कल्पयेल्लक्षणान्वितम् ॥
हस्तपादोदरादीनि अङ्गमित्यभिधीयते । उपाङ्गं भूषणं ख्यातं प्रत्यङ्गं चिह्नवाहनम् ॥
कपित्थस्यैव निर्यासात्तत्सार्धत्रिगुणाम्भसा । पटाच्छादं तु कर्तव्यं कल्कमालेपयेत्ततः ।
तत्कल्कं तु यवाष्टांशदशभागपरं ततः । निर्यासतोयं कूर्चेन सेच्य पेष्या तु पेषयेत् ॥
मण्डनानि तदूर्ध्वे तु मण्डयेल्लक्षणान्वितम् । पश्चाद्वै चिक्कणं लिप्य श्वेतवर्णं ततो लिपेत् ॥
इत्येवं कल्कसंस्कारलक्षणं सकलस्य तु ।

[1]पटेनाच्छादनं चैव वर्णलेपनमेव च । [2]पश्चाद्वदामि ते युक्त्या कर्तव्यः परमेश्वरः ॥ ७ ॥

[ देवीमानम्[3] ]

[4]नासान्तं [5]वास्यसीमान्तं चिबुकान्तं विशेषतः । हिक्कान्तं [6]वा स्तनान्तं वा [7]देवे देव्युन्नतं भवेत् ॥८॥

[ सोमेश्वरलक्षणम्[8] ]

शूलादीन्स्थापयित्वा तु[9] देवीं चैव तु कारयेत् । [10]आसीनौ देवदेव्यौ च प्रागुक्ते भद्रपीठके ॥ ९ ॥

---

[1] Pour plus de détails au sujet du पटाच्छादन et du वर्णलेपन voir *Amśumatkāśyapa* 90, 1-8:
अथ वक्ष्ये विशेषेण वर्णलेपनमुत्तमम् । शैलदार्विष्टिकागर्भं त्रिधा वै वर्णलेपनम् ॥
शैलजे वर्णपक्षे वै अङ्गोपाङ्गं शिलामयम् । उपरिष्टात्पटमाच्छाद्य तस्योर्ध्वे शर्करां लिपेत् ॥
तदूर्ध्वे चिक्कणं लिप्य श्वेतवर्णादयस्ततः । बिम्बोचितनिभं लिप्य प्रतिष्ठां सम्यगाचरेत् ॥
अथवा शैलजे बिम्बे पटाच्छाद्यं विनोर्ध्वतः । शर्करां यवमानं च लिप्य चिक्कणलेपनम् ॥
श्वेतं च बिम्बवर्णं च क्रमेणैवोचितं लिपेत् । शिलागर्भमिति ख्यातं वर्णहीनाश्ममेव वा ॥
शूलस्थापनकर्मादि दारुगर्भं तु पूर्ववत् । चित्रं वाप्यर्धचित्रं वा पक्वेष्टकासुधान्वितम् ॥
अङ्गसंपूरणं कृत्वा पटमाच्छादयेत्ततः । शर्करादीनि सर्वाणि शैलजे तु यथा तथा ॥
कर्तव्यमिष्टकागर्भं दारुमिश्रितमेव वा । एवं त्रिविधरीत्या तु वर्णगर्भमुदाहृतम् ॥

[2] Bien qu'il soit indiqué ici que les quatre sujets रज्जुबन्ध, कल्कबन्ध, पटाच्छादन et वर्णलेप seraient traités plus loin, nous n'en trouvons pas trace dans le *paṭala* suivant (प्रतिमालक्षणविधि) où ils sont ordinairement traités, ni dans aucun autre *paṭala* des manuscrits utilisés pour cette édition. Il est très probable qu'ils étaient compris dans les lacunes que nous constatons dans le प्रतिमालक्षणविधिपटल.

[3] cf. *Amśumatkāśyapa* 57, 3b-6a:
शम्भोर्नासाग्रसीमान्तं शक्त्युच्चं ह्युत्तमोत्तमम् । शम्भोर्वा स्तनसीमान्तमधमाधममुच्यते ॥
तयोर्मध्येऽष्टभागे तु नवधा शक्तिमानकम् । शम्भोर्हिक्कान्तमुत्कृष्टं स्तनान्तमधमाधमम् ॥
तयोर्मध्येऽष्टभागे तु नवधा शक्तिमानकम् । एवमष्टादशोत्सेधं पादादुष्णीषसीमकम् ॥

cf. *Suprabhedāgama* I 34, 67b-68a:
ईश्वरस्य च हन्वन्तं बाह्वन्तं वा स्तनान्तकम् । ईश्वरीति समाख्यातम् "

[4] A : नास्यान्तं : B : नास्यन्तं [5] E : वाथ pour वास्य ; C, F : चास्य [6] C omet वा

[7] A : देव्यो देव्योन्नतं ; B : देव्या देव्यन्तकं ; C, F : देवदेव्योन्नतं

[8] cf. *Kāmikāgama* II 47, 1-5a et 13:
वक्ष्यामि सोमोमास्कन्दसुखेशस्थापनं परम । तल्लक्षणसमायुक्तं तच्चेदानीं प्रकथ्यते ॥
चतुर्भुजस्त्रिणेत्रश्च जटामुकुटमण्डितः । सर्वाभरणसंयुक्तो वरदाभयहस्तकः ॥
कृष्णापरशुसंयुक्तोर्ध्ववामेतरकरान्वितः । असव्यसव्यकर्णस्थपत्रिकानक्रकुण्डलः ॥
सोपवीतः प्रसन्नात्मा शयितासव्यपातलः । सालम्बदक्षपादेन वामे गौर्या च संयुतः ॥
सर्वलक्षणसंयुक्तः सर्वाभरणभूषितः । ......वामे देव्या समायुक्तस्तदध्यायप्रसिद्धया ॥
स सोमः"

cf. *Suprabhedāgama* I 37, 114b1-16:
देव्यास्तु लक्षणं वक्ष्ये समासाच्छृणु साम्प्रतम् । हन्वन्तं बाहुसीमान्तं स्तनान्तं वा समुच्छ्रयम् ॥
द्विभुजां श्यामवर्णां तु सर्वाभरणभूषिताम् । दक्षिणे चोत्पलं ग्राह्य वामहस्तं प्रसारयेत् ॥
किरीटं वा करण्डाख्यं तुङ्गपीनपयोधराम् ।
voir aussi *Ajitāgama* 56, 212b-21?a.

[9] C omet तु [10] A : आसीनो देवदेवी च ; B : आसीनो देवो देवी च ; G : आसीनौ देवदेवौ च

लम्बयेद्दक्षिणं पादं [1]वामं पीठे तु शाययेत् । [2]अभयं दक्षिणं [3]पूर्वं वरदं वाममुच्यते ॥ १० ॥
दक्षिणे [4]त्वपरे टङ्कं वामे कृष्णमृगं धरेत् । शुद्ध[5]श्वेतनिभो देवः सर्वाभरणभूषितः ॥ ११ ॥
देव्यास्तु दक्षिणं पादं पीठे तु शाययेत्क्रमात् । वामपादं प्रलम्ब्याथ [6]चोत्पलं दक्षिणे करे ॥ १२ ॥
वरदं वामहस्ते[7] तु किञ्चित्प्रहसिताननाम्[8] । दुकूलवसनोपेतां[9] करण्डमकुटान्विताम्[10] ॥ १३ ॥
[11]सस्यश्यामनिभाकारां देवीं कुर्याद्यथोचितम्[12] ।

[नेत्रोन्मीलनम्[13]]

[14]नेत्रद्वययुते त्वक्ष्णे नेत्रमोक्षणमाचरेत् ॥ १४ ॥

---

[1] A : वामपीठे [2] B omet le *śloka* n° 10b à 12a [3] A : पूर्वं pour पूर्वे
[4] C, F : तु करे pour त्वपरे [5] C, F : रेत pour श्वेत [6] A omet च dans चोत्पलं
[7] A : हस्तं pour हस्ते [8] A, B : आननम् pour आननाम् [9] A, B : उपेतं pour उपेतां
[10] A, B : अन्वितम् pour अन्विताम् [11] A : तस्या pour सस्य ; B ; तस्य
[12] Après ce *śloka*, les mss. C, E et F ajoutent un demi-vers तयोर्मध्ये तु पीठोर्ध्वे सेनापतिं च कल्पयेत् । Mais dans le *paṭala* suivant (प्रतिमालक्षणविधि) nous voyons Someśvara et Somāskanda mentionnés séparément ; de plus 127b du même *paṭala* déclare सोमेश्वरः पुरोक्तवत् । L'inclusion de सेनापति ici n'est donc pas justifiée.
[13] cf. *Suprabhedāgama* I 37, 15-29:
ततोऽक्षिमोचनार्थं तु स्थण्डिले पूर्ववत्कृते । बिम्बं विन्यस्य तस्योर्ध्वे पटेन महतावृते ॥
अभितः कलशानष्टौ कूर्चाक्षतसपुष्पकान् । विन्यस्य तेषु दिक्पालान्समभ्यर्च्य यथाविधि ॥
आचार्यः शिल्पिना सार्धं नेत्रमन्त्रमनुस्मरन् । हेमसूचिप्रहाराभ्यां शैलजे लोहजे तथा ॥
वर्णयेत्तत्तु संलिख्य चित्राभासे तु मृण्मये । भ्रूरेखां प्रतिमां कृत्वा पक्ष्मरेखातृतीयकम् ॥
श्वेतमण्डलमालिख्य तन्मध्ये कृष्णमण्डलम् । कृष्णस्याभ्यन्तरे धीमाञ्ज्योतिर्मण्डलमालिखेत् ॥
सुव्यक्तं शिल्पिना कार्यं नेत्रे मन्त्रं जपेद्गुरुः । स्थापकः स्थपतिं पूज्य वस्त्रसौवर्णभूषणैः ॥
संपूज्य तोषयित्वा तु कृत्वा शिल्पिविसर्जनम् । मध्वाज्याभ्यां तु संतर्प्य सौवर्णया तु दूर्वया ॥
नेत्राणि नेत्रमन्त्रेण क्षीरेणैवं समाचरेत् । पात्रत्रयं तु संग्राह्य ताम्रजं कांस्यमेव वा ॥
तेषु क्षीराज्यमधुभिः सौवर्णं राजतैः सह । पात्राण्यापूर्य तैरेव प्रत्येकं प्रस्थमानतः ॥
मधुना दक्षिणे नेत्रे दर्शयेद्भास्करात्मके । सर्पिषा गवि वामे तु चन्द्रात्मकमिति स्मरन् ॥
पयसा चोर्ध्वनेत्रे तु दर्शयेदनलात्मकम् । तत्तन्मन्त्राण्यनुस्मृत्य तैस्तु संप्रोक्षयेद्गुरुः ॥
सौवर्णनखयुक्तास्तु मध्यतर्जन्यनामिकाः । तर्जनीदक्षिणे चोर्ध्वे मध्यमानामिकान्यके ॥
संयोज्य हृदयाद्यैश्च सिच्य गन्धाम्बुना ततः । प्रच्छन्नपटमावर्ज्य सुपुष्टां गां सुयौवनाम् ॥
गौर्धेनुहव्यमन्त्रेण दुग्धक्षीरां सवत्सकाम् । गां समभ्यर्च्य सावित्र्या दर्शयेत्तु विचक्षणः ॥
दर्शयेत्तु द्विजान्पश्चाद्द्विजादन्यान्विशेषतः । एवं सकलबिम्बानां सममेतत्प्रकीर्तितम् ॥
voir aussi *Ajitāgama* 41, 9-19.
[14] A : नेत्रत्रययुते ऋक्षैः ; B : नेत्रत्रययुते ऋक्षे

[1]स्वर्णतूल्या तु [2]नेत्रेणोन्मेषं [3]संलेखयेद्बुधः । [4]मधुवाता ऋतायेति मधु [5]संतर्पयेत्ततः ॥ १५ ॥
[6]घृतं मिमिक्षेति मन्त्रेण घृतं सम्यक्प्रतर्पयेत्[7] । [8]ब्रह्मजज्ञानमन्त्रेण ब्राह्मणान्दर्शयेत्ततः ॥ १६ ॥
[9]गौर्धेनुभव्यमन्त्रेण सवत्सां गां प्रदर्शयेत् । [10]जनौघं दर्शयेत्पश्चात्प्रच्छन्नपटमाव्रजेत् ॥ १७ ॥

[जलाधिवासः[11]]

देवस्याग्रे च[12] देव्यग्रे [13]त्रिपादीं विन्यसेत्ततः । [14]तदूर्ध्वेऽम्बुपूरिते पात्रे विन्यसेद्धृदयेन तु ॥ १८ ॥

---

[1] A, B : स्वर्णं कुर्यात्तु pour स्वर्णतूल्या तु

[2] A : नेत्रेण मर्षी ; B : नेत्रेषु मर्षी   [3] A, B : संतर्पयेद्बुधः   [4] voir *supra* p. 49 note 6

[5] A : संदर्शयेत्ततः   [6] voir *supra* p. 49 note 8   [7] A, B : प्रदर्शयेत् pour प्रतर्पयेत्

[8] voir *supra* p. 49 note 11

[9] voir *supra* p. 49 note 10 ; A, B : गौर्धेनुहव्यमन्त्रेण

[10] A : जनान् संदर्शयेत् ; B : जनं संदर्शयेत्

[11] cf. *Kāraṇāgama* I 75, 36-47:

मृण्मये त्वर्धचित्रे च भित्तिचित्रे पटे तथा । ग्रामप्रदक्षिणं नोक्तमेतेषां तु प्रजापते ॥
जलाधिवासनं चैषामग्रे तु शालिभिः कुरु । अष्टतालप्रविस्तारमुत्सेधं तु युगाङ्गुलम् ॥
स्थण्डिलं चतुरश्रं तु तन्मध्ये नलिनं लिखेत् । तस्योर्ध्वे जलभाण्डं तु विन्यसेत्सूत्रवेष्टितम् ॥
वस्त्रेणास्तीर्य तस्योर्ध्वे दर्पणं विन्यसेत्ततः । प्रतिबिम्बयुतं तत्र स्थापयेद्दर्पणं हृदा ॥
त्रिंशत्काशैः समायुक्तमग्रं तु चतुरङ्गुलम् । ग्रन्थि व्योमाङ्गुलं दैर्घ्यं प्रतिमाजानुमात्रकम् ॥
तत्कूर्चं हृदयेनैव विन्यसेद्दर्पणोपरि । चतुष्पादं न्यसेत्तत्र याज्ञिकैर्वृक्षसंभवैः ॥
रत्निमात्राधिकं बिम्बमाने गात्रस्य दैर्घ्यकम् । युगाश्रं वाथ वृत्तं वा द्वादशाङ्गुलनाहकम् ॥
पक्षतालप्रमाणेन तदूर्ध्वे फलकां कुरु । अब्ध्यङ्गुलेन सुषिरं वृत्तं मध्ये प्रकल्पयेत् ।
द्वात्रिंशत्प्रस्थसंपूर्णं कुम्भं बिम्बसमप्रभम् । सूत्रेण वेष्टयेत्कुम्भं यवान्तरक्रमेण तु ॥
एवमेवोपकुम्भं तु कल्पयेत्कल्पवित्तमः । चतुष्पाद्युपरि न्यस्त्वा पृष्ठे तु सुषिरं कुरु ॥
वेदतारप्रमाणेन नालं हैमेन संयुतम् । तन्नालं तत्र तोयैश्च स्नापयेद्दर्पणोपरि ॥
कुम्भाम्भःशोषणात्पूर्वमुपकुम्भं तु पूरयेत् । जलाधिवासनं ह्येवम्''

cf. *Suprabhedāgama* I 37, 3b-5:

रत्नन्यासं जले वासं शयनं तु प्रदक्षिणम् । चित्राभासे तु वर्ज्यं हि रत्नजे तु समाचरेत् ॥
चित्राभासे तु कर्तव्यं दर्पणोपरि यत्नतः । त्रिपाद्यूर्ध्वे जलद्रोण्यां स्नावयेद्दर्पणोपरि ॥
जलाधिवासं स्नपनमेवमेव समाचरेत् ।

Voir aussi *Ajitāgama* 40, 124-132.

[12] C : तु pour च   [13] A : त्रिपादीम् pour त्रिपादीं

[14] A : तदूर्ध्वे पूजितां पात्रीं ; B : तदूर्ध्वे विन्यसेत्पात्रीं

तयोस्तु [1]दर्पणं न्यस्य लम्बकूर्चसमन्वितम् । गन्धादिभिः समभ्यर्च्य तत्तन्मूलेन देशिकः ॥ १९ ॥

[मण्डपः[2]]

मण्डपे [3]चालयाग्रे तु [4]मध्ये वेदीं प्रकल्पयेत् । रत्निद्वयविशालेन तत्त्रिभागेन तुङ्गकम् ॥ २० ॥

दर्पणोदरसंकाशं कर्तव्यं सोपवेदिकम् । अग्रे वेदाश्रकुण्डं च शांकरे योनिकुण्डकम् ॥ २१ ॥

[शयनाधिवासः[5]]

कृत्वा गोमयमालिप्य पुण्याहप्रोक्षणं कुरु । स्थण्डिलं कारयेद्विद्वाञ्शालितण्डुललाजकैः ॥ २२ ॥
[6]तिलैश्च पुष्पैर्दर्भैश्च गन्धपुष्पादिभिर्यजेत् । [7]शयनं कल्पयेत्तस्मिन्नण्डजाद्यैर्विशेषतः ॥ २३ ॥
जलाद्दर्पणमानीय [8]शाययेच्छयनोपरि ।

[कुम्भस्थापनम्[9]]

सूत्रादिभिः [10]समायुक्तं शिवकुम्भं च वर्धनीम् ॥ २४ ॥

---

[1] A : दर्पणो न्यस्त्वा ; F : दर्पणै न्यस्त्वा

[2] cf. *Virāgama* 67, 6-8a:

प्रतिष्ठामण्डपं कृत्वा लक्षणेन समन्वितम । वेदिका ब्रह्मभागे तु मानुषे कुण्डमुच्यते ॥
वृत्तं वा चतुरश्रं वा सर्वकुण्डानि कारयेत् । देव्याश्चेद्दिक्षु विप्रेन्द्र योनिरश्वत्थपत्रवत् ॥
एकासनगतदेव्याश्चतुष्कोणेषु योनिकम् ।

voir aussi *Ajitāgama*, 40, 4-12a:

[3] A : वा pour च

[4] A : मध्यवेदीं

[5] cf. *Kāraṇāgama* I 75, 77b-80a:

मृण्मये त्वर्धचित्रे च आभासे च पटेऽपि वा । व्यपोह्य दर्पण कूर्चं संगृह्य शयनोपरि ॥
संस्थाप्य पूज्य गन्धाद्यैर्बन्धयेत्कौतुकं बुधः । मृण्मये त्वर्धचित्रे च तद्धस्ते च प्रबन्धयेत् ॥
आभासे च पटे चैव कौतुकं भावयेद्बुधः । दर्पणं वापि कूर्चं वा पूर्वोक्तं शाययेद्बुधः ॥

cf. *Virāgama* 67, 9b 12:

"शयने शाययेत्ततः ।
वास्तुहोमं दिवा कुर्याल्लक्षणेन समन्वितम् । भारशालिसमायुक्तं वेदिमध्ये परिस्तरेत् ॥
शाल्यर्धतण्डुलं न्यस्य तदर्धं तु तिलं न्यसेत् । परिस्तरेत्तु दर्भैश्च अष्टपत्रं सकर्णिकम् ॥
तत्तन्मन्त्रेण संस्मृत्य शयनं पश्च कल्पयेत् । दर्पणं शाययेत्तत्र प्रच्छन्नपटसंयुतम् ॥

[6] C ,F : तिलैः पुष्पैश्च दर्भैश्च

[7] A : शयने pour शयनं

[8] C : शाधयेत् pour शाययेत्

[9] cf. *Kāraṇāgama* II 58, 13-15a:

वेदिकामध्यमे चैव दशकुम्भं न्यसेत्ततः । क्षित्यादिकुटिलाप्रान्तं विद्याङ्गं नेत्रमुद्रया ॥
प्रणवं पूर्वमुच्चार्य पुंसौमुच्चरेत्परम् । नीलकण्ठाय ते चैव शर्वादीन्परिकल्पयेत् ॥
पश्चावरणमार्गेण पूजयित्वा विशेषतः ।

voir aussi *Ajitāgama*, 41, 32b-35.

[10] A : समायुक्ते

परितोऽष्ट[1]घटांश्चैव [2]नानागन्धाम्बुपूरितान् । स्थापयित्वा शिवे कुम्भे शिवमन्त्रं [3]निधापयेत् ॥२५॥
[4]अनन्ताद्यष्टविद्येशघटानिन्द्रादिषु न्यसेत् । सोमेश्वरं च विद्येशान्ध्यात्वा गन्धादिभिर्यजेत् ॥ २६ ॥

[होमः[5]]

ततो होमं प्रकुर्वीत [6]ह्यनेन विधिना बुधः । अग्न्याधानादिकं [7]सर्वमग्निकार्योक्तमाचरेत्[8] ॥ ॥ २७ ॥
समिदाज्यचरुक्षीरतिलसर्षपमाषकैः । प्रियङ्गु[9]मुद्गगुलैश्चैव पनसस्य फलैरपि ॥ २८ ॥
[10]सद्योधस्त्रैः शतं हुत्वा [11]देवदेव्योश्च कुण्डयोः । मूलेनाज्यशतं हुत्वा रात्रिशेषं व्यपोह्य च ॥ २९ ॥

[कुम्भाभिषेकः[12]]

[13]प्रातराचार्यः संस्नात्वा सकलीकृतविग्रहः । [14]दर्पणं च करीरादीनर्चयेद्गन्धपुष्पकैः ॥ ३० ॥

---

[1] B, C, F : अष्टौ pour अष्ट [2] B : नानागन्धसुपूजितान् [3] B : तु विन्यसेत्

[4] A, F : विद्येशानमनन्ताद्या शक्रादिषु घटान्न्यसेत् ; C, E : विद्येशानाननन्ताद्यांश्चक्रादिषु घटे न्यसेत

[5] cf. *Virāgama* 67, 16-20a:

ततो होमं प्रकुर्वीत पलाशसमिधा सह । समिदाज्यचरूँल्लाजान्सर्षपान्मुद्गमेव च ॥
माषं चैव तु विप्रेन्द्र सप्तद्रव्याणि होमयेत् । सद्येन समिधा हुत्वा हृदयेनाज्यमेव च ॥
चरुर्वामेन होतव्यः शिरोमन्त्रेण लाजकम् । सर्षपं नेत्रमन्त्रेण मुद्गमीशानमन्त्रतः ॥
माषं नेत्रेण हुत्वा तु प्रत्येकं तु शताष्टकम् । सर्वद्रव्यसमायुक्तं हव्यवाहं समुच्चरन् ॥
स्विष्टमग्नेति मन्त्रेण जुहुयात्तदनन्तरम् ।

voir aussi *Ajitāgama* 41, 36-47

[6] A omet हि dans ह्यनेन [7] A, B : कर्म pour सर्वम् [8] B : मार्गतः pour माचरेत्

[9] A : मुद्गलैश्चैव ; C : मुद्गुलैश्चैव

[10] B : सद्येत्यस्त्रैः [11] B : देवदेव्याश्च

[12] cf. *Virāgama* 67, 20b-30a:

ततः प्रभाते विमले स्नानं कृत्वा तु देशिकः । मन्त्रन्यासोक्तमार्गेण स्वदेहे विन्यसेत्ततः ॥
ततोऽवसानहोमं तु आज्येन चरुणा युतम् । अष्टोत्तरशतं हुत्वा द्रव्यं प्रति विशेषतः ॥
चतुर्दिक्षु चतुर्वेदैः कुर्यादध्ययनं ततः । प्रायश्चित्तं तु होतव्यं चित्तादिभिर्जयादिभिः ॥
हुत्वान्ते तु यदस्येति जुहुयात्तदनन्तरम् । आचार्यदक्षिणां दद्यात्पश्चाङ्गभूषणैर्युतम् ॥
होमीनां तु पदार्थीनां पूजयेत्तु विशेषतः । प्रतिमस्याग्रतश्चैव जलभाण्डं न्यसेत्ततः ॥
तस्योर्ध्वे दर्पणं स्थाप्य मूलमन्त्रेण संयुतम् । प्रोक्षयेच्चित्रकर्मे तु दर्पणे स्नापयेत्ततः ॥
प्रधानकलशं चैव स्नापयेत्तु विशेषतः । पूर्वादीशानपर्यन्तं स्नापयेत्स्वस्वमन्त्रतः ॥
हविर्निवेदयेत्पश्चात्ताम्बूलं दापयेत्ततः । ब्राह्मणान्भोजयेत्तत्र शैवान्संभोजयेत्ततः ॥
सर्वासां देवतानां च स्थापनक्रममेव हि । तत्तन्मन्त्रेण कर्तव्यं क्रियाभेदो न विद्यते ॥
प्रतिष्ठोपकरणं सर्वमाचार्याय प्रदापयेत् । चित्रस्थापनमेवोक्तम्"

cf. *Kāraṇāgama* I 75, 133b-138a:

" मृण्मये त्वर्धचित्रके ॥
आभासे च पटे चैव विशेषोऽस्ति श्रृणुष्व हि । शयनात्कूर्चमुत्तीर्य प्रतिमाहृदि विन्यसेत् ॥
बिम्बं पूर्वं प्रतिष्ठाप्य कर्मार्चां स्नापयेज्जलैः । कर्मार्चायास्त्वभावे तु पीठं चैवाभिषेचयेत् ॥

आचार्यं पूजयेत्तत्र वस्त्रकाञ्चनभूषणैः । मुहूर्ते समनुप्राप्ते कृत्वा [1]घृतशिरोऽर्पणम् ॥ ३१ ॥
देवं चैव तु देवीं च [2]कलान्यासैः [3]समर्चयेत् । [4]वेद्यास्तु दर्पणं चैव [5]करीरांश्च समुद्धरेत् ॥ ३२ ॥
[6]हर्म्यंप्रदक्षिणं[7] कुर्यात्सर्वालंकारसंयुतम् । गर्भगेहं प्रविश्याथ बिम्बाग्रे तु निधापयेत् ॥ ३३ ॥
[8]घटाद्बीजं समादाय प्रतिमाहृदि विन्यसेत् । [9]वर्धन्या बीजमादाय देव्यास्तु हृदि विन्यसेत् ॥ ३४ ॥
[10]परितोऽष्टघटाद्बीजान् [11]परितस्त्वासने न्यसेत् । [12]जलद्रोण्यां [13]त्रिपाद्यूर्ध्वे [14]दर्पणं तु निधापयेत् ॥३५
तद्घटस्थोदकेनैव [15]त्वभिषेकं समाचरेत् । अर्चनोक्तं समभ्यर्च्य प्रभूतं च हविर्ददेत् ॥ ३६ ॥
उत्सवं कारयेत्पश्चाच्छ्रद्धाभक्तिसमन्वितः ॥ ३७ ॥

इति [16]श्रीमद्रौरवतन्त्रे [क्रियापादे] [17]सोमेश्वरस्थापनविधिर्नाम चतुस्त्रिंशः पटलः

---

अर्चनोक्तं समभ्यर्च्य वस्त्राभरणपुष्पकैः । भस्म दत्त्वा हृदा मन्त्री दर्पणं दर्शयेत्ततः ॥
पायसं दापयेत्तत्र ताम्बूलं दापयेत्ततः । चलाचलविभागं तु ज्ञात्वा पूर्वोक्तवत्क्रिया ॥
तत्तत्स्थापनोक्तं च मार्गेणैव समाचरेत् ॥

voir aussi *Ajitāgama* 41, 48-61.

[13] B : प्रातराचार्यकः स्नाप्य [14] C : दर्पणं चाग्निनादीनि अर्चयेद् ; E, F : दर्पणं चाग्निरादीनि अर्चयेद्

[1] B : कृत pour घृत [2] A : कलान्यासं [3] C, F : समर्पयेत् [4] A : वेद्यां तु
[5] C : करं चैव समुद्धरेत् ; F : करीरं चैवमुद्धरेत्
[6] A : हर्म्यं pour हर्म्यं ; F : हर्म्ये [7] B : प्रदक्षिणीकृत्य pour प्रदक्षिणं कुर्यात्
[8] B : कुम्भाग्राद्बीजमादाय प्रतिमाहृदि विन्यसेत् [9] A : वर्धन्यां
[10] A : परितोऽष्टघटां बीजां ; B, C : परितोऽष्टघटान् बीजान् [11] A : परितः स्वासने
[12] A : जलद्रोणां ; E : जलद्रोणान् [13] A : त्रिपादोर्ध्वे ; B, C : त्रिपादूर्ध्वे [14] B, C, F : दर्पणे
[15] A omet तु dans त्वभिषेकं [16] A : श्री pour श्रीमद् ; B omet श्रीमद्रौरवतन्त्रे
[17] A : सोमेश्वरप्रतिष्ठाविधिपटलः पञ्चत्रिंशः ; B : सोमेश्वरप्रतिष्ठा नाम पञ्चत्रिंशः पटलः ; C : सोमेश्वरस्थापनविधिर्नाम षष्ठ पटलः ; E : सोमेश्वरस्थापनविधिः षष्ठः ; F : सोमेश्वरस्थापनपटलः षष्ठः

# [पञ्चत्रिंशः पटलः]
## [प्रतिमालक्षणम्][1]
### [विग्रहभेदाः[2]]

अतः परं प्रवक्ष्यामि प्रतिमालक्षणं परम्। [3]द्विसप्त विग्रहे भेदाः स्यात्तदादौ सुखासनः ॥ १ ॥
सोमेश्वरो द्वितीयः [4]स्यात्सोमास्कन्देश्वरस्ततः। [5]उक्षारूढश्चतुर्थश्च [6]पञ्चमः स्यात्पुरारिकः ॥२ ॥
चन्द्रशेखरमूर्तिस्तु [7]षष्ठस्तु परिकीर्तितः। सप्तमः कालहारी [8]स्यात्कल्याणश्चाष्टमो भवेत्[9] ॥ ३ ॥

---

[1] Pour प्रतिमालक्षण voir *Aṃśumatkāśyapa* 55 et 56, *Aṃśumadāgama* 1, *Ajita* 36, *Kāmika* I 65, *Kāraṇa* I 11. *Kiraṇa* III 22, *Dīpta* 16, *Makuṭa* 10, *Yogaja* 6, *Vīra* 62-64, *Santānasaṃhitā* 16, *Suprabheda* I 34 et *Sūkṣma* 56.

[2] cf. *Kāmikāgama* I 65, 23-27:

आदौ सदाशिवः प्रोक्तो नृत्तमूर्तिरतः परम्। उमोमास्कन्दसहितः स्थितः स्यादिन्दुशेखरः ॥
त्रिपुरघ्नस्ततः प्रोक्तो लिङ्गोद्भूतस्त्वनन्तरम्। ततः स्याद्दक्षिणामूर्तिर्गेयमूर्तिरतः परम् ॥
चण्डेशाधिपतिः पश्चात्कालकामादिनाशकः। सुखासनस्ततः प्रोक्तस्ततः कल्याणसुन्दरः ॥
उमाविष्ण्वर्धरूपं च ब्रह्मविष्णुसमन्वितः। वृषारूढस्ततः प्रोक्तो गङ्गायुगपरस्तथा ॥
ततः कङ्कालमूर्तिः स्याद्बलिभर्ता त्वनन्तरम्। नन्दीश्वरप्रसादश्च ऊर्ध्वपादसमन्वितः ॥

cf. *Suprabhedāgama* I 34, 72-75a:

आद्यं सुखासनं चैव द्वितीयमुमया सह। वृषारूढं तृतीयं तु त्रिपुरारि चतुर्थकम् ॥
नृत्ताख्यं पञ्चमं रूपं षष्ठं सोमार्धशेखरम्। सप्तमं चार्धनारीशं हरेरर्धं तु चाष्टमम् ॥
भिक्षाटनं च नवमं दशमं कामनाशनम्। एकादशं तु कालघ्नं ततो लिङ्गपुराणिकम् ॥
द्वादश प्रतिमा ह्येवम्"

voir aussi *Ajitāgama* 36, 175-180.

[3] A : द्विसप्तविग्रहा भेदं स्यात्तदादौ ; B : द्विसप्तविग्रहभेदं स्यात्तदादौ तु ; C, F, G : सप्तविग्रहभेदं स्यात्तदादौ तु

[4] F : वा pour स्यात्

[5] B : दक्षारूढ pour उक्षारूढ

[6] A : पञ्चमं स्यात्पुरारि वै ; B, C : पञ्चमं स्यात्पुरारिकम्

[7] A : षष्ठमं परिकीर्तये ; B : षष्ठं तु परिकीर्तितम् ; C : षष्ठमः परिकीर्तितः ; F, G : षष्ठमं परिकीर्तितम्

[8] A : तु pour स्यात्

[9] Ce texte déclare qu'il y a quatorze *mūrti* (voir śloka 16); mais dans tous les manuscrits utilisés pour cette édition, l'énumération des noms cesse après le huitième, et le texte enchaîne sur un autre thème : il doit y avoir une lacune de deux *śloka*. Plus loin, lors des définitions des *mūrti*, après la définition de la huitième, Kalyāṇasundaramūrti, (śl. 221a) on ne trouve pas la formule qui clôt chaque définition précédente. Il semble qu'il y ait là encore une lacune avant la définition de Nṛttamūrti, qui apparaît comme la neuvième mais devrait être la dixième. Au total on ne trouve donc énumérées que treize *mūrti* au lieu des quatorze annoncées. Malheureusement, aucune indication dans le texte présent ni dans les autres *paṭala* ne permet de restituer le nom de la *mūrti* manquante; comme le nombre des *mūrti* varie avec chaque *āgama*, même une étude comparative ne peut résoudre ce problème.

[गर्भगेहतः प्रतिमामानम्[1]]

गर्भगेहविशालं तु [2]वेशत्रयविभाजितम्[3] । [4]अधमान्तरोत्कृष्टैर्हि प्रत्येकं नवधा भवेत् ॥ ४ ॥

[लिङ्गवशात् प्रतिमामानम्[5]]

लिङ्गोच्चभावनाहं वा [6]विशाले वोदये तु वा । प्रत्येकाष्टद्वयांशे तु [7]शिवाग्निभूतसप्त वा ॥ ५ ॥

नव[8]रुद्रत्रयाधिक्य[9]दशांशं [10]वा त्रिपञ्चकम् । सदशादधिकं वापि हीनं [11]पञ्चांशमेव च ॥ ६ ॥

[द्वारतः स्तम्भतश्च प्रतिमामानम्[12]]

द्वारोच्चे स्तम्भमाने च[13] गर्भमानवदाचरेत् ।

[जात्यंशायांशयोजनम्[14]]

तस्माज्जात्यंशमायांशं योजयेदनुकूलितम् ॥ ७ ॥

---

[1] cf. *Dīptāgama* 16, 7b-11:

गर्भमानप्रमाणेन द्विविधं चोच्यते मया । यस्य गर्भगृहस्यार्धं कन्यसं प्रतिमोच्छ्रयम् ॥
पञ्चभागसमे गर्भे त्रिभागं मध्यमं भवेत् । त्रिभागे द्वयमित्युक्तं प्रतिमोत्सेधमुत्तमम् ॥
अथवा गर्भमानेन वक्ष्यते क्रमशोऽधुना । गर्भगेहं तथा भज्य एकैकं तु त्रिधा पुनः ।
अधस्तात्कन्यसत्रीणि मध्यमत्रीणि मध्यमम् । उत्तमत्रीणि चाग्रे तु एकैकं प्रति मानकम् ॥
नवधा मानमित्युक्तं कनिष्ठादि त्रयं त्रयम् ।

voir aussi *Ajitāgama* 36, 2b-5.

[2] A : वश pour वेश ; B : गुण [3] C, F, G : विभाजिते pour विभाजितम्

[4] A : अधमान्तरकुष्ठं हि ; B : अथ मान्तारकुष्ठं हि : C , F : अधमान्तारकुष्ठाभिः ; C : प्रथमान्तरकुष्ठाभिः

[5] cf. *Kāmikāgama* I 65, 1b: लिङ्गतारोच्चनाहैर्वा तैश्च द्वित्रिगुणैस्तु वा ।

voir aussi *Ajitāgama* 34, 11b-17a.

[6] A : विशालं वोदयं तु वा ; C : विशालं वोपयं तु वा ; F, G : विशालं वो वयं तु वा

[7] C : शिवाग्निभूत सप्त वा [8] B : सूत्र pour रुद्र

[9] B, C,G : आधिक्यं pour आधिक्य [10] B : वात्र पञ्चकम्

[11] C : पञ्चांशकेऽपि च ; E, F, G : पञ्चांशकेव च

[12] cf. *Kāraṇāgama* I 11,1 -11a et 16-17a:

द्वारस्य सममानं तु उत्तमं तत्प्रकीर्तितम् । ग्रहभागैकहीनं तु मध्यमं प्रतिमोच्छ्रयम् ॥
अष्टभागैकहीनं स्यादधमम............ । प्राचीरुत्तर[पादादुत्तर?]सीमान्तं स्तम्भमानमथोत्तमम ॥
रन्ध्रभागैकहीनं यन्मध्यमं समुदाहृतम् । अष्टांशहीनमधमं स्तम्भमानं प्रकीर्तितम् ॥

voir aussi *Ajitāgama* 36, 6-9.

[13] A, B : स्तम्भमानेन

[14] cf. *Aṃśumatkāśyapa* 55, 47b-54:

अङ्गुलादन्ययन्मानं वेदाशीति विभज्य च । एकांशं रोपयेत्तस्माज्जात्यंशं तद्द्विजार्हकम् ॥
द्विभागाधिकसप्तत्यंशं भज्यैकांशसमन्वितम् । नृपजात्यंशकं ह्येवं नृपाणामृद्धिकारणम् ॥
चतुर्विंशतिभागं तु कृत्वैकांशसमन्वितम् । वैश्यजात्यंशकं ख्यातं वैश्यानामभिवृद्धिदम् ॥

अशीतिषष्टिविंशांशाद्दश[1]भागाद्विशेषतः । [2]वेदाक्षयुगषड्भागे [3]त्वधिके तु विभाजिते ॥ ८ ॥
तस्मादेकांशमाधिक्यं [4]द्विजजात्यंशमुच्यते । तज्जात्यंशयुतोच्चं तु दशभागाच्छतान्तकम्[5] ॥ ९ ॥
भागं कृत्वा तु [6]सकलमेकांशमधिरोपयेत् । नृपतेरपि वास्तोस्तु [7]कर्तुश्चानुकूलं हि यत् ॥ १० ॥

[आयादिशुद्धिः[8]]

तन्मानं तु गृहीतव्यमायात्[9] षट्शुद्धिमीक्षयेत् । [10]तुङ्गांशेऽष्टगुणेऽर्कांशहृते [11]शेषायमुच्यते[12] ॥ ११ ॥

---

षोडशांशेंऽशमारोप्य शूद्रऋद्धिकरं भवेत् । एवं जात्यंशसंयुक्तमंशमष्टगुणीकृतम् ॥
सप्तविंशतिभिर्ह्रासे शेषमश्वादिभं भवेत् । तद्दिनं जातिऋक्षं स्यान्नृपवास्तुदिनान्वितम् ॥
सुशोभनेन युक्तं चेत्कर्तृवास्तुनृपादिनाम् । त्रिंशाद्याशतभागान्तं बिम्बोच्चे तु विभाजिते ॥
शश्यंशं रोपयेद्यावच्छुभायादिकसंभवम् । तन्मानं कौतुकोच्चं स्यात्पादादुष्णीषकावधि ॥
आयांशकमिदं ख्यातं चैकांशायादि कल्पयेत् ।

cf. *Kāmikāgama* I 65, 8b-13a:

अष्टषष्ट्यर्कपङ्क्त्यूर्ध्वे वेदद्वियुगषड्विधम । भागं कृत्वैकभागेन युक्तं जात्यंशकान्वितम् ॥
वसुभिर्गुणिते तस्मिन्सप्तविंशतिभिर्हृते । ब्राह्मणादिदिनं प्रोक्तं तेषामेतच्छुभावहम् ॥
त्रिष्वङ्गुलप्रमाणेषु जात्यंशकं न रोपयेत् । शुभमानं न युक्तं चेद्राजग्रामादिवास्तुषु ॥
उत्सेधं पङ्क्तिपङ्क्त्यादि भजेत्पञ्च षडंशकम् । व्योमभागः सदा योज्यो यावानस्य शुभोदयः ॥
आयांशश्चैव नेष्टः स्यात्त्रिविधेष्वङ्गुलेषु च । यवमानेऽपि जात्यंशमायांशं नैव रोपयेत् ॥

[1] G : भागो pour भागाद्   [2] B : वेदाष्ट्युगषड्भागं ; C : वेद्यार्थप्रागषड्भागं ; E, F : वेदार्थयुगषड्भागं
[3] A, B : अधिकं pour त्वधिके   [4] C, E : द्विजाज्जात्यंशमुच्यते   [5] B : शतांशकम् pour शतान्तकम
[6] A : लुगलम् pour सकलम् ; B : लगुलम् ; C : लुगुलम्   [7] B : कर्तुर्यदनुकूलकम्
[8] cf. *Aṃśumatkāśyapa* 55, 55-67:

अष्टभिर्वर्धयेदंशं भानुभिर्ह्रासयेद्द्विज । शेषमायमिति ख्यातमंशमष्टगुणीकृतम् ॥
सप्तविंशतिभिर्ह्रासे शेषमश्वादिभं भवेत् । नवभिर्गुणिते त्वंशं नाडिभिर्ह्रासयेत्ततः ।
शेषं व्ययमिति ख्यातमंशं वै त्वनलेन तु । वर्धयेद्वसुभिर्ह्रासे शेषं ध्वजादि योजयेत् ॥
नवभिर्वर्धयेत्सप्तह्रासे वारमुदाहृतम् । वर्धयेद्वेदसंख्यया ह्रासयेन्नवसंख्यया ॥
शेषमंशकमित्युक्तमेवमायादिषड् भवेत् । आयाधिक्यव्यये क्षीणं पुष्कलायं सुशोभनम् ॥
ध्वजो धूमश्च सिंहश्च श्ववृषौ खरहस्तिनौ । काकश्च योनयश्चाष्ट तेषु केतुहरी वृषः ॥
गजश्च शुभदा ज्ञेया गर्हिताः शेषयोनयः । विपत्तिः प्रत्यरं चैव वधो वैनाशिकस्तथा ॥
षष्ठाष्टद्वादशं लग्नं वर्ज्यं शेषाः शुभावहाः । कर्तुश्च ग्रामनक्षत्राद् नृपवास्तुदिनं तथा ॥
गणयेद्बिम्बऋक्षान्तं शोभनं तु परिग्रहेत् । वारे सौम्यादि सौख्यं तु भौमवारं विवर्जयेत् ॥
सूर्यस्य वारं सौरेश्च मध्यमं चेति संस्मृतम् । भानुवारादिसंयुक्तं विशाखादि चतुश्चतुः ॥
योगं तु मरणं नाशममृतादि यथाक्रमम् । तस्करो भुक्तिशक्ती च धनं राजा च षण्डकः ॥
अभयं निर्धनः प्रैष्यं नवांशकमुदाहृतम् । तेषु तस्करषण्डं च ऋणं चैव तु वर्जयेत् ॥
गणेषु सुरमानुष्यं योरयमन्यं विवर्जयेत् । एवं परीक्ष्य शोभाढ्यमायामं तु सुयोजयेत् ॥

[1]वेदघ्र्या दशभिर्ह्रासे [2]तस्कराद्यंशकं भवेत्। आयाधिकं[3] व्ययक्षीणं[4] [5]नृपस्य चानुकूलकम्॥ १२॥
[6]भौमवारविनिर्मुक्तं [7]शुभयोन्यंशकान्वितम्। यन्मानं तद्गृहीतव्यं [8]बिम्बाङ्गैर्मूर्धकान्तकम्॥ १३॥

[अङ्गमानम्[9]]

[10]सवेदषट्शते भागे तन्माने तु [11]विभाजिते। एकांशं देहमात्रं [12]स्यात्तद्दस्वंशं यवं भवेत्[13]॥ १४॥
[14]शिवांशाग्नियवोपेतमुष्णीषोच्चमुदाहृतम्। [15]गुणांशं पूर्वकेशान्तं तस्मादग्नियवान्वितम्॥ १५॥

---

cf. *Kāmikāgama* I 65, 13b-18:

वसुभिर्गुणितेष्वर्कहृते चायं विनिर्दिशेत्। अष्टपञ्चदिनं प्रोक्तं पञ्चविंशतिभिर्हृतम्॥
नवभिर्गुणिते सप्तहृते वारं तु निर्दिशेत्। नन्दसंगुणिते दिग्भिर्भाजिते व्ययमादिशेत्॥
गुणघ्ने वसुभिन्ने तु योनिरित्यभिधीयते। वेदवसुगुणिते नन्दहृते त्वंशक इष्यते॥
वायोर्ऋक्षफलं प्रोक्तं राशिरंशश्च ऋक्षतः। त्रिंशद्भिन्ने तिथिः प्रोक्ता योगो वारर्क्षयोर्भवेत्॥
जात्यंशयोजिते वैभिर्युक्तं चेत्तत्प्रगृह्यताम्। नो चेदायांशयुक्ते तु सशुभं तु समारभेत्॥
गृहीतप्रतिमोत्तुङ्गमानमात्रेण वा भवेत्॥

voir aussi *Ajitāgama* 36, 375-389.

[9] Une meilleure lecture semble être आयादि pour आयात्

[10] A : तुङ्गाष्टं च गुणेऽर्कांशहृदे शोषायमुच्यते ; B : तुङ्गाष्टमगुणैकांशं हृद्देशोयनमुच्यते ; C : तुङ्गाष्टांशगुणैकांशहृतो षोमायमुच्यते

[11] La forme grammaticale correcte est शेष आय उच्यते

[12] La partie du texte consacrée à la définition de व्यय, योनि, नक्षत्र et वार qui est normalement attendue ici semble perdue.

[1] A : वेशद्धयाद्दशभिग्रासे ; B : वेदाद्यधंशिमिभ्रासे ; C : वैशुद्धयाद्दशभिर्ह्रासे ; une meilleure lecture semble être: वेदघ्र्या नवभिर्ह्रासे

[2] A : तस्कराद्यं करं भवेत् ; C, G ; तस्कराद्यकरं भवेत्  [3] C F G : आयाधिक्यं

[4] A : क्षीण pour क्षीणं  [5] A : नृपस्य तु च लक्षणम् ; C, E, F : नृपस्यानु च कूलकम् ; G ; नृपस्यानुकूलकम्

[6] A : भौमे वारे विनिर्मुक्तिः ; B : भौमवारे विनिर्मुक्तिः ; C, F, G : भौमवारे विनिर्मुक्तं

[7] C, G : शुभयोन्यंशमन्वितम्  [8] A, B, C : बिम्बाग्रे मूर्धकान्तकम्

[9] cf *Aṃśumatkāśyapa* 56, 1-10a:

उत्तमं दशतालं तु शृणु वक्ष्ये द्विजोत्तम। सवेदविंशदंशं च शतं बिम्बोदयं कुरु॥
तेष्वेव तालमात्रं स्यात्तन्मात्रे वसुभाजिते। उष्णीषात्पादपर्यन्तमङ्गमानं प्रमीयते॥
त्रियवाधिकचन्द्रांशमुष्णीषोच्चमुदाहृतम्। तस्मादापूर्वकेशान्तमङ्गं भागमुदाहृतम्॥
केशान्तादक्षिसूत्रान्तं युगांशं त्रियवाधिकम्। अक्षिसूत्रात्पुटान्तं च पुटाद्धन्वन्तमानकम्॥
प्रत्येकं त्रियवाधिक्यं युगांशोदयमिष्यते। हन्वादिगलमानं तु चतुर्यवमुदाहृतम्॥

युगांशमक्षसूत्रांशं [1]पुटान्तं च तथैव च। हन्वन्तं चैव तत्तुल्यं गललम्बं [2]चतुर्यवम् ॥ १६ ॥
यवैकोनचतुर्भागं [3]ग्रीवामानमुदाहृतम्। हिक्कादिहृदयान्तं च ततो नाभ्यवसानकम्[4] ॥ १७ ॥
नाभेर्लिङ्गस्य [5]मूलान्तं [6]तुल्यमग्नियवान्वितम। त्रयोदशाङ्गुलं [7]प्रोक्तमूरुदीर्घं त्रिवेशकम्[8]॥ १८ ॥
[9]वेदांशं जानुदीर्घं [10]स्याज्जङ्घोच्चं चोरुकांशकम्। जानुदीर्घसमं [11]पादतलस्योच्चमुदाहृतम् ॥ १९ ॥
[12]अङ्गुष्ठाग्रात्तु[13]:पार्ष्ण्यन्तं तलं सप्तदशाङ्गुलम्। हिक्कासूत्रादधो बाहुदीर्घं त्रिनवमात्रकम्[14] ॥ २० ॥
[15]कूर्परोच्चं द्विमात्रं स्यात्त्रिसप्तांशं प्रकोष्ठकम्। तस्मान्मध्याङ्गुलाग्रान्तं सार्धत्रयोदशाङ्गुलम् ॥ २१ ॥
[16]सार्धत्र्यङ्गुलं[17] प्रोक्तं मुखस्य तु विशालकम्। [18]मुखान्तस्य तु विस्तारं सार्धत्रयोदशाङ्गुलम् ॥ २२ ॥

---

यवैकोनमुदांशं [युगांशं?][तु कण्ठोच्चमिति कथ्यते। कण्ठमूलाद्धनु:सूत्रं[दध:सूत्रं?]हिक्कासूत्रमुदाहृतम् ॥
हिक्कादा[या?]हृदयान्तं च हृदयं [याद्?]नाभिसीमकम्। नाभेस्तु मेढ्मूलान्तं तु समं गुणयवाधिकम् ॥
त्रयोदशांशमुत्सेधं प्रत्येकं द्विजसत्तम। अग्र[मेढ्?]मूलात्सूत्रमध्यं [तु यत्सूत्रं?] अर्धसूत्रं तदुच्यते ॥
अर्धसूत्रादधश्चोरुदीर्घं नक्षत्रमायतं [मानकम्?]। तस्माद्वेदाङ्गुलं जानु जङ्घोरुसदृशायता ॥
युगं पादतलोत्सेधमेवमुत्सेधमुच्यते ॥
voir aussi *Ajitāgama* 36, 45-52a.

10 A, B : सवेदं षट्शतभागं तन्मानं ; C : सवेदषट्सप्तभागस्तु तन्मानं    11 B : विभाजितम्

12 A : स्यात्तद्वत्संशद्वयं भवेत ; C : तद्वत्स्यांशं द्वयं भवेत् ; G : तद्वत्सांशं यवं भवेत्

13 cf. *Kāraṇāgama* I 11, 60b-61a:
यल्लब्धोत्सेधमानं तु चतुर्विंशच्छतं कुरु। अङ्गुलं तेषु भागैकं वस्वंशैकं ततो यवम् ॥

14 A : शिवांशाग्नियतोपेतम् ; C G : शिवांशाग्नियतोपेतम्    15 A : गणांशं ; B : गणेऽशं

1 C : प्रदान्तं च ; G : गुदान्तं च    2 C, F, G : च तुल्यवत्    3 A : ग्रीव pour ग्रीवा

4 C, F, G : अवधानकम् pour अवसानकम्    5 B : मूलं तु    6 C, F : तन्तु pour तुल्य

7 C : प्रोक्तं दीर्घं ; G : प्रोक्तमूलदीर्घं    8 G : त्रिवेदकम्    9 A, B : वेदाङ्गं

10 A : स्याज्जङ्घोच्चारुद्रांशकम् ; B : जङ्घोच्चं रुद्रकांशकम् ; C : जङ्घोच्चं रुद्रबांशकम् ; F, G : जङ्घोच्चं रूपांशकम्

11 A : पादं pour पाद

12 cf. *Aṃśumatkāśyapa* 56 9b-11a:
अङ्गुष्ठाग्रात्त पार्ष्ण्यन्तं तलं सप्तदशाङ्गुलम्। हिक्कासूत्रादधो बाहुदीर्घमृक्षाङ्गुलं भवेत् ॥
कूर्परोच्चं द्विभागं स्यादेकविंशत्प्रकोष्ठकम्। सार्धत्रयोदशाङ्गुल्यं मध्यमाङ्गुलिसीमकम् ॥

13 A, B : अङ्गुष्ठाग्रं तु    14 A : मात्रिकम् pour मात्रकम्    15 A, G : कोर्परोच्चं

16 cf. *Aṃśumatkāśyapa* 56, 11b-14a:
ततो वै मुखविस्तारं सार्धभान्वङ्गुलं भवेत्। मुखान्तस्य तु विस्तारं सार्धत्रयोदशाङ्गुलम् ॥
ग्रीवाग्रं सार्धनन्दांशं ग्रीवामूलं दशाङ्गुलम्। हिक्काधो बाहुसीमान्तं चत्वारिंशच्छिवाधिकम् ॥
सार्धद्वाविंशदंशं तु कक्षयोरन्तरे ततम्। नवांशं चतुर्यवोपेतं बाहुमूलविशालकम् ॥

17 B : सार्धमध्यङ्गुलं    18 A : मुखं तस्य तु ; G : मुखान्तस्यातु

ग्रीवाग्रं[1] सार्धनन्दांशं[2] [3]ग्रीवामूलं दशांशकम्। [4]हिक्काधो बाहुपर्यन्तं चत्वारिंशद्द्वयाधिकम् ॥ २३ ॥
त्रयोविंशतिमात्रं स्यात्कक्षयोरन्तरं रुरो[5]। [6]सार्धनन्दाङ्गुलं प्रोक्तं बाहुमूल[7]विशालकम् ॥ २४ ॥
[8]स्तनदेशे तु विस्तारं त्रिःसप्तांशमुदाहृतम्[9]। [10]कटिपार्श्वान्तविस्तारं त्रिःसप्ताङ्गुलमिष्यते ॥ २५ ॥
[11]ऊरूमूलविशालं तु मनुमात्रमुदाहृतम्। [12]भान्वङ्गुलमितं प्रोक्तमूरुमध्यविशालकम् ॥ २६ ॥
[13]धर्मांशं जानुविस्तारं जङ्घामूलविशालकम्। सार्धवस्वङ्गुलं प्रोक्तं [14]मध्यं सप्ताङ्गुलं भवेत् ॥ २७ ॥
[15]तयोर्मध्यविशालं तु नवमात्रमुदाहृतम्[16]। [17]नलकाविस्तृतं पञ्चान्मात्रमित्यभिधीयते ॥ २८ ॥
[18]सार्धपञ्चाङ्गुलं [19]चैवं गुल्फाक्षस्य विशालकम्। [20]अक्षादातलतुङ्गं तु [21]सार्धवेदाङ्गुलं भवेत् ॥ २९ ॥
[22]पार्ष्णितारं च [23]तत्तुल्यं तलमध्यं षडङ्गुलम्। तलाग्रस्य तु विस्तारं सप्तमात्रमुदाहृतम् ॥ ३० ॥

---

1 A, E, F, G : ग्रीवार्धं — 2 A, B : नन्दाङ्गं pour नन्दांशं — 3 A : ग्रीव pour ग्रीवा
4 A : हिक्कां यो pour हिक्काधो — 5 A : गुरों pour रुरो, E, G : रुरो:
6 A : साध्वि pour सार्ध ; B : सन्धि — 7 B : मूलं pour मूल — 8 C, F, G : स्तनदेशं तु
9 cf. *Aṃśumatkāśyapa* 56, 14b: एकविंशतिभागं स्यात्स्तनदेशे तु विस्तरम्।
10 cf. *Aṃśumatkāśyapa* 56, 16b-17a:

कटेरग्रविशालं तु द्विर्नवाङ्गुलमुच्यते। तदधः कटिपार्श्वान्तं विस्तारः सार्धविंशतिः ॥

11 cf. *Aṃśumatkāśyapa* 56, 17b-20:

पादोनमनुभागं तु ऊरुमूलविशालकम्। सपादद्वादशांशं तु ऊरुमध्ये विशालकम् ॥
पादोनधर्मभागं तु जानुव्यासमुदाहृतम्। सपादवसुभागं तु जङ्घामूलविशालकम् ॥
पादोनसप्तभागं तु जङ्घामध्यविशालकम्। तयोर्मध्यततं विप्र नवभागमुदाहृतम् ॥
पादोनपक्षभागं तु नलकाविस्तृतं भवेत्।

12 C, F : भागं भान्वङ्गुलं ; G : भद्रं भान्वङ्गुलं — 13 B : धनांशं
14 A : मध्ये pour मध्यं ; C, C : मध्य — 15 F : तयोर्मध्ये विशालं तु
16 C, F, G : उदाहरन् pour उदाहृतम् — 17 A : नलकाविहितं ; C, F : नलकापि हृतं
18 cf. *Aṃśumatkāśyapa* 56, 21-23a:

त्रियवाधिकपञ्चांशं गुल्फाक्षव्यासमुच्यते। अक्षादातलतुङ्गं तु सार्धवेदाङ्गुलं भवेत् ॥
पार्ष्णितारं च तत्तुल्यं पार्ष्णेरुच्चं तदेव हि। तलमध्यं षडंशं स्याद्यवद्वयसमायुतम् ॥
तलाग्रविस्तृतं सप्तभागमित्यभिधीयते ॥

19 A omet चैवं — 20 C : अक्षतातलतुङ्गं ; F: अक्षारतलतुङ्गं ; G : कक्षान्तरतलतुङ्गं
21 C : साधं pour सार्धं — 22 A : पाष्ण pour पार्ष्णि ; C : पाष्णी
23 A : तुल्यमध्यषडङ्गुलम् ; C : तुल्यमध्यष्टसालम् ; E : तुल्यमध्यष्टसाङ्गुलम् ; F : तुल्यमध्यमष्टसंगुलम्

[1]द्वियवाधिक[2]वेदांशमङ्गुष्ठायाममुच्यते । [3]यवोपेतद्विमात्रं [4]तदङ्गुष्ठस्य विशालकम् ॥ ३१ ॥
[5]तद्व्यासार्धं [6]नखव्यासं [7]तत्त्रिपादार्धवर्तुलम् । पञ्चत्रिंशद्यवं प्रोक्तं पादे [8]तर्जनिदीर्घकम् ॥ ३२ ॥
[9]मध्यमायास्तु दीर्घं [10]स्यादेकत्रिंशतिकं यवम् । पञ्चविंशतियावं [11]स्यादनामिकायां तु दीर्घकम् ॥३३॥
[12]विंशद्यवं कनिष्ठायां नवसप्तार्ध[13]सप्तषट् । यवव्यासमिति प्रोक्तं देशिन्यादि[14]क्रमाद्विदुः ॥ ३४ ॥
[15]तद्व्यासे तु त्रिपादं [16]स्यादङ्गुलाग्रोदयं विदुः । विस्तारसदृशोत्सेधं [17]नखदेशोदयं विदुः ॥ ३५॥
[18]बाहुमूलविशालं तु नवभागमुदाहृतम्[19] । सार्ध[20] वस्वङ्गुलं प्रोक्तं [21]मध्यं सप्त सपादकम् ॥ ३६ ॥

---

[1] cf. *Aṃśumatkāśyapa* 56, 23b-28:

द्वियवाधिकवेदांशं पादाङ्गुष्ठायतं भवेत् । यवोपेतद्व्यंशं तु तस्य विस्तारमुच्यते ॥
तारार्धं नखविस्तारं पादोनायतवर्तुलम् । त्रियवोपेतवेदांशं तर्जन्यायाममुच्यते ॥
पादोनवेदभागं तु मध्याङ्गुल्यायतं भवेत् । यवोपेताग्निभागं तु अनामिकायाममिष्यते ॥
सार्धपक्षांशमानं तु कनिष्ठाङ्गुलिदीर्घकम् । देशिन्यादिक्रमात्तारं नवसप्तार्धसप्तषट् ॥
यवमानं स्वतारार्धं नखं पूर्वोक्तवद्विदुः । तत्तदङ्गुलिविस्तारं वेदांशं विभजेद्बुधः ॥
त्रिभागमङ्गुलाग्रोच्चं शेषं स्यात्तु नखोदयम् ।

[2] A, B : द्वियमाधिक ; C : द्व्यमाधिक  [3] F : अयोपेत pour यवोपेत

[4] A : तु pour तद्  [5] B omet le *śloka* n° 32  [6] A : नव pour नख

[7] A : तत्त्रिपादाय pour तत्त्रिपादार्ध

[8] La forme grammaticale correcte est तर्जनीदीर्घकम् ; mais le mètre ne serait pas respecté.

[9] A : मध्यमायां तु  [10] B : स्यादुत्सेधं विंशतिर्यवम्

[11] B : स्याद्दीर्घं चानिकास्यके ; C : स्यादनाकाशं तु दीर्घकम् ; G : स्यादनाकायां तु दीर्घकम्  [12] B : विंशत्यावं

[13] B : अष्ट pour अर्ध  [14] B : क्रमं pour क्रमाद्  [15] A : तद्व्यासात्तु ; B, C, G : तद्व्यासं तु

[16] G : स्यादङ्गुलांशोदयं ;

[17] A : तवदेशोनरं विदुः ; C : नखदेशे नरं विदुः ; G : नवदेशे नरं विदुः

[18] cf. *Aṃśumatkāśyapa* 56, 29-32:

त्रियवाधिकवस्वंशं बाहुमध्यविशालकम् । सपादसप्तभागं तु कूर्परव्यासमुच्यते ॥
पादोनरसभागं तु प्रकोष्ठमध्यविस्तरम् । पादोनचतुरंशं तु मणिबन्धविशालकम् ॥
सप्तांशं तु तलायामं सार्धषण्मध्यमाङ्गुलम् । सपादभूतभागं स्यात्त्वनामिकायाममुच्यते ॥
यवाधिकं तु पञ्चांशं तर्जन्यायाममुच्यते । सपादवेदभागं तु कनिष्ठाङ्गुष्ठदैर्घ्यकम् ॥

[19] voir *supra śloka* n° 24b  [20] A : सस्य pour सार्ध

[21] A : मध्यपादं सपादकम् ; B : मयपादं विपादकम् ; C : मध्यपादं स्वपादकम्

[1]कूर्परस्य [2]विशालं स्यात्पादोन[3]रसभागकम्[4]। प्रकोष्ठविस्तृतं[5] प्रोक्तं मध्यमे तु विशेषतः ॥ ३७ ॥
[6]चतुर्दशयवं प्रोक्तं मणिबन्धविशालकम्। सप्तमात्रं [7]तलायामं [8]सार्धषण्मध्यमायतम् ॥ ३८ ॥
चत्वारिंश[9]द्द्वयाधिक्य[10]यवमाना त्वनामिका। [11]तत्समे तु [12]यवोनं स्यात्तर्जन्यायाममुच्यते ॥ ३९ ॥
सपादवेद[13]भागं तु [14]दीर्घोऽङ्गुष्ठकनिष्ठयोः। [15]अङ्गुष्ठ[16]मूलविस्तारं [17]पादाधिकाङ्गुलं भवेत् ॥ ४० ॥
[18]अष्टौ यवास्तु तर्जन्यां [19]नवयावा तु मध्यमा। अनामिकाष्टयावा[20] स्यात्कनिष्ठा व्यासषड्यवा[21]॥४१
[22]तत्तन्मूलं [23]द्विरष्टांशे त्वंशहीनाग्रविस्तरम्। अग्रव्यासे रसांशे तु भूतांशं [24]नखविस्तरम्[25] ॥ ४२ ॥

---

1 A : कोर्परस्य 2 A : विशालस्य pour विशालं स्यात् 3 B, C, G : पादेन pour पादोन
4 A : भागिकम् pour भागकम 5 B : विस्तरं pour विस्तृतं

6 Le *Kāraṇāgama* I 11, 117a donne pour la largeur de *maṇibandha* quatre aṅgula (ou 32 yava), le *Dīpta* 16, 91b donne 3 1/2 aṅgula plus 1 yava (soit 29 yava) l'*Ajita* [36, 87b 3 aṅgula plus 6 yava (soit 30 yava) et l'*Aṃśumatkāśyapa*, 56, 30b, 3 3/4 aṅgula (soit 30 yavas). Mais ici, les lectures de tous les manuscrits utilisés pour cette édition donnent une largeur de 14 yava, ce qui est très probablement une mauvaise leçon. Il vaudrait mieux lire चतुरंशं च पादोनं मणिबन्धविशालकम्.

cf. *Kāraṇāgama* I 11, 117a: मणिबन्धस्य विस्तारं भागमेकं प्रकीर्तितम्।

*ibid* 11, 63a: भागं स्याच्चतुरङ्गुलम् ; cf. *Dīptāgama* I6, 91b: मणिबन्धस्य विस्तारं त्रिमात्रार्धं यवाधिकम्"

cf. *Ajitāgama* 36, 87b: मणिबन्धस्य विस्तारं त्रिमात्रं षडयवाधिकम्"

cf. *Aṃśumatkāśyapa* 56, 30b: पादेनचतुरंशं तु मणिबन्धविशालकम्"

7 A : तिल pour तल 8 A : सार्धं pour सार्ध 9 G : यव pour द्वय
10 B : यवमानमनामिका 11 G : तत्सर्वे तु 12 A : यवा न स्यात् pour यवोनं स्यात् ; C, G : यवानासां
13 A, B : दर्भाङ्गं pour भागं तु 14 A, B : दीर्घाङ्गुष्ठचतुष्टयम्
15 cf. *Aṃśumatkāśyapa* 56, 33-34
अङ्गुष्ठमूलविस्तारं सपादांशमुदाहृतम्। तर्जन्यष्टयवा ख्याता नवसंख्या तु मध्यमा ॥
अनामिका चाष्टयवा सप्तसंख्या कनीयसी। अङ्गुष्ठाद्यङ्गुलीनां तु मूलविस्तारमेव हि ॥

16 B : पाद pour मूल 17 G : पादाधिक्य pour पादाधिक
18 A : अष्टौ यवं तु ; B : अष्टयावं तु ; C : अष्टा यवं तु
19 A : नवयावं तु मध्यमा ; B : मध्यमायां यवा नव ; C : नवा यवं तु मध्यमा
20 A : अनामिकाष्टयावं स्यात् ; B : अनामिक्यामष्टयावा 21 B : कनिष्ठायां तु षडयवाः
22 cf. *Aṃśumatkāśyapa* 56, 35-36:
तत्तन्मूलकलांशोऽशहीनमग्रविशालकम्। अग्रताररसांशे तु पञ्चांशं नखविस्तृतम्।
पार्श्वयोर्मांसलं शेषं वृत्तायतं नखाकृति। सपादं नखतारं तु नखायाममुदाहृतम् ॥
23 A; B : त्रि pour द्वि 24 C : नव pour नख 25 A : विस्तरा pour विस्तरम

पार्श्वयोर्मांसलं[1] शेषं [2]वृत्तायता नखाकृतिः। नखव्यासे तु भूतांशे[3] रसांशं स्यान्नखायतम्॥ ४३॥
[4]नखदीर्घद्वयं [5]चाग्रपर्वायाम[6]मुदाहृतम्। अङ्गुष्ठमूलपर्वस्य[7] [8]दीर्घं [9]सप्तदशं यवम्॥ ४४॥
तर्जन्यास्त्वादिपर्वे[10] [11]चाप्यनाम्न्याश्च [12]द्वियङ्गुलम्। [13]मध्याङ्गुल्यास्तु मूले तु दीघमष्टांशकं यवम्॥४५
[14]कनिष्ठायास्तु मूले तु त्रयोदशयवायतम्। तयोस्तु शेषं [15]सर्वासां मध्यपर्वायतं भवेत्॥ ४६॥
[16]अङ्गुष्ठस्तु द्विपर्वः [17]स्यादन्यास्सर्वास्त्रिपर्वकाः। [18]सार्धपञ्चांशकं [19]हस्ततलाग्रस्य विशालकम्॥४७॥
[20]षडंशं मध्यविस्तारं सार्धषण्मूलविस्तृतम्। तर्जन्यङ्गुष्ठयोर्मूलान्तरं[21] [22]सार्धाग्निमात्रकम्॥ ४८॥
[23]अङ्गुष्ठमूलमारभ्य मणिबन्धावसानकम्। [24]शुकदीर्घं तु [25]वेदांशं [26]द्व्यर्धांशं तु घनं भवेत्॥ ४९॥

---

[1] C, G : मण्डलं pour मांसलं [2] A, G : वृत्तायानं ; C : वृत्ताधारं [3] B : भूतांशं

[4] cf. *Aṃśumatkāśyapa* 56, 37-40a:

नखायामद्वयं चाग्रपर्वदीर्घं प्रशस्यते। अङ्गुष्ठमूलपर्वस्य दीर्घं सप्तदशं यवम्॥
तर्जनीमूलपर्वं तु अनामिकोच्चद्व्याङ्गुलम्। मध्यमामूलपर्वस्य दीर्घमष्टादशा यवाः॥
कनिष्ठमूलपर्वस्य त्रयोदशयवाः स्मृताः। मूलाग्रपर्वयोर्मध्यदीर्घं मध्यस्थपर्वसु॥
अङ्गुष्ठं तु द्विपर्वं स्याच्छेषास्त्रिपर्वसंयुताः।

[5] B : चात्र pour चाग्र [6] A : पर्वयाम pour पर्वायाम ; C : पर्यायाम

[7] La forme grammaticale correcte est पर्वणः [8] A : दीर्घ pour दीर्घं [9] C : सप्तदशांशकम्

[10] Le forme grammaticale correcte est पर्वणि [11] C : चाप्यनाड्याश्च [12] A : द्वयङ्गुलम्

[13] A : मध्याङ्गुलस्य मूलं तु [14] A : कनिष्ठायां तु मूलं तु [15] A, B : सर्वेषां

[16] A : अङ्गुष्ठं तु द्विपर्वं [17] A : स्यादन्याः सर्वत्रिपर्वकम् ; E : स्यादन्याः सर्वे त्रिपर्वकम्

[18] cf. *Aṃśumatkāśyapa* 56, 40b-42a:

सार्धभूताङ्गुलं विप्र तलाग्रविपुलं भवेत्। रसांशं मध्यविस्तारं हस्तस्यैव तलस्य तु॥
तलमूलविशालं तु सार्धषड्भागमुच्यते। अङ्गुष्ठमूलमारभ्य तर्जनीमूलमात्रकम्॥
सार्धं तु द्व्यङ्गुलं प्रोक्तम्॥

[19] A : हस्तं pour हस्त [20] A : विडङ्ग pour षडंशं ; G, G : षडंश

[21] A : मूलान्तं pour मूलान्तरं ; B : मूलात्तं [22] G : स्यादग्नि pour सार्धाग्नि

[23] cf. *Aṃśumatkāśyapa* 56, 42-46a:

शुकोदरमथोच्यते॥
अङ्गुष्ठमूलमारभ्य मणिबन्धावसानकम्। दीर्घं वेदाङ्गुलं प्रोक्तं द्व्यर्धांशं तु घनं भवेत्॥
पार्ष्णिहस्तघनाग्न्यंशमग्रमङ्गुष्ठवत्क्षयम्। अङ्गुलीनामधस्तात्तु द्व्यर्धांशं मांसलं ततः॥
द्विभागं पार्ष्णिहस्तस्थशुकोदरविशालकम्। शेषं मध्यतलं निम्नं भूतवेदाग्नि वा यवम्॥
सूक्ष्मरेखां लिखेत्तस्मिञ्शङ्खं वा चक्रशूलवत्। पद्माभं वा कुशाभं वा तलरेखां प्रकल्पयेत्॥

[24] A : शुक्र pour शुक ; G : शुक्रे [25] A : वेदांश pour वेदांशं ; C : वेदास्य

[26] A : द्व्यर्धांशं घनसंभवेत् ; C, G : शुकोदरविशालकम्

पार्ष्णिहस्तघनाग्न्यंशमग्रमङ्गुष्ठवत्क्षयम्[1] । [2]अङ्गुलीनामधस्तात्तु द्व्यर्धाङ्गुलं च मांसलम् ॥ ५० ॥
[3]द्विभागं पार्ष्णि[4]हस्तस्थशुकोदरविशालकम् । शेषं मध्यतलं[5] निम्नं भूतवेदाग्नि [6]चायतम् ॥ ५१ ॥
सूक्ष्मरेखां [7]लिखेत्तस्मिञ्शङ्खं वा चक्रशूलवत्[8] । [9]पद्माभां [10]वा कुशाभां वा [11]तलरेखां प्रकल्पयेत्[12]॥
[13]भूताङ्गुलं भ्रुवायामं मध्यतारं यवद्वयम् । बालचन्द्राग्र[14]वत्क्षीणं [15]भ्रुवाग्रौ तु नताङ्गुलौ ॥ ५३ ॥

---

[1] A : अग्रमङ्गलवक्षयम् ; B : अग्रमङ्गुलमांसलम्

[2] B omet le demi-*śloka* n° 50b

[3] A : द्विताहं [4] A : हस्तस्य pour हस्तस्थ [5] B, C : तरं pour तलं

[6] A : वोयतम् ; E : माधमम् ; C, G : मायमम् [7] B : लिखेत्तत्र ; G : लिखेदस्मिन्

[8] A : शक्रावशकशूलवत् ; C, G : शाखा वा चक्रशूलवत् [9] G : वक्त्राभं

[10] A : वा कुशोभं वा ; B, G : वा कुशाभं वा [11] G : तलाग्रं वा

[12] Après le *śloka* 52 et avant 53a, il semble qu'il y ait une lacune, les mensurations au dessus des oreilles, tête, front etc. manquent. La méthode de description du *pratimā* dans ce *paṭala* semble le parallèle de la description trouvée dans le *paṭala* 56 de l'*Aṃśumatkāśyapa*. A ce titre nous donnons ci-dessous la partie correspondante de cet *āgama*. cf. *Aṃśumatkāśyapa* 56, 46b-53:

यवाष्टांशनतं निम्नं रेखाणां तु द्विजोत्तम । वृत्ताभेऽपेक्षिताङ्गेषु व्यासे पञ्चविभाजिते ॥
एकांशं तु परिग्राह्यं विस्तारं त्रिगुणान्वितम् । यत्तन्नाहमिति ख्यातं नाहतस्तारकल्पितम् ॥
कर्णोर्ध्वे शिरसो नाहं सार्धत्रिंशाङ्गुलं भवेत् । कर्णोर्ध्वे तु शिरस्तारं यवोनद्वादशाङ्गुलम् ॥
कर्णयोः पूर्वनालान्तं द्वाविंशदङ्गुलं भवेत् । कर्णयोः पृष्ठनाहं तु भान्वङ्गुलमुदाहृतम् ॥
तयोर्मध्यस्थभागं तु कर्णस्थितिरुदाहृतम् । शिरसो मध्यतो मूर्धमण्डलं चतुरङ्गुलम् ॥
तस्मात्तदग्रकेशान्तं नवाङ्गुलमुदाहृतम् । ततो वै मण्डलात्कर्णकेशान्तं च नवाङ्गुलम् ॥
मण्डलात्पृष्ठकेशान्तं सार्धमध्याङ्गुलं भवेत् । ललाटे तु तिरश्चीनं नवाङ्गुलमुदाहृतम् ॥
केशान्तादक्षिसूत्रस्य द्वयोर्मध्ये भ्रुवोः स्थितिः ।

[13] cf. *Aṃśumatkāśyapa* 56, 54-64:

भ्रुवाग्रौ तून्नतौ चैव चापाकारं यथा कुरु । द्व्यन्तरं तु भ्रुवोर्विप्र सार्धवेदयवं भवेत् ॥
पञ्चाङ्गुलं भ्रुवायामं मध्यतारं यवद्वयम् । बालचन्द्राग्रवत्क्षीणं भ्रुवाग्रौ तस्य मध्यमम् ॥
कनीनिकायामविस्तारं यवमानमुदाहृतम् । कृष्णमण्डलविस्तारं चोत्सेधं षडयवं भवेत् ॥
सितांशं तत्समव्यासं कृष्णमण्डलपार्श्वयोः । शफराकृतिकं वापि धनुराकृतिमेव वा ॥
अर्धचन्द्राकृतिं वाथ नेत्राकारं प्रकल्पयेत् । तदाकारानुकूलोच्चं सितमण्डलयोर्द्विज ॥
नेत्रान्तेऽर्धयवं रक्तं मण्डलं तु सितांशके । कृष्णमण्डलमध्ये तु ज्योतिर्मण्डलकं यवम् ॥
तदष्टांशैकभागं तु तन्मध्ये दृष्टिमण्डलम् । सार्धांशयवमानं तु ऊर्ध्ववर्मततं भवेत् ॥
अधोवर्म च तत्तुल्यं दीर्घमष्टादशं यवम् । नेत्रयोरन्तरं विप्र सपादद्व्यङ्गुलं भवेत् ॥
ऊर्ध्ववर्मभ्रुवोरन्तः सार्धषट्कयवं भवेत् । अधोवर्मस्थितिर्विप्र नेत्रसूत्रे विधीयते ॥
कर्तृनाशमधोदृष्टिरूर्ध्वदृष्टिर्विपत्करी । बन्धुनाशो भवेत्पार्श्वदृष्टिश्चेद्ग्रामवासिनाम् ॥
तस्मात्सर्वप्रयत्नेन सममेव निरीक्षणम् । नेत्रमेवं समाख्यातम् "

[14] A, B : अर्क pour अग्र [15] A, B : भ्रुवाग्रौ तु हुताङ्गुलम् ; C : भ्रुवाग्रौ हुनताङ्गुलम् ; G : भ्रुवाग्रौ तु तनाङ्गुलम्

[1]यवं कनीनिकायामं विस्तारं चैव तत्समम् । [2]असितमण्डलव्यासमुत्सेधं चापि [3]षड्यवम् ॥ ५४ ॥
अर्धचन्द्राकृतिं कुर्यान्नेत्राकारं[4] विशेषतः । नेत्रान्ते द्वियवं रक्तं [5]मण्डलं तु सितांशके[6] ॥ ५५ ॥
[7]कृष्णमण्डलमध्ये तु ज्योतिर्मण्डलकं [8]यवम् । [9]ज्योतिर्मण्डलकाष्टांशं [10]मध्ये तु दृष्टिमण्डलम् ॥
[11]अत्यर्धयवमानं[12] तु [13]ह्यूर्ध्ववर्मविशालकम् । अधोवर्मं च तत्तुल्यं दीर्घमष्टादशा यवाः ॥ ५७ ॥
नेत्रयोरन्तरं चैव ह्यष्टादशयवं भवेत् । ऊर्ध्ववर्मभ्रुवोरन्तः[14] सार्धषड्यवमुच्यते ॥ ५८ ॥
[15]अधोवर्मस्थितिं[16] [17]विद्यान्नेत्रसूत्रे विशेषतः । [18]समदृष्टिस्तु कर्तव्या[19] चान्यथा तु न कारयेत् ॥ ५९
[20]अधोर्ध्वपार्श्वयोर्दृष्टिः कर्तृनाशविपत्करी । बन्धुनाशस्तथा[21] ग्रामनाशः स्यात्तु यथाक्रमम् ॥ ६० ॥
[22]नासिकापुट[23]बाह्यं तु तारं स्यात्तु यथाक्रमम् । [24]यवं मध्यविशालं तु वेशमूलं तदर्धकम् ॥ ६१ ॥
[25]गोजीमूलात्तु [26]नासाग्रतुङ्गः स्यात्तु [27]कला यवाः । [28]तदूर्ध्वे नासिकाग्रस्य तारं नव यवास्तथा ॥ ६२
[29]नासिकायाः [30]पुटे [31]निम्न[32]सन्धिर्व्योमयवं भवेत् । द्वारयोर्वसतौ[33] तिर्यक् [34]प्रतिसंध्योर्ऋषिर्यवम् ॥ ६३

[1] A : यवके निनिकायामविस्तारं ; B : यवके तिनिकायामविस्तारं ; G : यवकेन निकायामं विस्तारं
[2] A, B : असितं मण्डपव्यासम् ; C : असितं मण्टपव्यासम्  [3] B : षड्द्वयम्
[4] B : आकार pour आकारं  [5] G : मण्डलौ  [6] B, C : सितांशकम्
[7] B : कृष्णं pour कृष्ण  [8] C : वयम्  [9] A : ज्योतिर्मण्डलकोऽष्टांशं
[10] B : मध्यमे pour मध्ये तु
[11] A : अत्यर्धं pour अत्यर्ध ; B : अत्यर्थं ; C : अर्धर्धं  [12] C : यमसानं pour यवमानं ; G : यमसाने
[13] A : ऊर्ध्वं pour ह्यूर्ध्वं  [14] A, B : भवोरक्तं ; C, G : भुवो रक्तं  [15] C : अथो pour अधो
[16] B, C, G : स्थितिः pour स्थितिं  [17] G : गम्या नेत्रं pour विद्यान्नेत्र  [18] G : समुद्रतस्तु
[19] A, G : कर्तव्यं
[20] La forme grammaticale correcte est अध ऊर्ध्वपार्श्वयोर्दृष्टिः ; mais le mètre ne serait pas respecté.
[21] A : दशा pour तथा
[22] cf. *Aṃśumatkāśyapa* 56, 65-69:
नासिकापुटबाह्ये तु तारमष्टादशं यवम् । तदर्धं मध्यविस्तारं तस्यार्धं मूलविस्तृतम् ॥
द्वारस्यान्तर्गतं व्यासं सार्धसप्तयवं भवेत् । पुटतारं पञ्चयवं पुटं निष्पावबीजवत् ॥
तिलपुष्पवदाकारं नासिकाकारमेव हि । एकांशं नासिकोत्सेधं तद्घनं तु यवं भवेत् ॥
पुटयोर्मध्यभित्तिस्तु पुष्करं चेति कथ्यते । सार्धवेदयवं गोजीदीर्घं तस्यार्धविस्तृतम् ॥
ऊर्ध्वोष्ठस्योर्ध्वनिम्नं तु गोजिनाम्ना प्रकीर्तितम् । यवमानननतं गोजि तदूर्ध्वे नासिकास्थितिः ॥
[23] A, B : अम्बुद pour पुट ; C : अर्बुद  [24] A : यव pour यवं
[25] B : गोजीमूलं तु ; C : गोजिमूलं तु  [26] B : नासाग्रं तुङ्गं ; C : नासाग्रं तुङ्गः  [27] C : कलां यवाः
[28] E, G : ततोर्ध्वे  [29] A : रसासिकायाः  [30] A : पुण्ट्रे pour पुटे ; C, G : स्फुटे
[31] C : नित्यं pour निम्न  [32] A, C : सांध्री pour सन्धि ; B : सान्ध्री
[33] A : वसतं pour वसतौ ; B : वसतिं  [34] A, B : प्रतिसान्ध्रि pour प्रतिसंध्योः

तदुच्चं [1]भूतयावं स्यात्पुटं[2] निष्पावबीजवत् । मूर्तियवं पुष्करोच्चं पुष्करस्य घनं यवम् ॥ ६४ ॥
[3]अर्धद्वियवमानं तु [4]पुटनासाग्रनिर्गतिः । [5]सार्धवेदयवं गोजीदीर्घं तस्यार्धविस्तृतम्[6] ॥ ६५ ॥
नतं स्याद्यवमात्रं तु [7]ह्यधस्तात्पुष्करस्य तु । [8]चतुस्त्रिंशद्यवायाममास्यस्य तु विशेषतः ॥ ६६ ॥
उत्तरोष्ठायतं [9]चास्य[10]दीर्घतुल्यमुदाहृतम् । उत्तरोष्ठस्य मध्ये तु [11]तारं सार्धयवत्रिकम्[12] ॥ ६७ ॥
[13]आनुपूर्व्या कृशं तारमास्यसीमावसानकम् । [14]ऊर्ध्वोपरि च पाल्यास्तु घनं [15]व्योमयवं भवेत् ॥६८॥
[16]त्रिवक्रोपनता पाली [17]तदोष्ठ[18]सदृशायता । अधरोष्ठायतं[19] विद्यादष्टादश यवाः स्मृताः ॥ ६९ ॥
तस्य [20]मध्यविशालं तु सयवैकाङ्गुलं भवेत् । [21]चिबुकात्तु[22] हनोर्वेशं [23]सार्धयावं शिवाङ्गुलम् ॥ ७० ॥

---

[1] A : कृत pour भूत ; B : कृत [2] A, B : स्फुटं pour पुटं

[3] A : अर्धद्वयं च मानं तु [4] A : पुटं pour पुट [5] A : सार्धं pour सार्ध

[6] Le manuscrit B omet la portion entre le premier *pāda* du *śloka* 65b et le second *pāda* du *śloka* 67a et lit: सार्धवेदयवं गोजीदीर्घं तुल्यमुदाहृतम् [7] A : अधः स्यात् pour ह्यधस्तात्

[8] cf. *Aṃśumatkāśyapa* 56, 70–75a:

सपादचतुरंशं तु आस्यदीर्घं तिर्यग्विदुः । उत्तरोष्ठायतं चास्यदीर्घतुल्यमुदाहृतम् ॥
उत्तरोष्ठस्य मध्ये तु तारं सार्धत्रयं यवम् । आनुपूर्व्या कृशं तारमास्यसीमावसानकम् ॥
यवमानघना पाली उत्तरोष्ठस्य चोपरि । त्रिवक्रा चोत्तरा पाली तदोष्ठसदृशायता ॥
अष्टादशयवाः प्रोक्ता अधरोष्ठस्य दीर्घकम् । यवाधिकाङ्गुलं तस्य विस्तारं द्विजसत्तम ॥
अधरपालिकासार्धयवमानमथोच्यते । चिबुकादधरोच्चं तु सार्धषड्यवमुच्यते ॥
किंचित्प्रहसिताकारमास्यं युक्त्या तु कारयेत् ॥

[9] B : चास्यं pour चास्य [10] A : दीर्घं pour दीर्घ [11] G : ताराः सार्धं

[12] C, G : त्रयम् pour त्रिकम् [13] B : अनुपूर्वात् क्रमं तारं

[14] B : ऊर्ध्वोपरि वयेत्यं तु ; C : ऊर्ध्वे च परिपालस्तु ; E : ऊर्ध्वे च परिपाल्यस्तु ; G : ऊर्ध्वोपरि वल्यास्तु

[15] A : व्योममयं ; G : सोममयीं [16] A : त्रिवक्त्रा घनता पालि ; B : त्रिवक्त्रघनता वालि

[17] A : ततोष्ठ pour तदोष्ठ ; B : तथाष्ट ; C : ततेषु ; G : तत्तेषु [18] G : सदृशायते pour सदृशायता

[19] A : अधरोष्ठधरं ; C, G : अधरोष्ठतरं [20] C : मध्ये pour मध्य

[21] cf. *Aṃśumatkāśyapa* 56, 75b-78a:

अधराच्चिबुकालम्बं सार्धपक्षाङ्गुलं भवेत् । चिबुकात्तु हनोर्वेशं सार्धष्ट्यवमुच्यते ॥
सार्धद्वयङ्गुलकं तस्य तारमायतवृत्तवत् । हनोः संध्याः कर्णबन्धान्तं त्वन्तरं द्वादशाङ्गुलम् ॥
हनोर्बाह्यं समारभ्य पादोनयुगमात्रकम् । कर्णवेशमिति ख्यातम्"

[22] A : चिबुकं तु ; B, C : चिबुकां तु ; C : विप्रकान्तु [23] C : सार्धं यावं

[1]अत्यर्धगुणमात्रं तु [2]तारमायतवृत्तवत् । कर्णबन्धाद्धनोःसंधेरन्तरं[3] तु दशाङ्गुलम् ॥ ७१ ॥
[4]हनोर्बाह्यं[5] समारभ्य [6]कर्णे द्वाविंशतिर्यवाः[7] । [8]अक्ष्यन्ताच्छ्रोत्रबन्धान्तं[9] सप्तभागमुदाहृतम् ॥
[10]अष्टादशयवं प्रोक्तं श्रोत्रस्य तु विशालकम् । नेत्रसूत्रोपरि श्रोत्रतुङ्गश्चाष्टादशा यवाः[11] ॥ ७३ ॥
[12]ऊर्ध्वबन्धात्तु तस्यार्धं [13]मध्यं वृत्तं तु मूर्धतः । नेत्रसूत्रादधः [14]कर्णबन्धं स्यादङ्गुलद्वयम् ॥ ७४ ॥
[15]सयवं [16]सार्धवेदांशं [17]नालस्योल्लङ्घनं भवेत् । पूर्व[18]नालविशालांशं सार्धमात्रापरं[19] विदुः ॥ ७५ ॥
तयोरर्धाङ्गुलं नीव्रं त्रिपादं [20]नालकान्तरम् । नालान्तरायतं ख्यातं [21]चतुर्मात्रं स्तरो विदुः ॥ ७६ ॥
[22]श्रोत्रोदयमशेषं[23] तु [24]यवहीनं [25]नवाङ्गुलम् । पिप्पलीघनमर्धांशं[26] द्विगुणं [27]हि तदायतम् ॥ ७७ ॥

---

1 B. अत्यर्धगुण ; C : अध्यर्धगुण ; G : आस्यत्रिगुण  2 A : ताल pour तार
3 B : उदरं pour अन्तरं  4 C et F omettent le *śloka* n° 72
5 A : अनोबाह्यं ; B : अन्नबाह्यं  6 A : कर्ण pour कर्णे  7 A : यवम् pour यवाः
8 cf. *Aṃśumatkāśyapa* 56, 78-80:

"ततः कर्णं वदामि ते
नेत्रान्तात्कर्णबाह्यान्तं द्व्यन्तरं सप्तमात्रकम् । कर्णस्य तु विशालं तु अष्टादश यवाः स्मृताः ॥
अक्षिसूत्रोर्ध्वतः कर्णतुङ्गं चाष्टादशं यवम् । तदर्धं चोर्ध्वबन्धात्तु शेषं वृत्तं तु मूर्धतः ॥
नेत्रसूत्रादधः कर्णबन्धं सप्तदशा यवाः ।

9 B : अक्षन्त्याच्छोत्रबन्धान्तं ; G : पक्ष्मान्ताच्छोत्रबन्धान्तं
10 C omet les *śloka* n° 73 et 74
11 A : अष्ट यवाथवा pour अष्टादशा यवाः ; B : अष्ट यवायतम् ; G : अष्टादशं यवम्
12 A : ऊर्ध्ववर्धं तु ; B : ऊर्ध्वादर्धं तु ; E, G : ऊर्ध्वबन्धं तु
13 A : अर्धं विविधमूर्ध्वतः ; B : मध्यं विविधमूर्ध्नतः ; G ; मध्यमं विप्रमूर्ध्वतः
14 E, G : कण्ठ pour कर्ण
15 cf. *Aṃśumatkāśyapa* 56, 81-82:

सार्धवेदाङ्गुलं तस्मात्तस्य नालं प्रलम्बयेत् । पूर्वनालततं व्योमभागं सार्धांशकं परम् ॥
नालयोर्व्यासमाख्यातं घनमर्धाङ्गुलं तयोः । नालान्तरं त्रिपादं च वेदांशं विस्तृतायतम् ॥

16 C : सर्व pour सार्ध  17 A : नालस्यालङ्घनं भवेत्  18 B : नाडी pour नाल
19 A : सार्धमत्रापरे ; B : सार्धमत्रापरो  20 A : नालयोत्तरम्
21 C : छत्र pour चतुर् ; E : चित्र
22 cf. *Aṃśumatkāśyapa* 56, 83-87a:

कर्णतुङ्गमशेषं तु यवैकोननवाङ्गुलम् । पिप्पलीघनमर्धांशं द्विगुणं हि तदायतम् ॥
उत्सेधं सार्धमात्रं स्यान्मूलादग्रं क्षयानुगम् । द्विभागं पिञ्चुलीदीर्घं द्वियवार्धांशविस्तृतम् ॥
अक्षसूत्रादधः कर्णद्वारमर्धाङ्गुलं भवेत् । कर्णद्वारततं निम्नं सममेव हि वर्तुलम् ॥
कर्णपालीघनं सार्धयवं नीव्रं चतुर्यवम् । पृष्ठकर्णस्य विस्तारमध्यर्धाङ्गुलमुदाहृतम् ॥
केशान्तात्पृष्ठकर्णात्तु द्व्यन्तराध्यर्धमात्रकम् ॥

23 A : स्तोत्रोदयमशेषं ; B : स्तोत्रादयमशेषं  24 G : नव pour यव  25 B : यव pour नव
A : अर्धांश pour अर्धांशं  27 A : हितदायकम् ; G : हीनं तदायतम्

[1]तुङ्गं चतुर्यवं [2]ख्यातं मूलादग्रं क्रमात्कृशम्[3]। [4]पिञ्चूषीदीर्घमक्षांशमध्यर्धांशविशालकम् ॥ ७८ ॥
[5]नेत्रसूत्रादधः कर्णद्वारमर्धाङ्गुलं भवेत्। तत्तुल्यं निम्नमाख्यातं [6]समवृत्तं प्रकल्पयेत् ॥ ७९ ॥
[7]कर्णपालीघनं सार्धं [8]यवं नीव्रं चतुर्यवम्। [9]पृष्ठकर्णस्य[10] [11]विस्तारमध्यर्धाङ्गुलमुच्यते ॥ ८० ॥
[12]केशान्तात्पृष्ठकर्णात्तु[13] ह्यन्तरं सार्धमात्रकम्। [14]पृष्ठ[15]केशावसाने तु [16]कृकाटयर्धांशकोन्नता ॥८१॥
[17]तदधः पृष्ठग्रीवोच्चं [18]युगांशं च यवत्रयम्। सवेदयवधर्मांशं [19]ग्रीवामूलविशालकम् ॥ ८२ ॥
अग्रव्यासं प्रवेशांशं मूलादग्रं क्रमात्कृशम्। [20]हिक्कोर्ध्वे स्कन्धसन्ध्युच्चं[21] युगाङ्गुलमुदाहृतम् ॥ ८३ ॥
कर्णबन्धादधस्तात्तु [22]सार्धमृत्वङ्गुलं भवेत्। स्कन्धसन्ध्यास्तु [23] सीमास्यात्सप्ताङ्गुलघनं भवेत् ॥८४॥
[24]हिक्कान्तं स्कन्धसन्ध्यग्रान्क्रमेण कृशतां नयेत्। दशाङ्गुलं [25]ककुन्मानं [26]पृष्ठग्रीवादधो बुधः ॥८५॥

---

[1] A : तुङ्गः pour तुङ्गं [2] B : यातं pour ख्यातं [3] C : कुशः pour कृशम्

[4] B : पिञ्चुली pour पिञ्चूषी ; C : पञ्चर्षी ; G : पञ्चषड्
[5] A : नेत्रसूत्रादयः ; C : नेत्रसूत्रनयं

[6] E : सयवृत्तं [7] C, G : कण्ठ pour कर्ण [8] A : यवनीत्रं च तद्यवम्

[9] A : घृष्ट pour पृष्ठ ; B : धृष्ट [10] E, G : कण्ठस्य pour कर्णस्य

[11] A, B : विस्तारं मध्यस्याङ्गुलमुच्यते

[12] B: केशान्तान् pour केशान्तात् [13] C, G : कण्ठात्तु pour कर्णात्तु

[14] cf. *Aṃśumatkāśyapa* 56, 87b-89:

पृष्ठकेशावसाने तु कृकाटयर्धांशमुन्नतम्। तस्याधः पृष्ठग्रीवोच्चं युगांशं त्रियवाधिकम् ॥
कृकाटिकादधः पृष्ठग्रीवाग्रं तु नवाङ्गुलम्। पृष्ठग्रीवस्य मूलस्य तारं सार्धदशाङ्गुलम् ॥
मूलादग्रं क्रमात्क्षीणं ग्रीवं वृत्ताभमुच्यते।

[15] A : पृष्ठ pour पृष्ठ [16] A, B : कृतावधांशकं नवम् [17] A : तदसो परवो घच्चं ; G : तदधो परयोरुच्चं

[18] A, B : युगांशं यवमात्रकम् [19] A : ग्रीव pour ग्रीवा ; E : श्रीमन्

[20] cf. *Aṃśumatkāśyapa* 56, 90-91:

हिक्कासूत्रोपरि स्कन्धसंधितुङ्गं युगाङ्गुलम्। कर्णबन्धादधः सार्धं षण्मात्रं स्कन्धसीमकम् ॥
सप्ताङ्गुलघनं स्कन्धं हिक्कावधिक्रमात्क्षयम्। पृष्ठग्रीवादधस्तात्तु ककुन्मानं दशाङ्गुलम् ॥

[21] A : सन्धच्यें pour सन्ध्युच्चं ; B : सधच्यां ; C : सज्यश्च ; E : सन्ध्यश्च

[22] B, E, G : सार्ध pour सार्धम् [23] B : सन्धिस्तु pour सन्ध्यास्तु

[24] A : हिक्कान्तात् pour हिक्कान्तं ; C, G : हिक्कान्तान्

[25] A : तु तन्मानं ; C : ककुमानं ; G : कण्ठमानं [26] A : प्रति pour पृष्ठ

[1]तस्मादाकटिसन्ध्यन्तं[2] [3]वंशमृक्षांशमायतम् । [4]वंशस्य नतविस्तारमर्धमक्षाङ्गुलं भवेत् ॥ ८६ ॥
[5]तदधो वंशमूलं तु वह्न्यङ्गुलमुदाहृतम् । अष्टाविंशतिमात्रं तु कक्षान्तरविशालकम् ॥ ८७ ॥
[6]तदधस्त्वंसफलकं सप्ताङ्गुलमुदाहृतम् । [7]तदुच्चमुपरिष्टाच्च सप्तांशं बाहुसीमकम्[8] ॥ ८८ ॥
[9]सप्तदशाङ्गुलं प्रोक्तं [10]मध्यकायविशालकम् । एकविंशतिमात्रं स्यान्नाभिसूत्रस्य मानकम्[11] ॥ ८९ ॥
कटिसन्धौ[12] तु विस्तारमेकोनविंशदङ्गुलम् । स्फिक्पिण्डं प्रति विस्तारं दशमात्रमुदाहृतम् ॥ ९० ॥
[13]तौ सुवृत्तौ प्रकर्तव्यौ [14]चतुर्यवं तदन्तरम् । कक्षाग्रे तु विशालं तु[15] सप्तभागमिति स्मृतम् ॥ ९१ ॥
[16]सार्धभागं तु विस्तारं [17]स्तनसूत्रे तु विस्तृतम् । सार्धद्वादशमात्रं तु मध्यपार्श्वविशालकम् ॥ ९२ ॥
[18]श्रोण्यास्तु मध्यविस्तारं सार्धसप्ताङ्गुलं भवेत् । ऊरो तत्रैव श्रोण्युच्चं सप्तभागमुदाहृतम् ॥ ९३ ॥

---

[1] cf. *Aṃśumatkāśyapa* 56, 92-95a:
तस्मादाकटिसंध्यन्तं वंशमृक्षांशमायतम् । तद्वंशनतविस्तारं सार्धषोडशकं यवम् ॥
वंशमानादधस्तात्तु वंशमूलं गुणाङ्गुलम् । अपरे तुङ्गमेवं स्यात्तस्मिन्व्यासं वदामि ते ॥
सार्धऋक्षाङ्गुलं प्रोक्तं कक्षयोरन्तरं द्विज । कक्षाधस्त्वंसफलकातुङ्गं सप्ताङ्गुलं भवेत् ॥
कक्षोर्ध्वे बाहुसीमान्तं सप्ताङ्गुलमुदाहृतम् ।

[2] A, B : तस्मात्कृतकसन्ध्यन्तं ; G : तस्मात्तु करसन्ध्यन्तं

[3] A : वंशमाक्षान्तमायतम् ; G : वंशमक्षान्तमायतम्

[4] C : वंशस्यानत pour वंशस्य नत [5] B : तदर्धं pour तदधो

[6] A : तदयस्त्वंशपंकोच्चं ; B : तदधस्त्वंशपङ्कोच्चं [7] A : तमुच्चम् pour तदुच्चम्

[8] C, G : सीमगम् pour सीमकम्

[9] cf. *Aṃśumatkāśyapa* 56, 95b-99:
सार्धषोडशमात्रं तु मध्यव्यासमुदाहृतम् । नाभिसूत्रे तु विस्तारं सार्धविंशाङ्गुलं भवेत् ॥
कटिसंधौ तु विस्तारं त्रिषडंशमुदाहृतम् । पादोनधर्मभागं तु स्फिक्पिण्डं प्रति विस्तृतम् ॥
सुवृत्तौ तौ समाख्यातौ तयोर्मध्ये चतुर्यवम् । अपरे तारमेवोक्तं पार्श्वव्यासमथोच्यते ॥
कक्षस्याग्रविशालं तु सप्तमात्रमुदाहृतम् । सपादषोडशमात्रं स्यात्स्तनसूत्रे तु विस्तृतम् ॥
सवेदद्वादशांशं तु मध्यपार्श्वघनं भवेत् ।

[10] G : अर्धं pour मध्य [11] A : सूत्रकमेतकम् pour सूत्रस्य मानकम् ; B : सूत्रस्य मेतकम्

[12] C : बन्धौ pour सन्धौ [13] A : तो सुवृत्ते ; C : ते तु वृत्ते ; E : ते सुवृत्तौ

[14] C : चतुर्थांशं ततोन्नतः ; E : चतुर्थांशं तथोन्नतम् ; G : चतुर्यवं तथोन्नतम् [15] B : च pour तु

[16] Une meilleure lecture semble être : सार्धषोडशमात्रं तु [17] A, B : स्तनसूत्रेऽतिविस्तृतम्

[18] cf. *Aṃśumatkāśyapa* 56, 100-103:
श्रोणीमध्यघनं पार्श्वे सप्तदशाङ्गुलं भवेत् । ततः श्रोण्युदयं विप्र सप्तमात्रमुदाहृतम् ।
नाभिसूत्रादधश्चोर्ध्वे चतुर्थं त्र्यङ्गुलं हि तत् । श्रोण्यधस्तात्कटेरुच्चं सार्धभूताङ्गुलं भवेत् ॥
तत्कटेस्तु घनं धीमान्सार्धभान्वङ्गुलं भवेत् । स्फिक्पिण्डं चोरुमूलात्तु नीत्रं सार्धयुगाङ्गुलम् ॥
तत्पिण्डालम्बनं चार्धसूत्रादधो युगाङ्गुलम् । कक्षाग्राधरनिम्नं तु सार्धद्व्यङ्गजकं भवेत् ॥

मान्वंशं [1]श्रोणिविस्तारं नाभिसूत्रादधोर्ध्वकम्[2] । कटेरुच्चं तु [3]श्रोण्याधः षण्मात्रं पादहीनकम् ॥९४॥
तत्कटेस्तु घनं तत्र [4]सार्धमान्वङ्गुलं भवेत् । स्फिक्पिण्डं चोरुमूलात्तु[5] नीव्रं भूतांशमङ्गुलम्[6] ॥ ९५॥
[7]स्फिक्पिण्डालम्बनं [8]चार्धसूत्राधो वेदमात्रकम् । [9]कक्षाग्राधरनिम्नं तु पादहीनाग्निमात्रकम् ॥ ९६ ॥
[10]सुवृत्तं[11] ग्रीवमाख्यातं[12] रेखाद्विपरिवेष्टितम्[13] । [14]कण्ठमूले [15]पुरो [16]निम्नतारोच्चं च चतुर्यवम् ॥९७॥
[17]हिक्कायास्त्वक्षमात्रं तु [18]जत्रुसूत्रमुदाहृतम् । हिक्कामध्यात्तु कक्षान्तं द्वादशाङ्गुलमिष्यते ॥ ९८ ॥
[19]हिक्कायाः स्तनसूत्रान्तं स्तनयोरन्तरं समम् । हृदयस्तनयोरन्तर्निम्नं भानुयवं भवेत् ॥ ९९ ॥
[20]कण्ठ[21]मूले च[22] निम्नं तु चतुर्यवमुदाहृतम् । अध्यर्धायामकं [23]तिर्यक् कल्पयेत्त [24]त्रिपुण्ड्वत्॥१००
[25]कण्ठमूले नतं हिक्कासूत्राधस्तात्प्रकल्पयेत् । हिक्कासूत्रोपरिष्टात्तु नीलपुण्ड्रं प्रकल्पयेत्[26] ॥१०१॥

---

[1] A : स्तोत्र pour श्रोणि

[2] La forme grammaticale correcte est अध ऊर्ध्वकम्

[3] La forme grammaticale correcte est श्रोण्या अधः ou श्रोण्यधः

[4] A : सार्धं भान्वङ्गुलं ; B : सार्धतन्त्वङ्गुलं [5] A, B : मूलं तु pour मूलात्तु

[6] A : अङ्घ्रिभा pour अङ्गुलम् B : अङ्घ्रिमा ; C : अप्रभा [7] B : स्फिक्पिण्डलम्बनं

[8] A : चार्धं सूत्रतो चेतमात्रकम् ; B, C : चार्धं सूत्राधो चेतमात्रकम्

[9] A : कक्षाप्रधर pour कक्षाग्राधर ; B : कक्षाग्रेधार

[10] cf. *Aṃśumatkāśyapa* 56, 104-106:

ग्रीवासुवृत्तनाहे तु रेखाद्विपरिवेष्टितम् । कर्ण[कण्ठ?] मूले नतं तारं तुङ्गं चैव चतुर्यवम् ॥
हिक्कायास्त्वक्षमात्रं तु जत्रुसूत्रमुदाहृतम् । हिक्कामध्यात्तु कक्षान्तं भान्वंशात्पादहीनकम् ॥
हिक्कादास्तनसूत्रान्तं स्तनान्तरसमं भवेत् । हृदयस्तनयोर्मध्ये निम्नमध्यर्धमात्रकम् ॥

[11] C : सुव्रतं ; G : सवृतं [12] A : आख्याग्रे pour आख्यातं

[13] A, B : रेखाग्रौ परिवेष्टितौ ; C, G : रेखा द्वौ परिवेष्टितम् [14] A, B : कर्ण pour कण्ठ

[15] A : पुरे pour पुरो [16] A : निम्नो तारोच्चं ; B : निम्न तरोच्चं ; C : निम्ने तारोपं

[17] Le ms B omet la portion entre le premier *pāda* du *śloka* 98a et le second *pāda* du *śloka* 98b et lit : हिक्कायास्त्वक्षमात्रं तु द्वादशाङ्गुलमिष्यते

[18] A : जर pour जत्रु [19] A : हिक्काधनसूत्रान्तं ; B : हिक्का तु घनसूत्रान्तं

[20] cf. *Aṃśumatkāśyapa* 56, 107-108:

नीलं [निम्नं?] वै कण्ठमूले तु यवत्रयमुदाहृतम् । अध्यर्धायामसंयुक्तं कल्पयेत्तु त्रिपुण्ड्रवत् ॥
कण्ठमूले नतं हिक्कासूत्राधस्तात्प्रकल्पयेत् । हिक्कासूत्रोपरिष्टात्तु नीलवर्णं प्रकल्पयेत् ॥

[21] A, B : कर्ण pour कण्ठ [22] B : तु pour च [23] A, B : तिर्य्यं ; C, G : नित्यं

[24] A, B : त्रिपुण्ड्रकम् [25] A et B omettent कण्ठ

[26] L'*Aṃśumatkāśyapa* qui donne des mensurations à peu près identiques ajoute après ce *śloka* un *śloka* et demi décrivant les seins (stana) dont la description manque ici.
cf. *Aṃśumatkāśyapa* 56, 109-110a:

हृदयस्तनपीठोच्चं द्व्यङ्गुलं समुदाहृतम् । सप्तदशयवं ख्यातं स्तनमण्डलविस्तृतम् ॥
तन्मध्ये चुचुकोच्चं तु व्यासं चैव यवद्वयम् ।

[1]नाभेर्निम्नं च[2] विस्तारं समं रुद्रयवं भवेत् । नाभिर्वै दक्षिणावर्तो मूलव्यासं यवद्वयम् ॥ १०२ ॥
नाभेरवटमध्यस्थं नाभिसूत्रं गुरो विदुः । [3]श्रोण्युच्चं नाभ्यधस्तात्तु सार्धभूताङ्गुलं भवेत् ॥ १०३ ॥
तदधस्तात्कटिः श्रोणी[4] [5]सार्धवह्नयङ्गुलं भवेत् । [6]तस्मादुदरं मेढ्रं च मेढ्रपीठं युगाङ्गुलम् ॥ १०४ ॥
यवद्वयसमायुक्तं भूतांशं लिङ्गदीर्घकम् । [7]सपादाक्षाङ्गुलं लिङ्गमूलव्यासमुदाहृतम् ॥ १०५ ॥
[8]लिङ्गायाम[9]त्रिभागैकमग्रपर्वायतं भवेत् । अग्रपर्वस्य[10] [11]मूलं तु [12]विंशतियवविस्तृतम् ॥ १०६ ॥
मूलादग्रं क्रमात्क्षीणमुत्पल[13]मुकुलोपमम् । [14]मुष्कायामविशालं च [15]सार्धवेदाङ्गुलं भवेत् ॥ १०७ ॥
घनमग्न्यङ्गुलं प्रोक्तं [16]मूलात्तरुर्विवर्धिता । [17]मेढ्रपीठस्य मूलस्य व्यासं सप्तार्धमात्रकम् ॥ १०८ ॥
[18]लिङ्गमूलस्य[19] पीठान्तमूरुमूलस्य मांसलम् । जानुमण्डलविस्तारं सपादचतुरङ्गुलम् ॥ १०९ ॥

---

[1] cf. *Aṃśumatkāśyapa* 56, 110b-114a:

नाभेस्तु नतविस्तारं व्योमांशं द्वियवाधिकम् । तन्नाभि दक्षिणावर्तं मूलतारं यवद्वयम् ॥
तन्नाभ्यवटमध्यस्थं नाभिसूत्रं द्विजोत्तम । नाभेरधस्तात्पादोनं श्रोण्युच्चं पञ्चमात्रकम् ॥
तदधस्तात्कटिः श्रोणी सार्धत्र्यङ्गुलकं भवेत् । तस्मादामेढ्रमूलान्तं मेढ्रपीठं युगाङ्गुलम् ॥
सपादपञ्चमात्रं तु लिङ्गदीर्घमुदाहृतम् । लिङ्गमूलविशालं तु सप्तदश यवाः स्मृताः ॥

[2] B : निम्नस्य pour निम्नं च  [3] A : श्रोण्युच्चयोभ्यधस्तात्तु ; B : श्रोण्युच्चयोरधस्तात्तु

[4] A : कटिश्रोणी pour कटिः श्रोणी

[5] A : साध्यवन्यङ्गलं ; B : सार्धवन्ध्यङ्गुलं ; C : सार्धवद्यङ्गुलं ; G : सार्धद्वयङ्गुलं

[6] A : तरस्मादुदरं मेढं ; B : तस्योदरं......मेढं ; C : तरस्मादरमेढं च ; G : तस्मादरमेढं तु ; *Aṃśumatkāśyapa*: तस्मादामेढ्रमूलान्तं मेढ्रपीठं युगाङ्गुलम्

[7] C : सपद pour सपाद

[8] cf. *Aṃśumatkāśyapa* 56, 114b-117a:

लिङ्गायामत्रिभागैकमग्रगण्या[कं तदग्रस्या?] यतं भवेत् । तदग्रग्रन्थिमूलं तु यवमानं बृहत्तरम् ॥
रक्तोत्पलस्य मुकुलाकारं लिङ्गाग्रमुच्यते । मुष्कायामं विशालं च सार्धवेदाङ्गुलं भवेत् ॥
घनं सार्धगुणांशं तु तन्मूलोत्थोरुवर्धनम् । मेढ्रपीठस्य मूलस्य व्यासं सप्तार्धमात्रकम् ॥

[9] A : लिङ्गायामं pour लिङ्गायाम  [10] La forme grammaticale correcte est अग्रपर्वणः

[11] C : मूल्यस्य ; G : मूलस्य  [12] A : विंशतिर्यव pour विंशतियव

[13] A : उत्पले pour उत्पल ; B : उत्पलो  [14] A : मुषकायां विशालं च  [15] B : सार्धं pour सार्ध

[16] A : मूले रु...बन्धितम् ; B : मूले सूरु विवर्धितम् ; C : मूला धुतूरबन्धितम् ; G : मूले दद्रूरबन्धितम्

[17] A : मेढं पीठस्य

[18] cf. *Aṃśumatkāśyapa* 56, 117b-119:

मेढ्रपीठस्य मूलान्तमूरुमूलस्य मांसलम् । जानुमण्डलविस्तारं सपादं चतुरङ्गुलम् ॥
सार्धत्र्यङ्गुलकं प्रोक्तं जानुमण्डलनीव्रकम् । सार्धद्वयङ्गुलकं प्रोक्तं पृष्ठजान्वोर्नतं भवेत् ॥
मध्ये तु पार्श्वयोः शेषं यथासौन्दर्यमाचरेत् ।

[19] A : मूलं तु pour मूलस्य

साधंद्वयङ्गुलविस्तीर्णं[1] तत्समं च [2]परे नतम् । मध्ये तु पार्श्वयोः [3]शेषं यथासौन्दर्यमादिशेत् ॥ ११०॥

[सुखासनलक्षणम्[4]]

[5]भद्रासनस्थमासीनमार्जवं [6]राजसान्वितम् । वामाङ्घ्रिं [7]शाययेत्पीठे त्वन्यपादं प्रलम्बयेत् ॥ १११ ॥
स्फिक्पिण्डोच्चं तु [8]चत्वारि विष्टरोपरिमानके । आसनात्पूर्वकेशान्तं [9]जान्वोर्बाह्यावसानकम् ॥ ११२
[10]जानूर्ध्वात्पूर्वकेशान्तं [11]जान्वोर्बाहुप्रबाह्यकम् । परतो मणिबन्धस्य मध्यमं च समं भवेत् ॥ ११३ ॥

[सूत्रन्यासः[12]]

मूर्धमध्याच्च नासाग्रात्स्तनयोर्नाभिमध्यमात् । वामाङ्घ्रिगुल्फमध्ये तु पूर्वसूत्रं प्रलम्बयेत् । ११४ ॥

---

[1] B : विस्तारं pour विस्तीर्णं  [2] A : परेतनम्  [3] B, G : ज्येष्ठं pour शेषं

[4] cf. *Aṃśumatkāśyapa* 64, 1-4:

अथ वक्ष्ये विशेषेण सुखासनविधिं परम् । आर्जवं राजसं भावं भद्रपीठे सुखासनम् ॥
वामाङ्घ्रिं शाययेत्पीठे दक्षिणाङ्घ्रिं तु लम्बयेत् । ऊर्ध्वकायोपरिष्टात्तु सार्धवेदाङ्गुलाधिकम् ॥
स्फिक्पिण्डमानमेतद्धि आसनोर्ध्वं विशेषतः । आसनात्पूर्वकेशान्तं जान्वोर्बाह्यावसानकम् ॥
जानूर्ध्वात्पूर्वकेशान्तं जानुबाह्वप्रबाह्यकम् । परहस्ते मणिबन्धमध्यमं च समं भवेत् ॥

[5] A : भद्रासनार्धम् pour भद्रासनस्थम्  [6] A : राजसात्विकम्  [7] C : साधयेत् pour शाययेत्

[8] C : चतुरं ; G : चत्वारं  [9] B : जान्वोर्वाङ्घ्र्यवसानकम्

[10] A : जान्वोधर्ात् pour जानूर्ध्वात् ; B : जान्वधर्ात्  [11] A : जान्वोर्बाह्याग्रबाह्यकम्

[12] cf. *Aṃśumatkāśyapa* 64, 5b-20a:

मौलिमध्ये तु नासाग्रे स्तनान्ते नाभिमध्यमे । वामाङ्घ्रिगुल्फमध्ये तु ब्रह्मसूत्रं प्रलम्बयेत् ॥
सूत्राद्दक्षिणजान्वन्तमेकत्रिंशाङ्गुलं भवेत् । अथवा त्रिंशदङ्गुल्यमेकोनत्रिंशमेव वा ॥
सूत्रात्तदङ्घ्रिनलकादन्तरं द्वादशाङ्गुलम् । त्रयोदशाङ्गुलं वापि मन्वङ्गुलमथापि वा ॥
पीठात्तदङ्घ्रिपाष्र्योस्तु नीव्रं द्वित्र्यङ्गुलं तु वा । तत्सूत्रादभये हस्ते मध्यरेखावसानकम् ॥
चतुर्दशाङ्गुलं प्रोक्तं त्वन्तरं तु द्विजोत्तम । अभये मध्यमाग्रान्तं चिबुकोर्ध्वसमं भवेत् ॥
तत्सूत्रात्कटके हस्ते मणिबन्धस्य मध्यमा । पञ्चदशाङ्गुलं प्रोक्तं त्वन्तरं तु द्विजोत्तम ॥
ऊरोस्तु मणिबन्धान्तं नीव्रं द्वित्र्यङ्गुलं तु वा । कटकं सिंहकर्णं वा तद्धस्तं प्रविधीयते ॥
तर्जन्यादिकनिष्ठान्तं तत्तन्मूलान्तवक्रिता । ईषद्वक्रं तदङ्गुष्ठमेवं स्यात्कटकाकृतिः ॥
मध्या मध्यतलान्तं तु अर्धमर्धं वनामिका । वक्रा शेषाङ्गुलाः प्रागवत्सिंहकर्णमिदं परम् ॥
हिक्कासूत्रसमं कुर्यात्कर्तर्यग्रौ करौ परौ । वक्रौ त्वनामिकाङ्गुष्ठौ तलमध्यावसानकौ ॥
किंचिद्वक्रं कनिष्ठं तु शेषौ द्वौ तु ऋजुक्रियौ । कर्तर्याकृतिरेवं स्याल्लक्षणं चातिसुन्दरम् ॥
कोर्परं श्रोणिपार्श्वात्तु पञ्चषट्सप्तमात्रकम् । कुक्षिमध्ये च नासाग्रे पूर्वसूत्रं तु संस्पृशेत् ।
मेढ्रमूलात्तु वामाङ्घ्रिगुल्फमध्यं रसाङ्गुलम् । अथवा सप्तमात्रं तु पञ्चमात्रमथापि वा ॥
नाभिमध्यात्तु वामाङ्घ्रिनलकामध्यं चतुर्दश । त्रयोदशाङ्गुलं वाथ भान्वङ्गुलमथापि वा ॥
मौल्यग्रं मध्यमात्सूत्रात्त्वन्तरं मनुमात्रकम् । सार्धत्रयोदशांशं वा त्रयोदशाङ्गुलमेव वा ॥




UTTAMADAŚATĀLA

[1]सूत्राद्दक्षिणजान्वन्तमेकत्रिंशति[2]मात्रकम् । सूत्रात्तदङ्घ्रिनलकादन्तरं [3]भानुमात्रकम् ॥ ११५ ॥
पीठात्तदङ्घ्रिनलकादन्तरं[4] रसमात्रकम् । प्राक्सूत्रादभये[5] हस्ते [6]मध्यरेखावलानकम् ॥ ११६ ॥
मनुमात्रं तु मध्याग्रं [7]चूचुकोर्ध्वसमं भवेत् । तत्सूत्रात्कटके हस्ते [8]मणिबन्धस्य [9]मध्यमम् ॥ ११७ ॥
[10]त्रिपञ्चमात्रमित्युक्तं षोडशाङ्गुलमेव वा । कटकं [11]सिंहकर्णं वा तद्धस्तं[12] प्रविधीयते ॥ ११८ ॥
हिक्कासूत्रसमं कुर्यात्कर्तर्यग्रौ[13] विशेषतः । [14]कूर्परं श्रोणिपार्श्वात्तु रसमात्रमुदाहृतम् ॥ ११९ ॥
[15]मेढ्रमूलात्तु वामाङ्घ्रिगुल्फमध्यं रसाङ्गुलम् । नाभिमध्यात्तु वामाङ्घ्रि[16]नलकान्तरार्कमात्रकम् ॥ १२०
[17]मौलेस्तु मध्यमात्सूत्रादन्तरं मनुमात्रकम् ।

[सुखासनमूर्तिरूपम् [18]]

त्रिनेत्रं प्रसन्नवदनं प्रवालसदृशप्रभम् ॥ १२१

---

cf. *Kāmikāgama* II 47, 5b-12:
ललाटनासिकानाभिमेढ्राद्गुल्फमध्यमे । श्रोणिस्पृक्[स्फिक्?]संस्थितं सूत्रं मध्यसूत्रमिति स्मृतम् ॥
मुखान्तात्पिप्पलीमूलाद्ग्रीवापार्श्वात्तथैव च । चूचुकस्याथ मध्यात्तु कटिस्थं पार्श्वगं मतम् ॥
उष्णीषात्तु ककुद्वंशकण्ठस्फिग्मध्यमाद्गतम् । पृष्ठसूत्रमिति प्रोक्तं पार्श्वस्थात्सार्धमात्रकम् ॥
हित्वा पार्श्वद्वयोश्चैव ततः स्याद्रुदैर्घ्यकम् । जानुः पक्षाङ्गुलं वामे लम्बितस्य गुणाङ्गुलम् ॥
सूत्रात्तु वामजान्वन्तमूर्ध्वकायार्धमानकम् । ऊरुमूलात्तु षण्मात्रं नालकान्तं द्विजोत्तमाः ॥
तलाग्रादूरुमध्याच्च द्व्यन्तरं तु गुणाङ्गुलम् । सूत्राल्लम्बाङ्घ्रिपार्ष्ण्यन्तं सार्धविश्वाङ्गुलं भवेत् ॥
कटकान्मणिबन्धाधोदेशे कट्यग्रसीमकम् । नाभेस्तु मणिबन्धान्तं षोडशाङ्गुलमीरितम् ॥
वरदं चेत्तु तत्पृष्ठान्नाभ्यन्तसममिष्यते ।

[1] G : सूत्र pour सूत्राद् [2] B : त्रि pour ति [3] B : रस pour भानु
[4] A : उत्तरं pour अन्तरं [5] C, G : उभये pour अभये [6] A : मध्ये pour मध्य
[7] B : चूचुकोर्ध्वं समं [8] C, G : मणिमध्यस्य [9] A : मध्यमात् [10] G : आ pour त्रि
[11] B : सिंहहस्तं वा
[12] Le mot हस्त se trouve ici au neutre au lieu du masculin.
[13] B. अग्रे pour अग्रौ [14] A : कोर्परं श्रोणिपार्श्वं तु [15] A : मध्यमूलं तु ; C : मध्यं मूलं तु
[16] A : नलिकान्तरार्धमात्रकम् ; B : नलकार्धार्धमात्रकम् [17] C : मौल्यं तु
[18] cf. *Aṃśumatkāśyapa* 64, 20b-33a:
ऋज्वागतं [कृतिं?] सुखासीनं प्रवालसदृशप्रभम् । त्रिणेत्रं प्रसन्नवदनं संपन्नं राजसैर्गुणैः ॥
व्याघ्राजिनाम्बरधरं दुकूलवसनान्वितम् । कर्तरीपरहस्तौ द्वौ बाह्यौ वाभ्यन्तराननौ ॥
दक्षिणे परशुं वामे कृष्णं न्यस्य करद्वये । अभयं दक्षिणे वामे कटकं सिंहकर्णवत् ॥
वामकर्णे विशेषेण शङ्खपत्रं निधापयेत् । त्रिचतुष्पञ्चमात्रं वा पत्रमण्डलविस्तृतम् ॥
कर्णनालघनं चैव त्रिगुणं पत्रविस्तृतम् । यवं पत्रघनं प्रोक्तं श्वेताभं चातिमार्दवम् ॥
दक्षिणे मकराद्यं तु कुण्डलं सिंहमेव वा । कुण्डलव्यासतुङ्गं तु त्रिचतुष्पञ्चमात्रकम् ॥

व्याघ्राजिनमम्बरोपेतं दुकूलवसनान्वितम्। [1]कर्तरीपरहस्तौ च [2]बाह्यौ [3]वाभ्यन्तराननौ ॥ १२२ ॥
दक्षिणे परशुं [4]कृष्णमृगं वामे तु धारयेत्। अभयं दक्षिणे पूर्वमितरत् सिंहकर्णकम्[5] ॥ १२३ ॥
वामकर्णे तु [6]पत्रं स्यादन्ये[7] सिंहाख्यकुण्डलम्[8] । [9]मकुटे [10]मुखद्वयं तुङ्गमष्टादशाङ्गुलं[11] तु वा ॥ १२४
[12]एकविंशतिमात्रं [13]स्याल्ललाटपट्टसमन्वितम्। व्यालं चैवार्कपुष्पं च मकुटे दक्षिणे न्यसेत् ॥ १२५ ॥
दक्षिणेऽदक्षिणे वाथ तरुणेन्दुं निधापयेत्। जटामकुटमेवं [14]स्याच्चतुष्पूरिमसंयुतम् ॥ १२६ ॥
सर्वाभरणसंयुक्तं युक्तया शोभनमाचरेत्। एवं सुखासनः प्रोक्तः सोमेश्वरः पुरोक्तवत्[15] ॥ १२७ ॥

[सोमास्कन्दः[16]]

देवः सुखासनोक्तः स्याद्देवीमात्रं वदामि ते। [17]तद्विष्टरेन्दुपञ्चाशदङ्गुलं तु परं भवेत् ॥ १२८ ॥
साक्षविंशद्यांशं[18] तु कन्यसं विष्टरोदयम्। अङ्गुलाङ्गुलहीनेन नवधा पीठमानकम् ॥ १२९ ॥
तन्मानसदृशव्यासमुपामेऽग्रेऽष्टहीनकम्। [19]विस्तारत्रिगुणायामं परं [20]द्विगुणिताधरम् ॥ १३० ॥

---

युक्तं वै कुण्डलं कृत्वा कर्णे स्कन्धोपरि न्यसेत्। अथवा कर्णयोर्विप्र वृत्तकुण्डलकं न्यसेत् ॥
वृत्तकुण्डलविस्तारमष्टादशयवं भवेत्। वेदाङ्गुलं तु तत्तुङ्गं कुम्भाब्जमुकुलोत्पलम् ॥
अन्यं वा सुन्दरोपेतं कल्पयेद्वृत्तकुण्डलम्। जटामकुटसंयुक्तं युग्मसंख्याजटान्वितम् ॥
मकुटस्योदयं विप्र चतुर्विंशाङ्गुलं भवेत्। त्रिःसप्ताङ्गुलतुङ्गं वा द्विर्नवाङ्गुलमेव वा ॥
केशान्तान्मकुटोच्चं तु ललाटे पट्टसंयुतम्। मुखान्तसदृशं विप्र मकुटमूलविशालकम् ॥
तत्सप्ताष्टनवांशैकहीनमग्रविशालकम्। चतुष्पूरिमसंयुक्तं भान्वंशं पूरिमोदयम् ॥
सव्ये नागार्कपुष्पं च वामे त्वर्धशशिं न्यसेत्। दक्षिणेऽर्धशशी वाथ वामे नागार्कपुष्पवत् ॥

[1] C : कर्तारं pour कर्तरी [2] A : बाह्ये pour बाह्यौ [3] A : वाभ्यन्तराननम् ; G : बाह्यान्तराननम्
[4] A : कृष्णो वामे मृगं धरे [5] G : कण्ठकम् pour कर्णकम् [6] A : पार्श्वौ ; C, G : पार्श्वं
[7] La forme grammaticale correcte est अन्यस्मिन् [8] A : मण्डलम् pour कुण्डलम्
[9] A : मकुटं pour मकुटे [10] G : मख pour मुख ; cf. *Kāraṇāgama* I 11, 63b-64a: " रव्यङ्गुलं मुखं भवेत्। मुखतालं मुखं चैव पर्यायवचनानि च ।" voir aussi *Ajitāgama* 36, 40b.
[11] B : अष्टमांशाङ्गुलं pour अष्टादशाङ्गुलं [12] A : एवं pour एक
[13] A : स्याल्लाटपट्ट pour स्याल्ललाटपट्ट [14] B : स्याच्चतुष्पूरिसमायुतम्
[15] voir *supra paṭala* 34 (सोमेश्वरस्थापनविधिः)
[16] cf. *Aṃśumatkāśyapa* 65, 1-12a:

अथ वक्ष्ये विशेषेण सोमास्कन्देश्वरं द्विज। सुखासनं यथा प्रोक्तं तथा देवो विधीयते ॥
देवस्य वामपार्श्वे तु पार्वती च सुखासने। शाययेद्दक्षिणं पादं वामपादं प्रलम्बयेत् ॥
आसनस्योपरिष्टात्तु स्फिग्मानं चतुरङ्गुलम्। ऊर्ध्वकायसमायुक्तमासनोपरि कल्पयेत् ॥
किंचिद्देवाश्रितं वक्त्रं ललितं भङ्गसंयुतम्। वरदं वामहस्तं तु उत्पलं दक्षिणे करे ॥
किंचिद्वक्राङ्गुलाः सर्वे वामहस्ततलोर्ध्वगाः। वरदं त्विति विख्यातं पुष्पधृत्सिंहकर्णवत् ॥


SKANDA
PAÑCATĀLA
AṄGULA YAVA
2 -
PŪRVAKEŚA
4 -
AKṢI SŪTRA
8 -
HANU
4 -
HIKKĀ SŪTRA
8 -
HṚDAYA SŪTRA
9 -
NĀBHI SŪTRA
9 -
LIṄGAMŪLA
6 4
ŪRUDĪRGHA
3 -
JĀNU
6 4
JAṄGHĀDĪRGHA
3 -
PĀDADĪRGHA
63

SOMĀSKANDA

[1]तयोर्मध्येऽष्टभागे तु नवधा [2]विष्टरायतम्। भद्रासनाङ्ग[3]संयुक्तं [4]कर्तव्यमतिसुन्दरम् ॥ १३१ ॥
तस्योर्ध्वे दक्षिणे देवं वामे देवीं [5]निधापयेत् । विष्टरे शाययेत्सव्यं पादमन्यं [6]प्रलम्बयेत् ॥ १३२ ॥
उत्पलं दक्षिणे हस्ते वरदं वामहस्तके । किञ्चिद्देवं [7]समीक्ष्येव [8]युक्त्या देवीं निधापयेत् ॥ १३३ ॥
दुकूलवसनां श्यामां सर्वाभरणभूषिताम् । [9]वामोरुबाह्ये पीठे तु [10]वामहस्ततलं न्यसेत् । १३४ ॥
पीठात्तु दक्षिणं [11]जानुमुद्धृतं सुन्दरं यथा । स्फिक्पिण्डमानमायार्धं[12] विष्टरोपरिमानकम् ॥ १३५ ॥

[स्कन्दलक्षणम्[13]]

देव्यास्तु लक्षणं ह्येवं स्कन्दलक्षणमुच्यते । विष्टरोपरि देव्यास्तु हिक्कान्तं वा स्तनान्तकम् ॥ १३६॥
तयोर्मध्येऽष्टभागे[14] तु नवधा स्कन्दतुङ्गकम् । [15]स्कन्दस्य लक्षणं युक्त्या कुर्याद्वै पञ्चतालकम् १३७
केशान्ते [16]वा शिखोपेतं करण्ड[17]मकुटान्वितम् । [18]मुद्रिकादिपरिच्छाद्य[19]बालभूषणभूषितम् ॥१३८॥

---

सस्यश्यामनिभा देवी सर्वाभरणभूषिता । रक्ताम्बरधरा देवी छन्नवीरसमन्विता ॥
अथवान्यप्रकारेण देवीभङ्गं वदामि ते । वामोरुबाह्यपीठे तु वामहस्ततलं न्यसेत् ॥
प्राग्वदुत्पलसंयुक्तं दक्षिणं हस्तमुच्यते । पीठात्तु दक्षिणं जानु किंचिदुद्धृतसंयुतम् ॥
त्रिचतुष्पञ्चमात्रं वा पीठाज्जान्वन्तरं भवेत् । षट्सप्ताष्टाङ्गुलं वाथ पीठाज्जान्वन्तरं भवेत् ॥
एवं द्विविधरीत्या तु देवीभङ्गं विधीयते । स्त्रीमानस्योक्तमार्गेण देवीमानं तु गृह्यताम् ॥
स्थानकानां तु देवानां देवी च स्थानका भवेत् । आसने चासनं ख्यातं विपरीतं विपत्करम् ॥
देवीलक्षणमेवोक्तम् "

voir aussi *Ajitāgama* 36, 268-272.

[17] A : संविष्टरेन्दु pour तद्विष्टरेन्दु [18] A : यवांशं pour द्व्यांशं [19] A : विस्तारात् pour विस्तार
[20] A : द्विगुणितावरम् ; B : द्विगुणितं परम्
[1] B : तयोर्मध्याष्टभागे तु [2] C : विष्टरांशत: [3] G : अन्त pour अङ्ग
[4] A : कर्तव्यं तिथिसुन्दरम् [5] B : प्रकल्पयेत् [6] A : प्रलम्बिता ; G : प्रलम्बितम्
[7] B : समीक्ष्यैवं ; G : समीक्ष्यैव [8] A : युक्त pour युक्त्या ; C : युक्तां
[9] A : वामोरुबाह्ये पीठे ; C : पामरं बाह्यपीठे [10] A : वामहस्ते तलं
[11] A : जातुमुद्धता ; C : जानुमध्यता [12] B : आख्यातं pour आयार्धं
[13] cf. *Aṃśumatkāśyapa* 65, 12-36:

" स्कन्दलक्षणमुच्यते ।
देवीदेवेशयोर्मध्ये स्थापयेत्स्कन्दमूर्तिनम् । देव्या हिक्कावसानान्तं स्कन्दमानं तदुत्तमम् ॥
स्तनाक्षान्तं कनिष्ठं स्यात्तयोर्मध्येऽष्टभाजिते । नवधा स्कन्दमानं तु उत्तमादि त्रयं त्रयम् ॥
जात्यंशकयुतं वापि हीनं वापि प्रकल्पयेत् । वेदषड्धर्मभागे तु तन्माने तु विभाजिते ॥
एकांशमङ्गुलं ख्यातं तदष्टांशं यवं भवेत् । एकाङ्गुलं शिरोमानं केशान्तं चैव तत्समम् ॥
द्विभागं नेत्रसूत्रान्तं पुटान्तं चैव तत्समम् । गुणांशं हनुसीमान्तं ग्रीवोच्चं तु गुणाङ्गुलम् ॥

[1]आसीनं वा स्थितं वापि नृत्तं वा स्कन्दमाचरेत् । [2]आसीनं चेत्तु पीठोर्ध्वे [3]देवदेव्योस्तु मध्यमे ॥
[4]चरणौ शाययित्वा तु हस्तयोरुत्पलं धरेत् । [5]स्थिते कुञ्चितपादौ [6]चोभयजानू च [7]नीव्रकौ ॥१४० ॥

[वृषारूढलक्षणम् [8]]

उमास्कन्दयुतं प्रोक्तं वृषारूढमथोच्यते[9] । उक्षारूढमहं वक्ष्ये शृणुष्वैकाग्रमानसः ॥ १४१ ॥
आभङ्गं समभङ्गं वाप्यतिभङ्गमथापि वा । सुस्थितं सव्यपादं तु कुञ्चितं वामपादकम् ॥ १४२ ॥

---

हिक्कासूत्रात्स्तनान्तं तु नवभागमुदाहृतम् । स्तनान्तान्नाभिसीमान्तं वस्वङ्गुलमुदाहृतम् ॥
नाभेस्तु मेढ्रमूलान्तं सप्तभागमिति स्मृतम् । भान्वंशमूरुदीर्घं स्याज्जानुदीर्घं द्वियङ्गुलम् ॥
जङ्घादीर्घोरुतुल्यं स्याद्व्यंशं पादतलोन्नतम् । दशाङ्घ्रेस्तु तलायामं बाहुदीर्घं चतुर्दश ॥
कोष्ठायामं दशांशं तु तलं वेदाङ्गुलायतम् । युगांशं मध्यमायां तु सार्धहीनमनामिका ॥
तत्समं तर्जनीदीर्घं कनिष्ठोच्चं गुणाङ्गुलम् । अङ्गुष्ठायाममग्न्यंशं युगांशं तलविस्तृतम् ॥
प्रकोष्ठाग्रं गुणांशं तु तन्मूलं चतुरङ्गुलम् । भूतांशं बाहुमूले तु विस्तारं द्विजसत्तम ॥
सार्धाष्टांशं मुखव्यासं सप्तांशं कर्णविस्तृतम् । कक्षयोरन्तरव्यासं त्रयोदशाङ्गुलं भवेत् ॥
भान्वंशं हृदयविस्तारं रुद्रांशं मध्यविस्तृतम् । श्रोणिस्थाने तु भान्वंशं कटिस्थाने त्रयोदश ॥
ऊरुमूलविशालं तु वस्वङ्गुलमुदाहृतम् । षडंशं जानुविस्तारं जङ्घामूलं युगाङ्गुलम् ॥
गुणांशं नलकातारं षडंशं तलविस्तृतम् । पार्ष्णिव्यासं युगांशं स्याच्छेषं युक्त्या तु कल्पयेत् ॥
केशान्ते वा शिखोपेतं करण्डमकुटान्वितम् । उभयोर्हस्तयो: पुष्पं वामं वरदमेव वा ॥
कटकं वाथ तद्धस्ते सिंहकर्णमथापि वा । दक्षिणं पुष्पहस्तं वा कपित्थाम्रफलं तु वा ॥
कटिसूत्रयुतं नग्नं छन्नवीरसमन्वितम् । मुद्रिका चोपग्रीवादिबालभूषणभूषितम् ॥
आसीनं वा स्थितं वापि नृत्तं वा स्कन्दमाचरेत् । आसीने चरणौ द्वौ तु विष्टरोपरि शाययेत् ॥
स्थिते पादतलौ द्वौ तु समभङ्गमिति स्थितौ । चरणौ कुञ्चिताभौ तु युक्त्या जानू च नीव्रकौ ॥
द्वौ पादौ कुञ्चितौ किंचित्किंचिद्गमनमेव वा । नृत्तं चेत्सुस्थितं सव्यपादं वक्रसमन्वितम् ॥
उद्धृत्य चान्यपादं तु पीठात्सप्ताङ्गुलावधि । षण्मात्रमथवा पञ्चमात्रान्तं वा समुद्धरेत् ॥
फलेन वरदं वामहस्तमन्यं तु सूचिकम् । अथवा वामहस्ते तु फलं न्यस्त्वा प्रसारयेत् ॥
हिक्कामूत्रसमोद्धृत्य मणिबन्धोर्ध्वसीमकम् । द्व्यन्तरं लम्बसूत्रं च नृत्तमूर्तिवदाचरेत् ॥
उमास्कन्दसहितं प्रोक्तम्"

[14] B : भागं pour भागे    [15] A : स्कन्दलक्षणयुक्त्या तु    [16] A : वाचिकोपेतम्
[17] A : मुकुट pour मकुट    [18] A : मुद्रिकाद्विपरिच्छादि    [19] B : बाल्य pour बाल

[1] B : आसीनो वा स्थितो वापि ; C : अस्तिर्नावस्तिलो वापि    [2] A : आसनं    [3] A : देवं देव्यास्तु
[4] B : चरणे    [5] B : स्थितौ    [6] B : वा pour च    [7] B : नितृत्तिकौ
[8] cf. *Aṃśumatkāśyapa* 67, 1-6:
वृषवाहनमूर्तेस्तु लक्षणं वक्ष्यतेऽधुना । समभङ्गमतिभङ्गं वा कल्पयेत्कल्पवित्तमः ॥
दक्षिणं सुस्थितं पादं वामपादं तु कुञ्चितम । उष्णीषमध्यमाद्वामे ललाटाद्वामके तथा ॥
वामनेत्रावमाने च वामनासापुटान्तके । दक्षिणे स्तनपीठस्य वामे नाभेश्च मध्यमे ॥
वामोरुमध्यमे पार्ष्ण्योर्मध्ये सूत्रं प्रलम्बयेत् । एवं तु समभङ्गं स्यान्नतमानं युगाङ्गुलम् ॥
मुखे पूर्ववदुद्दिष्टे दक्षिणे तु स्तने तथा । नाभेर्वामे गुणांशे तु वामोरोर्मध्यमे तथा ॥
सुस्थिताङ्घ्रौ तु गुल्फस्य मध्ये सूत्रं प्रलम्बयेत् । अतिभङ्गमिति ख्यातं नतं पञ्चाङ्गुलं भवेत् ॥
voir aussi *Ajitāgama* 36, 279-282.
[9] B : इहोच्यते pour अथोच्यते

[1]ललाटमध्याद्वामे तु नेत्रान्ते [2]तद्युगान्तके । दक्षिणस्तनवामे तु नाभिमध्ये तथैव च ॥ १४३ ॥
वामोरुमध्यमे चैव पादपार्ष्णयोश्च मध्यमे[3] । [4]उक्षस्य [5]मस्तकोर्ध्वे तु न्यसेत्सव्यं वामकूर्परम्[6] ॥ १४४ ॥
कलांशं [7]द्विनवांशं वा हिक्काधो लम्बितं [8]हितम् । [9]तत्कूर्परात्तु पीठान्तमुक्षस्योदयमीरितम् ॥ १४५ ॥
उक्ष[10]मूर्धस्थहस्ते तु [11]मध्याङ्गुलाग्रलीनकम् । नाभिसूत्रसमं कुर्यादङ्गुलं वा नतोन्नतम् ॥ १४६ ॥
[12]तद्धस्ततलमध्ये तु [13]ब्रह्मसूत्रं यवद्वयम् । अधोमुखं प्रकर्तव्यं [14]तद्धस्तं तु [15]प्रसारयेत् ॥ १४७ ॥
[16]सव्ये तु पूर्वहस्तात्तु[17] पार्ष्णेर्नाभेरधो गतम् । त्रिपञ्चाक्षरमात्रं वा लम्बं [18]तत्सिंहकर्णवत् ॥१४८॥
[19]गदां वा वक्रदण्डं वा बाणं [20]तत्तत्करे धृतम् । [21]तत्करे मणिबन्धात्तु चोरुमूलावसानकम् ॥१४९॥
[22]मूर्तिमात्रं प्रवेशं वा दशमात्रान्तरं तु वा । [23]परहस्तद्वयोः सव्ये [24]टङ्को वामे मृगो भवेत् ॥१५० ॥

---

[1] C : ललाटमध्यभागे तु ; G : ललाटमध्यवामे तु [2] G : तद्युतान्तके

[3] Il semble y avoir une lacune entre les *śloka* 144a et 144b ; on ne trouve en effet aucune description de सूत्रपात pour आभङ्ग, समभङ्ग et अतिभङ्ग ; à ce sujet voir *Aṃśumatkāśyapa* 67, 4-6.

[4] cf. *Aṃśumatkāśyapa* 67,7-10:
वृषस्य मस्तकोर्ध्वे तु न्यसेद्वै वामकोर्परम् । हिक्कासूत्रादधो विप्र कला वा द्विनवाङ्गुलम् ॥
वामकोर्परलम्बं स्यात्तस्मादासनसीमकम् । वृषभस्योदयं ख्यातं वृषलक्षणवत्कृतम् ॥
वृषमूर्ध्नि तु हस्ते तु मध्याङ्गुलाग्रसीमकम् । नाभिसूत्रसमं कुर्यादङ्गुलं वा नतोन्नतम् ॥
तद्धस्ततलमध्यात्तु पूर्वसूत्रं यवद्वयम् । अधोमुखं प्रकर्तव्यं तद्धस्तं तु प्रसारयेत् ॥

[5] A, B : मध्यकोर्ध्वे [6] A, C : कोर्परम् pour कूर्परम् [7] B, G : द्विनवांशं वा ; C : छिन्नपार्श्वं वा

[8] A : हितम् [9] A : तत्कोर्परात्तु ; C : गोपुरान्तान्त [10] A : मूर्ध्निस्थ pour मूर्धस्थ

[11] C : दक्षिणे परशुं धरेत् [12] A : तद्धस्ततलमध्यं तु ; G : तस्यास्तु तलमध्यात्तु

[13] B : ब्रह्मसूत्रान्वयद्वयम् [14] A : तत्स्तनं तु [15] G : प्रधारयेत्

[16] cf. *Aṃśumatkāśyapa* 67, 11-14:
दक्षिणे पूर्वहस्तात्तु पार्ष्णेर्नाभेरधो बुधः । पक्षषोडशमात्रं वा नतं तत्सिंहकर्णवत् ॥
वक्रदण्डायुधं तस्मिन्कल्पयेत्तु चलाचलम् । स्थिताङ्घ्रि जानूर्ध्वसीमान्ताद्धिक्कासूत्रान्तमुन्नतम् ॥
कनिष्ठाङ्गुलिपरीणाहमग्रे वक्रान्वितं भवेत् । लोहजं दारुजं वाथ वक्रदण्डं तु कारयेत् ॥
तद्धस्तमणिबन्धात्तु ऊरुमूलात्तु द्वयन्तरम् । पञ्चषट्सप्तमात्रं वा वसुनन्दाङ्गुलं तु वा ॥

[17] A : सव्येन पूर्वहस्तं तु [18] C : तत्सिंहकण्ठवत् ; G : तत्सिंहकण्ठकम्

[19] A : गदा वाचकदण्डं वा ; B : गदां वा कशदण्डं वा

[20] A : तत्तद्धरेद्धृतम् ; C : तत्तत्करैर्धृतम् ; G : तत्तत्करे कृतम्

[21] C, G : तत्करो मणिबन्धं तु [22] G : मूर्तिमात्रप्रवेशं वा

[23] cf. *Aṃśumatkāśyapa* 67, 15-16:
परहस्तद्वयोश्चैव टङ्कं कृष्णमृगं धरेत् । टङ्कं दक्षिणहस्ते तु वामहस्ते मृगो भवेत् ॥
परहस्तद्वयोरग्रं हिक्कासूत्रसमं भवेत् । एकद्वित्रिचतुष्पञ्चमात्रं वाथ नतं तु वा ॥

[24] A, B, G : टङ्कं वामे मृगं

[1]हिक्कान्तं तद्वयोश्चैव [2]कर्तव्यंग्रौ प्रकल्पयेत् । त्रिचतुष्पञ्चमात्रं वा [3]हिक्कासूत्रान्ततो नतम् ॥ १५१
[4]जटामकुटयुक्तं वा[5] [6]जटाबन्धेन वा युतम् । [7]पार्वती[8] तस्य वामे तु दक्षे वामे प्रकल्पयेत् ॥१५२॥
सुस्थितं दक्षिणं पादं वामपादं तु कुञ्चितम् । [9]आभङ्गं समभङ्गं [10]वाप्यतिभङ्गमथापि वा ॥ १५३ ॥
अथवा वामपादं [11]तदुद्धृतं [12]तिर्यगञ्चितम् । दक्षिणे [13]सव्यपादस्य [14]पृष्ठे मात्रार्धके न्यसेत् ॥ १५४ ॥
यथासौन्दर्ययुक्त्या [15]तु ह्यन्तरं परिकल्पयेत् । [16]पूर्ववत्पूर्वहस्तं तु परहस्तौ विना तु वा ॥ १५५ ॥

[त्रिपुरारिलक्षणम्[17]]

[18]उक्षारूढमिदं ख्यातं त्रिपुरारिरथोच्यते । [19]आभङ्गं समभङ्गं [20]वाप्यतिभङ्गमथापि वा ॥ १५६ ॥
बिम्बोच्चादङ्घ्रिमात्रं तु [21]ह्याभङ्गस्य नतं भवेत् । [22]समभङ्गे चतुर्मात्रं पञ्चमात्रातिभङ्गके ॥ १५७ ॥

[आभङ्गादिष्वन्तरम्[23]]

आभङ्गे तु कलामात्रं [24]समभङ्गेऽधिकद्वयम् । अतिभङ्गे तु [25]विंशत्स्यात्पादाङ्गुष्ठद्वयान्तरम् ॥ १५८ ॥

---

[1] C हिक्कान्ततो द्वयोश्चैव [2] B : कर्तव्याग्रं ; C : कर्तव्यं द्वौ

[3] B : हिक्कामूत्रां तथैव च ; C, G : हिक्कासूत्रं ततोन्नतम्

[4] cf. *Aṃśumatkāśyapa* 67, 17-18a:
जटामकुटयुक्तं वा जटाभारं तु लम्बितम् । जटाबन्धशिरो वापि कर्तुरिच्छावशान्नयेत् ॥
सर्वाभरणसंयुक्तं रक्ताभं रक्तवासभृत् ।

[5] C : संयुक्तं pour युक्तं वा

[6] A : जटाबन्धनवानतम् ; B : जटाबन्धेन वामनम् ; C : जटाबन्धनवायुतम्

[7] cf. *Aṃśumatkāśyapa* 67, 18b-20:
वामपार्श्वे ह्युमादेवी दक्षिणे वा विशेषतः । सुस्थितं दक्षिणं पादं वामपादं तु कुञ्चितम् ॥
उत्पलं दक्षिणे हस्ते वामहस्ते प्रसारितम् । स्त्रीमानोक्तविधानेन उमादेवीं तु कारयेत् ॥
वृषवाहनमाख्यातम्''

[8] B : पार्वती pour पार्वतीं [9] C : त्रिभङ्ग pour आभङ्गं

[10] C : वा व्यतिभङ्गम् pour वाप्यतिभङ्गम् [11] A : तु उद्धृतं

[12] A : तिर्यतं गतम् ; C : तिर्यक्गगतम् ; [illegible] : तिर्यग्गतम् [13] C, G : वाम pour सव्य

[14] [illegible] : पीठे मात्राथक न्यसेत् ; B : पीठमात्रार्धकं न्यसेत् ; G : पीठे मात्राधका न्यसेत्

[15] B लभ्यन्तरं pour तु ह्यन्तरं [16] B : परि pour पूर्व

[17] cf *Aṃśumatkāśyapa* 7[illegible], 1-2:
त्रिपुरान्तकमूर्तेस्तु लक्षणं वक्ष्यतेऽधुना । त्रिचतुष्पञ्चमात्रं स्यान्नतमानं यथाक्रमम् ॥
आभङ्गे समभङ्गे चाप्यतिभङ्ग इति त्रिधा । प्रतिमोच्चनतं भङ्गमानमेवं हि कल्पयेत् ॥

[18] [illegible] : वृषारूढमिदं स्यात्तु [19] B : त्रिभङ्गं pour आभङ्गं [20] G : वा प्रति pour वाप्यति

[21] A : आतुङ्गस्य [22] B : वाम pour सम

[23] cf. *Aṃśumatkāśyapa* 70, 3-4:
पादाङ्गुष्ठद्वयोश्चैव त्वन्तरं षोडशाङ्गुलम् । आभङ्गं तद्विजानीयादष्टादशाङ्गुलं समम् ॥
विंशत्यङ्गुलमाख्यातमतिभङ्गमिति त्रिधा । तत्त्रिभागैकभागं तु पार्ष्ण्योश्च त्वन्तरं भवेत् ॥

[24] A, B : समभङ्गे यवद्वयम् [25] A, B : विन्यस्य pour विंशत्स्यात्

[1]तत्त्रिभागैकभागं तु तत्तत्पार्ष्ण्यन्तरं गुरो ।

[आभङ्गम्[2]]

[3]उष्णीषमध्यमाद्वामे[4] नेत्रान्ते तत्पुटान्तके ॥ १५९ ॥
[5]स्तनाक्षाद्दक्षिणे वामे [6]लम्ब्यं नाभेस्तु दक्षिणे । वामोरु[7]सव्यपार्श्वे तु [8]सव्याङ्घ्रिपार्ष्णिवामतः ॥१६०॥
[9]आभङ्गस्याग्रसूत्रं तु [10]ह्येवमेव प्रलम्बयेत् ।

[समभङ्गम्[11]]

समे [12]तूष्णीषमध्यात्तु नासाग्रात्पार्ष्णिमध्यमे ॥ १६१ ॥
लम्बयेत्पूर्वसूत्रं तु [13]ह्यन्तरं तु वदाम्यहम् । हिक्कामध्यं तु [14]तत्सूत्राद्वामपार्श्वे तु [15]मात्रकम् ॥१६२॥
सूत्राद्धृदयवामं तु वामपार्श्वे चतुर्यवम् । सूत्रात्तु दक्षिणे [16]नाभि[17]मध्यमं त्वक्षिमात्रकम् ॥ १६३ ॥
सव्यपार्श्वे तु [18]सूत्रात्तु [19]मेढ्रमूलस्य मध्यमम् । वेदमात्रमिति [20]प्रोक्तं वामजान्वन्तरेऽर्ककम् ॥१६४॥
यवमानं प्रकर्तव्यं समभङ्गस्य [21]सुव्रत ।

---

[1] C : तत्र pour तत्त्रि

[2] cf. *Aṃśumatkāśyapa* 70, 5-7a:
उष्णीषाद्वामपार्श्वे तु नेत्रान्ते तत्पुटान्तके । हनोर्वामे समालम्ब्यं दक्षिणस्तनवामके ॥
नाभेर्दक्षिणपार्श्वे तु वामोरोः सव्यपार्श्वके । दक्षिणाङ्घ्रौ तु पार्ष्ण्योस्तु वामपार्श्वे तु लम्बयेत् ॥
आभङ्गसूत्रमाख्यातम् "

[3] C : सोष्णीष pour उष्णीष [4] B : वाम pour वामे [5] A : स्तनाक्षादक्षिणे ; B : स्तनान्ताद्दक्षिणे

[6] A : लम्ब्य pour लम्ब्यं [7] A : पर्वं pour सव्य ; B, C, G : पर्व

[8] B : सव्याङ्घ्रिः pour सव्याङ्घ्रि ; G : सव्यपात [9] A : आभङ्गस्य तु सूत्रं तु ; B : त्रिभङ्गस्य च सूत्रं तु

[10] B : एवमेवं प्रलम्बयेत्

[11] cf. *Aṃśumatkāśyapa* 70, 7-11a
"समभङ्गमथ शृणु ।
ललाटमध्ये नासाग्रे पादयोः पार्ष्णिमध्यमे । लम्बयेत्पूर्वसूत्रं तु द्वयन्तरं तु वदाम्यहम् ।
तत्सूत्राद्वामपार्श्वे तु हिक्कामध्यं शिवाङ्गुलम् । अर्धाङ्गुलं तु तत्सूत्राद्वामे हृदयमध्यमम् ॥
तत्सूत्राद्दक्षिणे नाभिमध्यमं तु द्वयाङ्गुलम् । तत्सूत्राद्दक्षिणे मेढ्रमूलमध्यं युगाङ्गुलम् ॥
तत्सूत्राद्वामतो जानोरन्तरं द्वादशं यवम् । समभङ्गमिति ख्यातम् "

[12] B : तत्पार्ष्णि pour तूष्णीष [13] A : व्यन्तरालं pour ह्यन्तरं तु ; B, C : व्यन्तरं तु

[14] : A : तत्सूत्रं pour तत्सूत्राद् ; C : तत्सूत्र [15] B : मन्त्रकम्

[16] G : नाभिं pour नाभि

[17] C : मध्यमध्यक्ष pour मध्यमं त्वक्षि ; B : मध्यमत्वेक्ष ; G : मध्यमं चाक्ष

[18] A : सूत्रं तु ; B : सूत्रं च [19] A : मेध्य pour मेढ्र

[20] A : प्रोक्तं जानुनन्वन्तरार्करम् ; B : प्रोक्तं जानुनन्वन्तरार्ककम् ; C : प्रोक्तमवाजान्वन्तरात्परम् ; G : प्रोक्तं वाजन्वन्तरान्तरम् [21] A : संहृतम्

[ अतिभङ्गम्[1] ]

ललाटमध्याद्वामे तु [2]नेत्रान्ते तत्पुटान्तके ॥ १६५ ॥
[3]दक्षिणस्तनमध्ये तु वामपार्श्वे गुणाङ्गुलम् । नाभिमध्यात्तु[4] [5]वामेऽग्निमात्रं [6]स्यात्तु चतुर्यवम् ॥१६६॥
[7]वामजान्वन्तरं [8]विद्याद्वामपार्श्वे तु दक्षिणे । लम्बयेत्पूर्वसूत्रं तु वेशादीनि समोक्तवत् ॥ १६७ ॥

[ त्रिपुरारिमूर्तिस्वरूपम्[9] ]

दक्षिणं सुस्थितं पादं वामपादं तु कुञ्चितम् । दक्षिणे पूर्वहस्तं तु नाभिसूत्रसमोद्धृतम् ॥ १६८ ॥
तत्करं [10]सिंहकर्णं स्याद्बाणमध्यं तु [11]पीडितम् । [12]पूर्वहस्तस्थसव्ये तु [13]धनुर्धृत्वा तु मुष्टिना ॥१६९॥
[14]तन्मुष्ट्यूर्ध्वं तु [15]कक्षान्तमग्न्यंशं वा [16]नतोन्नतम् ।[17]कर्तरी[18]परहस्तौ तु हिक्कासूत्रसमोद्धृतौ[19]॥१७०

---

[1] cf. *Aṃśumātkāśyapa* 70, 11-14a:

"अतिभङ्गं ततः शृणु ।
उष्णीषाद्वामपार्श्वे तु नेत्रान्ते च पुटान्तके । दक्षिणस्तनमध्ये तु तत्सूत्रं तु गुणाङ्गुलम् ॥
नाभिमध्यात्तु वामे तु सूत्राग्नीत्रं गुणाङ्गुलम् । तत्सूत्राद्वामजान्वन्तमर्धमात्रं विधीयते ॥
वामाङ्घ्रिपार्ष्णिसव्ये तु पार्श्वसूत्रं प्रलम्बयेत् । स्पर्शनं वेशनं नीत्रं समपादस्थानकोक्तवत् ॥

[2] B : नेत्रान्ते तत्पुटान्तरम् ; G : नेत्रमेतत्पुटान्तके

[3] A : दक्षिणस्तनमध्यात्तु ; G : दक्षिणे स्तनमध्यं तु [4] B : मध्याग्नि pour मध्यात्तु

[5] C : धामे pour वामे [6] A : यस्याच्चतुर्यवम् ; B : ये स्याच्चतुर्यवम्

[7] G, C : वाजनान्वन्तरं [8] A : विद्याद्वाम ग़र्श्वेऽस्तु ; C : विद्याद्वामपार्श्वेस्तु

[9] cf. *Aṃśumatkāśyapa* 70, 16-26:

दक्षिणं सुस्थितं पादं वामपादं तु कुञ्चितम् । दक्षिणे पूर्वहस्तोर्ध्वं नाभिसूत्रावसानकम् ॥
सिंहकर्णं तु तद्धस्तं बाणमध्यं तु पीडितम् । ···वामहस्ते धनुर्धृत्वा कक्षान्तं तत्कराध्वर्कम् ॥
एकद्वित्र्यङ्गुलं वापि तस्य नेत्राद्धृतं तु वा । ···कर्तरीपरहस्तौ द्वौ टङ्ककृष्णमृगान्वितौ ॥
टङ्कं दक्षिणहस्ते तु वामहस्ते मृगं धृतम् । जटामकुटसंयुक्तं सर्वाभरणभूषितम् ॥
प्रवालसदृशप्रख्यं वामे गौरीसमन्वितम् ॥

cf. *Silparatna* II, 22 72b-76:

अथाष्टधा प्रवक्ष्यामि त्रिपुरान्तकमूर्तिनम् । दक्षिणं सुस्थितं पादं वामपादं तु कुञ्चितम् ॥
दक्षिणे पूर्वहस्तं तु नाभिसूत्रावसानके । सिंहकर्णं तु तद्धस्तं बाणमध्यनिपीडितम् ॥
वामहस्ते धनुर्धृत्वा कक्षान्तोर्ध्वे समुद्धृते । कर्तरी परहस्तौ द्वौ टङ्ककृष्णमृगान्वितौ ॥
टङ्कं तु दक्षिणे वामे कृष्णसारङ्गमेव हि । जटामकुटसंयुक्तं सर्वाभरणसंयुतम् ॥
प्रवालसदृशप्रख्यं वामे गौरीसमायुतम् ॥

voir aussi *Ajitāgama* 36, 283-285.

[10] B : सिंदकर्णे ; C, G : सिंहकण्ठं [11] A : पीठितम् [12] B : पूर्वहस्तस्य सव्ये तु ; C : पूर्वहस्तस्स सर्वे तु

[13] B : धनं कृत्वा [14] B : तन्मुष्टयन्तं तु ; C : तन्मुष्टयर्धं तु [15] A : कर्कान्तम् pour कक्षान्तम् ; B : कर्काङ्कम्

[16] B : नवोन्तकम् ; C, G : ततोन्नतम् [17] A : कर्करी pour कर्तरी [18] A : परहस्ते तु ; B : वरहस्तस्ते

[19] A : समोद्धृता pour समोद्धृतौ ; B : समोद्धृतम्

तयोः [1]सव्ये तु टङ्कः स्यादितरे[2] मृगमुद्धरेत् । जटामकुटसंयुक्तं सर्वाभरणभूषितम् ॥ १७१ ॥

प्रवालसदृशप्रख्यं वामे गौरीसमायुतम्[3] । त्रिपुरान्तकमाख्यातं वक्ष्येऽहं चन्द्रशेखरम् ॥ १७२ ॥

[ चन्द्रशेखरलक्षणम्[4] ]

केवलं [5]गौरीसहितमालिङ्गं च[6] त्रिधा भवेत् । केवलं समपादं तु स्थानकं परिकीर्तितम् ॥ १७३ ॥

[ सूत्रन्यासः[7] ]

मकुटस्य तु [8]मध्याच्च ललाटस्य [9]तु [10]मध्यमात् । [11]नासाग्रमध्यमाच्चैव [12]हनोर्मध्ये तथैव च॥१७४॥

---

[1] C : सर्वे pour सव्ये

[2] La forme grammaticale correcte est इतरस्मिन् ; mais le mètre ne serait pas respecté.

[3] C, G : समन्वितम् pour समायुतम्

[4] cf. *Amśumatkāśyapa* 66, 1-4a:

अथ वक्ष्ये विशेषेण चन्द्रशेखरलक्षणम् । केवलं गौरीसहितमालिङ्गं त्रिविधं भवेत् ॥
केवलं गौरीरहितं सहजं गौरिसंयुतम् । आलिङ्गमेकहस्तेन देवीदेवौ परस्परम् ॥
उमालिङ्गमिति ख्यातमेवं त्रिविधमुच्यते । केवलं समपादं तु स्थानकं सहितं तु वा ॥
समभङ्गं वातिभङ्गं वालिङ्गं चन्द्रशेखरम् ।

[5] B, C : गौरि pour गौरी [6] B : उमालिङ्गं च pour आलिङ्गं च

[7] cf. *Amśumatkāśyapa* 66, 9-20:

सीमासूत्रं विनिश्चित्य प्रलम्बफलकोपरि । पूर्वे परे च पार्श्वे च मानसूत्रं प्रसारयेत् ॥
तदन्ते सुषिरं कल्प्य सूत्राण्यालम्बयेत्ततः । सूत्रस्यानुगुणं बिम्बं कारयेद्द्विजसत्तम ॥
पूर्वे च पार्श्वयोः पृष्ठे कायमध्ये च लम्बयेत् । एतानि पञ्च सूत्राणि ब्रह्मसूत्रमुदाहृतम् ॥
कक्षान्तरे मुखान्ते च द्वे सूत्रे च प्रलम्बयेत् । एवं हि नवसूत्राढ्यं स्थानकं चासनं तथा ॥
मकुटस्य तु मध्ये च ललाटस्य तु मध्यमात् । नासाग्रमध्यमे चैव हनोर्मध्ये तथैव च ॥
हिक्काहृन्मध्यमाच्चैव नाभेश्चैव तु मध्यमात् । लिङ्गमध्योरुमध्यात्तु पादयोश्च तलान्तरे ॥
लम्ब्यैवं पूर्वसूत्रं स्यादपरस्थमथोच्यते । मकुटस्य मध्यमाच्च कृकटिकायास्तु मध्यमात् ॥
ककुन्मध्याद्वंशमध्यात्स्फिक्पिण्डयोरन्तरे तथा । ऊरुजान्वोश्च जङ्घान्तं पार्ष्णिद्वयान्तरे तथा ॥
एवमालम्बयेत्सूत्रमपराश्रितमेव हि । पार्श्वयोः कर्णपाल्यन्ताद्ग्रीवामध्यात्तथैव च ॥
बाह्वोस्तु मध्यमालम्ब्य गुल्फमध्ये तु लम्बयेत् । देहमध्यगतेनैव पञ्चसूत्रं प्रलम्बयेत् ॥
श्रोत्राभ्यन्तरगं सूत्रं स्तनचूचुकमध्यगम् । पादमध्यप्रदेशिन्यां मध्यमे तु प्रलम्बयेत् ॥
ऊरुजान्वोश्च जङ्घान्ते पार्ष्णिद्वयान्तरे तथा । अक्षमध्ये कटीपार्श्वे मध्ये चैव तु लम्बयेत् ॥

cf. *Kāmikāgama* II 48, 14-21a:

" ततः सूत्राणि लम्बयेत् ।
पार्श्वयोः स्मृतिसूत्राणि मुखकर्णभुजावधि । पुरः पृष्ठे च मध्ये च नव तान्यवलम्बयेत् ॥
प्रलम्बफलकामूर्ध्नि स्थापयित्वावलम्बयेत् । ललाटघ्राणहृन्नाभिमेढ्राङ्घ्रियुगमध्यमे ॥

[1]हिक्काहृदयनाभीनां मध्याल्लिङ्गस्य मध्यमात् । [2]ऊर्वोर्जान्वोश्च मध्ये तु पादयोश्च तलान्तके ॥ १७५॥
[3]लम्ब्यैवं पूर्वसूत्रं स्यादपरे [4]मध्यमे तथा । [5]पूर्वसूत्रात्तु[6] [7]मौल्यग्रमध्यमर्काङ्गुलं भवेत् ॥ १७६ ॥
मौल्यग्रादपरे सूत्रं रस[8]मात्रमुदाहृतम् । [9]पूर्वसूत्राल्ललाटस्थमक्षाङ्गुलमुदाहृतम् ॥ १७७ ॥
हिक्कासूत्रान्तरं पूर्वे रसमात्रमुदाहृतम् । [10]उरःपूर्वसूत्रान्तरक्षाङ्गुलसमं भवेत् ॥ १७८ ॥

---

सूत्रं पुरः स्थितं नासाकुक्षिस्पर्शं यथा भवेत् । मुखान्तं पिप्पलीकर्णमूलचूचुकपात्तले ॥
कर्णकण्ठस्तनानां तु बाह्ये श्रोणिस्पृगेव च । मुखान्मुखान्तं नीत्वादौ दोःस्पृश्यपरं मतम् ॥
एवं पार्श्वे त्रिसूत्राणि लम्बयेद्देशिकोत्तमः । कृकाटिकाककुत्कर्णस्फिक्पार्ष्णीनां तु मध्यमे ॥
मस्तकाल्लम्बनीयं स्याद्यथापृष्ठककुद्गतम् । देहस्यान्तर्गतं मध्यसूत्रं स्यान्मुनिपुङ्गवाः ॥

[8] C, G : मध्यात्तु [9] B : च pour तु [10] A : मध्यमा ; B : मध्यमे

[11] A : नासाग्रं मध्यमं चैव ; G : नासाग्रस्य तु मध्यमात् [12] G : वह्नेर्मध्ये

[1] A : हिक्काद्धृदय pour हिक्काहृदय [2] B : ऊरुजान्वोश्च ; G : ऊरोर्जान्वोश्च

[3] C, G : बिम्बेवं [4] A : मध्यमं तया

[5] cf. *Aṃśumatkāśyapa* 65, 21-42a:

पूर्वसूत्रात्तु मौल्यग्रमध्यं द्वादशमात्रकम् । अपरसूत्रात्तु मौल्यग्रमध्यं षण्मात्रमुच्यते ॥
पूर्वसूत्राल्ललाटान्तमन्तरं तु द्विमात्रकम् । अपरसूत्राच्छिरःपृष्ठं पादोनं तु युगाङ्गुलम् ॥
पूर्वसूत्रात्तु हन्वन्तं सयवद्व्यंशमुच्यते । कृकाटिकापरसूत्रात्तु यवोनाग्न्यङ्गुलान्तरम् ॥
पूर्वसूत्रात्तु हिक्कान्तं त्वभ्यन्तरं रसाङ्गुलम् । ककुदः परसूत्रात्तु षोडशं तु यवान्तरम् ॥
उरसः पूर्वसूत्रात्तु द्व्यन्तरं तु द्विमात्रकम् । ककुन्मध्यात्परसूत्राद्व्यन्तरं मनुयवार्धकम् ॥
मध्योदरं स्पृशेत्पूर्वसूत्रं वै तत्समं परे । वंशनिम्नापरं सूत्रं पादोनद्व्यङ्गुलान्तरम् ॥
प्राक्सूत्रान्नाभिसूत्रात्तु त्वन्तरं सार्धमात्रकम् । नाभिसूत्रसमे पृष्ठे सार्धपक्षाङ्गुलं भवेत् ॥
प्राक्सूत्रान्मेढ्रमूलान्तं गुणाङ्गुलमुदाहृतम् । तत्समे त्वपरे सूत्रादन्तरं सार्धमात्रकम् ॥
ऊरुमध्ये तु पुरतो जानुमध्ये तथैव च । जङ्घामध्ये च नलकामध्ये चैव पुरोगतम् ॥
तिर्यक्सूत्रं तु संकल्प्य त्वन्तरं तु प्रमीयते । तत्तत्स्थाने परे चैव तिर्यक्सूत्रं प्रकल्पयेत् ॥
ऊरुमध्यमसूत्रात्तु पूर्वसूत्राद्व्याङ्गुलम् । तत्रैवापरसूत्रान्त यवोनचतुरङ्गुलम् ॥
जानुमध्यमसूत्रात्तु पूर्वसूत्राद्रसाङ्गुलम् । तत्रैव परसूत्रान्तात्पादोनपञ्चमात्रकम् ॥
जङ्घामध्यं तु प्राक्सूत्राद्वस्वङ्गुलमुदाहृतम् । तत्रैवापरसूत्रान्तं षड्विंशतियवं भवेत् ॥
प्राक्सूत्रान्नलकामध्यं सार्धवस्वङ्गुलं भवेत् । नलकापरसूत्रान्तं पादोनपञ्चमात्रकम् ॥
द्व्यर्धमङ्गुष्ठयोरग्रं पूर्वसूत्राद्विशेषतः । तत्सूत्रात्पार्ष्णिपर्यन्तं सार्धमन्वंशमिष्यते ॥
प्राक्सूत्रात्कायमध्यस्थसूत्रं स्याद्द्विनवाङ्गुलम् । तत्कायमध्यसूत्रात्तु शिरःपृष्ठं युगार्धकम् ॥
तत्कायमध्यसूत्रात्तु ककुत्पञ्चाङ्गुलार्धकम् । उरोमध्यप्रदेशे तु पृष्ठे सार्धषडङ्गुलम् ॥
सूत्रान्मध्योदरे पृष्ठे सार्धवेदाङ्गुलं भवेत् । नाभिप्रदेशे पृष्ठे तु सार्धभूताङ्गुलं भवेत् ॥
कटीनीव्रं षडर्धं स्यात्सार्धाष्टांशं स्फिगग्रकम् । ऊरुमध्यापरं वेदो जानुपृष्ठं तथैव च ॥



CANDRAŚEKHARA

जानुसूत्रान्तरं षट्स्याज्जङ्घामध्याच्चतुर्यवम् । [1]सूत्रात्तु [2]नलकादन्तः सार्धवस्वङ्गुलं भवेत् ॥ १७९ ॥
सार्धद्विमात्रमित्युक्तमङ्गुष्ठाग्रात्तु[3] सूत्रकम् ।

[ केवलम् [4] ]

कर्तरी [5]परहस्ते च [6]हिक्कासूत्रसमा भवेत् ॥ १८० ॥
अभयं दक्षिणे [7]पूर्वे वामे वरदहस्तकम् । सूत्रादभयहस्तस्य मध्यं भूतत्रियङ्गुलम् [8] ॥ १८१ ॥
अधोमुखं वामहस्तं [9]तलमूलं कटिं स्पृशेत् । तत्करे [10]मध्यमाग्रं तु [11]मेढ्राग्रान्तं [12]प्रलम्बकम् ॥१८२॥

---

जङ्घामध्ये गुणांशं तु नलका द्वयङ्गुलं भवेत् । गुल्फात्पार्ष्णियुगाङ्गुल्यं परसूत्रे समायुतम् ।
पार्श्वसूत्रे च मध्यस्थं समसूत्रे तु संस्थिताः । पार्श्वसूत्रात्पुरो बाहुपर्यन्तं चतुरङ्गुलम् ॥
तत्सूत्रादपरे बाहुपर्यन्तं वसुमात्रकम् ॥

[6] C, G: पूर्वसूत्रान्त pour पूर्वसूत्रात्तु [7] A : मौल्यग्रं pour मौल्यग्र [8] E : सूत्र pour मात्र
[9] B omet le *śloka* 177b ; A : पूर्वसूत्र pour पूर्वसूत्राद् [10] G : उरःपूर्वकसूत्रान्तगरमक्षाङ्गुलं भवेत्

[1] C : सूत्रान्त pour सूत्रात्तु [2] B : नालक pour नलक
[3] A : अङ्गुष्ठाग्रं तु pour अङ्गुष्ठाग्रात्तु ; C : अङ्गुष्ठानां तु ; G : अङ्गुष्ठारात्तु
[4] cf. *Aṃśumatkāśyapa* 66, 42b-57:
पूर्वापरकरौ मध्ये कोर्परान्तं तु लम्बकौ । तत्करबाह्यविस्तृतौ चतुरङ्गुलमिष्यते ॥
कर्तरी परहस्ताग्रे हिक्कासूत्रसमा भवेत् । मध्याङ्गुलाग्रमुभयोः स्तनसूत्रसमं भवेत् ॥
अभयं दक्षिणं हस्तं वरदं वाममुच्यते । प्राक्सूत्रादभये हस्ते मध्यं पञ्चदशाङ्गुलम् ॥
वरदं वामहस्तं तु अधोमुखं तु कल्पयेत् । तलमूलं कटिं स्पृष्ट्वा मेढ्रान्तं च तत्करे ॥
मध्याङ्गुलाग्रमालम्ब्य ऊरोर्नीत्रं युगाङ्गुलम् । ऊरुवक्त्रं तु वरदं पृष्ठं नभिसमोद्धृतम् ॥
वरदहस्ततले मध्यात्पूर्वसूत्रात्कलाङ्गुलम् । कर्तरीमणिबन्धात्तु बाहुबाह्यं मुखं भवेत् ॥
अथवा रुद्रभागं तु दशाङ्गुलमथापि वा । कोर्परात्पूर्वसूत्रान्तं नीत्रं सप्तदशाङ्गुलम् ॥
अष्टादशाङ्गुलं वाथ एकोनविंशदेव वा । ऊरुमूलाद्द्वयोरन्तरेकाङ्गुलमुदाहृतम् ॥
ऊरोर्मध्यान्तरं विंशद्यवमानमुदाहृतम् । जान्वन्तरं चतुर्मात्रं जङ्घयोः पञ्चमात्रकम् ॥
नलकान्तरं रसांशं तु भूतांशं गुल्फयोर्भवेत् । पार्ष्ण्यन्तरं चतुर्मात्रं रसांशं पादतलान्तरम् ॥
पादाङ्गुष्ठाग्रयोरन्तद्वर्यन्तरं वसुमात्रकम् । आर्जवं राजसं भावं कल्प्यैवं द्विजसत्तम ॥
कर्तरीपरहस्तौ द्वौ टङ्कं वै दक्षिणे करे । हरिणीं वामहस्ते तु टङ्कं कृत्वा बहिर्मुखम् ॥
हरिणी बाह्यपात्रं[मूलं?]वाभ्यन्तराननमेव वा । जटामकुटसंयुक्तं दक्षिणेऽर्धेन्दुशेखरम् ॥
वामेन्दुशेखरं वाथ प्रवालसदृशप्रभम् । त्रिणेत्रं सौम्यवदनं सर्वाभरणभूषितम् ॥
पीताम्बरधरं देवं वस्त्राग्रं नलकान्तकम् । उभयोः पार्श्वयोरेवमम्बरं चोरुमध्यमे ॥
केवलं त्वेवमाख्यातम् "

cf. *Kāmikāgama* II 48, 1-14a:
इन्दुमौलिप्रतिष्ठां तु वक्ष्ये लक्षणपूर्विकाम् । आपाद्य च शिलादीनि तैः कुर्यात्प्रतिमां गुरुः ॥
चतुर्भुजस्त्रिणेत्रश्च समपादस्थानके स्थितः । वराभयहस्तसमायुक्तः पूर्वस्थकरपल्लवः ॥

शैलजं मृण्मयं दारु कर्तव्यं [1]लोहजेऽन्यथा । [2]वेदभूतरसांशं वा ह्यूरुमूलात्करान्तकम् ॥ १८३ ॥
तत्करे [3]मध्यमाग्रान्तं कटिसूत्रसमं भवेत् । तत्करं [4]श्रोत्रवक्त्रं वा [5]नाभिसूत्रसमोद्धृतम् ॥ १८४ ॥
तत्करे [6]मध्यमात्सूत्रं कलाङ्गुलमिति स्मृतम् । कर्तरीमणिबन्धात्तु [7]बाहुमानं गुणं भवेत् ॥ १८५ ॥
नवद्वयाङ्गुलं प्रोक्तं [8]कूर्परात्पूर्वसूत्रकम् । ऊरुमूलद्वयोरन्तर्व्योमाङ्गुलमुदाहृतम्[9] ॥ १८६ ॥

---

वरदं वामहस्ते स्यादभयं दक्षिणे करे । वरदं यदि तं कुर्यादथान्यत्सिंहकर्णकम् ॥
ऊरुस्पृष्टकरो वापि कटको वा विधीयते । मृगटङ्ककरावन्यौ दोःसीमान्तं व्यवस्थितौ ॥
मृगटङ्कौ तु कर्णान्तौ कर्तरीसंव्यवस्थितौ । पराङ्मुखोऽभिमुख्यो वा मृगटङ्कपराङ्मुखः ॥
दिङ्मात्रं कर्तरीबाहुमध्यमं परिकीर्तितम् । हिक्कायाः कर्तरीमध्यमेकत्रिंशदथाङ्गुलम् ॥
मणिबन्धकबाह्वोस्तु मध्यमं द्वादशाङ्गुलम् । श्रोण्यन्तात्कूर्परादर्वागन्तरं पूर्वहस्तयोः ॥
शरैर्वा कौशिकैर्वापि सार्धाङ्गुलरसैस्तु वा । स्तनान्तमभयान्तोच्चं नाभ्यूर्ध्वे पुष्करोदयः ॥
नाभेरभयहस्तान्तं गुणाङ्गुलमुदाहृतम् । स्तनान्तादभयाग्रान्तं द्वादशाङ्गुलमिष्यते ॥
कटकाधःप्रदेशं तु मेढ्रमूलसमं भवेत् । ऊरुमूले कटकान्तं स्पृष्टं वाथ गुणान्तरम् ॥
सार्धभागद्वयेनाथ भागाभ्यां वाथ कल्पयेत् । ऊर्वादिमध्यमात्राणां जान्वोरप्यन्तरः क्रमात् ॥
एकेनार्धेन सार्धाभ्यां त्रिभिश्च परिकल्पयेत् । अथवा जानुमध्यात्तु सार्धाङ्गुलमिति स्मृतम् ॥
जङ्घयोर्मूलमध्याग्रं वेदभूतरसान्तकम् । अङ्गुष्ठयोर्द्वयोर्मध्यं वियेशाङ्गुलमीरितम् ॥
भागं पार्ष्ण्यन्तरं प्रोक्तम् ”

cf. *Śilparatna* II 22, 17-21:

केवलं गौरिसङ्गितमालिङ्गं च त्रिधा भवेत् । केवलं समपादं च स्थानकं परिकल्पयेत् ॥
अभयं दक्षिणं हस्तं वरदं वाममुच्यते । हारिणीं वामहस्ते तु टङ्कं वै दक्षिणे करे ॥
जटामकुटसंयुक्तं दक्षिणेऽर्धेन्दुशेखरम् । वामेन्दुशेखरं वाथ प्रवालसदृशप्रभम् ॥
त्रिनेत्रं सौम्यवदनं सर्वाभरणभूषितम् । पीताम्बरधरं देवं वज्राग्रौ नलकान्तगौ ॥
उभयोः पार्श्वयोरेव मध्यतश्चोरुमध्यमम् । केवलं त्वेवमाख्यातम् ”

[5] A : परहस्तौ च [6] A : हिक्कासूत्रं समं ; B, C : हिक्कासूत्रसमं [7] A : पूव

[8] La forme grammaticale correcte est त्र्यङ्गुलम् [9] C : स्थूल pour तल

[10] C : मध्यममं ; G : मध्यमूलं [11] G : मेढ्राकान्तं [12] A, C : प्रलम्बय

[1] A : लोहजं त्यजेत् [2] A : देव pour वेद [3] C : मध्यनिभ्रान्तं ; G : मध्यमे प्रोक्तं

[4] La meilleure lecture semble être उरुवक्त्रं [5] B : नाभिसूत्रमथोद्धृतम् [6] B : मध्यमासूत्रं

[7] A : बा_मान्यगुणं भवेत् ; G : : बाहुमाय गुणं भवेत्; la meilleure lecture semble être : बाहुबाहुमुखं भवेत्

[8] A : कर्परात् [9] C : व्योमाङ्गुलमिति स्मृतम् ; G : सोमाङ्गलमुदाहृतम्

[1]ऊरुमध्यान्तरं सार्धयवद्वयान्तरं [2]युगम् । भूतांशं [3]जङ्घयोरन्ता रसांशं नलकान्तरम् ॥ १८७ ॥
गुल्फान्तरं [4]च भूतांशं पार्ष्ण्यन्तं चतुरङ्गुलम् । [5]पादाङ्गुष्ठाग्रयोरन्तर्वसुमात्रमुदाहृतम् ॥ १८८ ॥
कर्तरीमणिबन्धान्तमूर्ध्वं [6]करसमं भवेत् । [7]कर्तर्यग्रं तु हिक्कान्तं[8] दक्षिणेऽदक्षिणेऽपि च ॥ १८९ ॥
टङ्कं कृष्णमृगं धृत्वा [9]बाह्येऽबाह्ये तु वाग्रके । आर्जवं राजसो भावो जटामकुटमण्डितम् [10]॥ १९० ॥
[11]मकुटे दक्षिणे कृत्वा [12]प्रवालाद्यङ्गसाधनम् । सर्वाभरणसंयुक्तं पीताम्बराग्निनेत्रकम् ॥ १९१ ॥

[गौरीसहितम् गौर्यालिङ्गितं च[13]]

एवं केवलमाख्यातम् ; वामे गौरीसमायुतम् [14]। [15]सहितं तदिति[16] ख्यातमालिङ्ग[17] वक्ष्यतेऽधुना॥१९२

---

[1] A : ऊरुमध्यान्तरस्यार्ध pour ऊरुमध्यान्तरं सार्ध [2] B : युतम्

[3] B : जङ्घयोरन्तः सांशुजं नालकान्तरम् [4] B : तु pour च

[5] B : पादकाङ्गुष्ठयोरन्तर् ; G : पादाङ्गुष्ठाग्रयोरन्तं [6] A : कारसमं ; G : कायरसं

[7] B omet le demi-*śloka* 189b [8] A : कर्तर्या न तु हृत्कान्तं

[9] A, G : बाह्यबाह्यं तु वाग्रकौ ; B : बाह्यबाह्ये तु वाग्रके

[10] cf. *Kāmikāgama* II 48, 20b-25a:

उष्णीषभूषणं कुर्यात्त्रिमात्रेण विशेषतः । पार्श्वयोः पुरतः पृष्ठे चतुष्पूरिसमन्वितम् ॥
मध्ये मकरकूटं स्यात्सप्तकोटरसंयुतम् । पार्श्वयोः पत्रकूटं स्यात्पृष्ठे स्याद्रत्नकूटकम् ॥
अग्रे दशाङ्गुलं तस्य मूले तु मुखविस्तरम् । तत्तत्त्रिगुणनाहं तु वामेऽवामेऽर्धचन्द्रकम् ॥
वामे महाफणिं तस्य सर्वालंकारभूषितम् । जटाभिः पञ्चभिर्ग्रन्थिं त्रिमात्रेण विशेषतः ॥
एकधा तु त्रिधावृत्य शेषाभिः पार्श्वलम्बनम् । जटामकुटमेतद्धि सर्वालंकारसंयुतम् ॥

[11] A : मकुटं

[12] A : प्रवालाभ्यंगसाधनम् ; B : प्रावला भङ्गसाधनः ; C : प्रवालभगबाधनः ; G : प्रवालद्विगबाधनः

[13] cf. *Aṃśumatkāśyapa* 66, 56-62a:

वामे गौरीसमन्वितम् ।
तद्गौरीसहितं ख्यातं भिन्नपीठैक एव वा । तदेव भङ्गसंयुक्तं देवीदेवौ परस्परम् ॥
देववरदहस्तेन देव्या बाह्यपराश्रितम् । स्तननाभ्यन्तरे वामपार्श्वमालिङ्गितं कुरु ॥
पार्श्वसूत्रात्परे वामबाहुमालिङ्गितं तु वा । देवीदक्षिणहस्तेन शम्भोर्दक्षिणपार्श्वतः ॥
कटिसूत्रोपरि स्पृष्ट्वा पुष्पं वामकरोद्धृतम् । अथवा प्राग्वद्देवेशो देव्यास्तु दक्षिणे करे ॥
रक्तोत्पलं परिग्राह्य वामहस्तं प्रलम्बितम् । एवमालिङ्गमूर्तिं तु त्रिधा मार्गेण कल्पयेत् ॥
सर्वाभरणसंयुक्तं प्रभामण्डलसंयुतम् । चन्द्रशेखरमाख्यातम् ।"

देवस्य [1]वामहस्तेन [2]गौरीमालिङ्गितां कुरु । [3]देव्याः सव्यकरेणैव [4]देवदेवं तथा कुरु ॥ १९३ ॥
संस्थितौ [5]पद्मपीठे तु [6]ह्यालिङ्गं चासनेऽपि वा । [7]देवं यथासुखासीनं तथा [8]भद्रासने कुरु ॥ १९४ ॥
तस्य वामकरोर्ध्वे तु [9]देव्यासीनाङ्घ्रिसारिका । उत्पलं दक्षिणे हस्ते [10]धृतं वरदवामकम् [11]॥ १९५ ॥
देवस्य वामहस्तेन[12] [13]देवीमालिङ्गितां कुरु । [14]विनाभयं तु देवस्य करं विस्मयमुद्रया ॥ १९६ ॥

[कालहारिलक्षणम्[15]]

[16]चन्द्रशेखरमेवं स्यात् ; [17]कालहारी त्वथोच्यते । वसुप्रवेशधर्मांशं [18]रुद्राङ्गुलमानतम् ॥ १९७ ॥
ललाटमध्यतः [19]सव्यनेत्रमध्ये[20] तथैव च । हिक्कामध्यस्य वामे तु [21]वामस्तनाक्षदक्षिणे ॥ १९८ ॥
[22]वामे तु नाभिमध्यस्य [23]सूत्रान्तरं शिवाङ्गुलम् । वामे तु [24]मेढ्रमूले [25]तु सूत्रं [26]भूताङ्गुलं भवेत् ॥ १९९ ॥
स्थिताङ्घ्रिगुल्फमध्ये तु पूर्वसूत्रं [27]प्रलम्बयेत् ।

---

cf. *Kāmikāgama* II 48, 32-34a:
चन्द्रशेखर एवं स्याद्देव्या च सहितो न वा । सापीहाभिन्नपीठा वा देवेनालिङ्गिताथवा ॥
तयालिङ्गितदेवो वा अन्योन्यालिङ्गितस्तु वा । आलिङ्गनयुतो वा स्यान्निराभङ्गोऽथ वामतः ॥
एवं लक्षणमाख्यातम् ”

voir aussi *Ajitāgama* 36, 245-246.

14 C, G : समन्वितम् pour समायुतम् 15 B : विहितं pour सहितं 16 G : इह pour इति
17 B : ह्यमालिङ्गं pour आलिङ्गं

1 G : वामहस्ते तु 2 A : गौरीमालिङ्गनं कुरु ; B : गौर्यामालिङ्गनं कुरु ; C, G : गौरीमालिङ्गितं कुरु
3 A : देवस्यास्त करेणैव ; B : देवस्यापि करेणैव 4 A : देवदेवीं 5 A : पद्मपीठं तु
6 A : मूललिङ्गं चासनेऽपि वा ; B : मूललिङ्गासनेऽपि वा 7 C, G : देवी pour देवं
8 C, G : भद्रासनं कुरु
9 G : देव्यासीनं प्रसारिका 10 A : धृता pour धृतं 11 B : वामके pour वामकं 12 A : वामहस्ते तु
13 A, B : देवीमालिङ्गनं कुरु ; C : देवीमालिङ्गनं कुरु 14 C : विना भावं तु
15 cf. *Aṃśumatkāśyapa* 80, 1-4:
अथ वक्ष्ये विशेषेण कालदाहस्य लक्षणम् । वसुनन्ददशांशं वा नतमानं द्विजोत्तम ॥
रुद्रभान्वङ्गुलं वाथ नतमानमथोच्यते । ललाटदक्षिणे सव्यनेत्रमध्ये तथैव च ॥
हिक्कामध्यस्य वामे तु वामस्तनाक्षदक्षिणे । नाभिमध्यात्तु वामे तु सूत्रान्तरं यवाष्टकम ॥
मेढ्रमूलस्य मध्यात्तु वामे षडङ्गुलं नयेत् । स्थिताङ्घ्रिगुल्फमध्ये तु पूर्वसूत्रं प्रलम्बयेत् ॥
16 C, G : इन्दु pour चन्द्र 17 A : कलाहारीमथोच्यते ; C : कालहारिरथोच्यते
18 A : रुद्राङ्गुलवानकम् ; B : रुद्राङ्गुलमेनकम् ; C : रुद्राङ्गुलवानतम् 19 A : सर्वे pour सव्य
20 B : वामनेत्रे pour नेत्रमध्ये 21 A : वामहस्तेन दक्षिणे
22 C omet le demi-*śloka* 199a 23 A : सूत्रान्तरशिखाङ्गुलम् 24 C : बाहु pour मेढ्
25 B : च pour तु 26 B : सूत pour भूत 27 C : प्रकल्पयेत

[चतुर्भुजकालारिरूपम्[1]]

सव्यपादं स्थितं पीठे नृत्तस्य [2]स्थितपादवत् ॥ २०० ॥
उद्धृतं वामपादं तु कुञ्चितं तलमुद्धृतम् । [3]तदङ्गुष्ठं स्पृशेदीषत्कालस्य हृदयं विदुः ॥ २०१ ॥
[4]सदंष्ट्राग्रं त्रिनेत्रं च जटामकुटमण्डितम् । युगं वा मूर्तिहस्तं [5]वाप्येवमेव प्रकल्पयेत् ॥ २०२ ॥
त्रिशूलं दक्षिणे [6]पूर्वे [7]कर्णान्तं [8]तत्समुद्धरेत् । परशुं परहस्ते तु [9]सूचिं वामे तु योजयेत् ॥ २०३ ॥
वामपार्श्वेऽपरं हस्तं[10] कर्तव्यं [11]हरपल्लवम् । [12]सूच्यग्रात्पूर्वसूत्रान्तं चतुर्दशाङ्गुलं भवेत् ॥ २०४ ॥
[13]कर्णमूलधृते हस्ते मणिबन्धान्तरं तथा । [14]हिक्कासूत्रात्तु मुष्टिस्थ[15]परशोद्व्यन्तरं मुखम् ॥ २०५ ॥
[16]हरपल्लवहस्ते त्वनामिकोष्णीषमन्विता । [17]कर्णान्तमणिबन्धान्तं शूलहस्तसमान्तरम् ॥ २०६ ॥

---

[1] cf. *Aṃśumatkāśyapa* 80, 5-12:

देवस्य दक्षिणं पादं पद्मपीठोपरि स्थितम् । प्रथमनृत्तमूर्तेस्तु दक्षिणस्थितपादवत् ॥
वामपादं तथोद्धृत्य कुञ्चितं तलमुद्धृतम् । अङ्गुष्ठमुद्धृताङ्घ्रेस्तु कालस्य हृदये न्यसेत् ॥
सदंष्ट्रास्यं त्रिणेत्रं च जटामकुटमण्डितम् । चतुर्हस्तसमायुक्तमष्टहस्तमथापि वा ॥
दक्षिणे पूर्वहस्ते तु शूलं कर्णान्तमुद्धृतम् । दक्षिणे परहस्ते तु परशुं वरदं तु वा ॥
वामे पूर्वकरं नाभिसीमान्तं सूच्यधोमुखम् । सूच्यग्रात्पूर्वसूत्रान्तं कला मन्वङ्गुलं तु वा ॥
कर्णाच्छूलधरे हस्ते मणिबन्धान्तरं तथा । वामे तु परहस्तं तु विस्मयं परिकल्पयेत् ॥
हिक्कासूत्रसमं टङ्ककरं तद्व्यन्तरं मुखम् । उष्णीषान्तं समुद्धृत्य विस्मयेऽनामिकाग्रकम् ॥
कर्णान्तमणिबन्धान्तं शूलहस्तसमान्तरम् । चतुर्हस्तं समाख्यातम्"

voir aussi *Ajitāgama*, 36, 258-259.

[2] B : स्थिति pour स्थित

[3] A : तदङ्गुष्ठसमं स्पृशेदीषत्कालस्य ; B : तदङ्गुष्ठसमं स्पर्शे कालस्य ; C : तदङ्गुष्ठे समं दीर्घकालस्य ; G : तदङ्गुष्ठसमं स्पृशेत्कालस्य

[4] A : सदंष्ट्रा भ्रान्तिनेत्रं च ; B : सदंष्ट्रा भ्रान्तनेत्रं च [5] A : वा एवमेव ; C : वा एवमेवं

[6] A : पर्वं pour पूर्वे ; B : पर्वे ; C : पुण्यं ; G : पूर्वं [7] B : कर्णान्ते ; G : कण्ठान्तं

[8] B : तत्समुत्सरेत् [9] A : सूचिर्वामेन योग्यकम् ; B : सूचिं वामेन योग्यकम् ; C, G : शुचिर्वामेन योगतम्

[10] Le mot हस्त se trouve ici au neutre au lieu du masculin

[11] A : हलपल्लवम् ; voir *paṭala* 32 *śloka* 13a [12] C : सुव्यग्रात् pour सूच्यग्रात्

[13] B : कर्णमूले धृते ; C, G : कण्ठमूलं धृते

[14] A : हिक्कामन्दाग्रमुष्टिस्थ ; B : हिक्कामन्दाग्निमुष्टिस्त ; C : हिक्कामदाङ्गयष्टिस्थ

[15] C : परशुवज्रकम् [16] A : हलपल्लवहस्ते तु : B : फलपल्लवहस्तेषु ; G : फलं पल्लवहस्ते तु

[17] G : कण्ठान्तं pour कर्णान्तं

[अष्टभुजकालारिरूपम्[1]]

अन्यदष्टभुजं[2] वक्ष्ये शूलं परशुवज्रकम् । खड्गं दक्षिणहस्ते तु विस्मयं खेटपाशकम् ॥ २०७ ॥
सूचिर्वामकरेषूक्तं[3] [4]विद्रुमाभासरौद्रकम् । अधस्ताच्छयितः कालः पादौ हस्तौ द्विनेत्रयुक्[5] ॥ २०८ ॥
[6]सदंष्ट्रं पाशपाणिं च [7]करण्डमकुटान्वितम् । असृग्धाराश्च [8]निष्क्रान्ता महाभीतिसमन्वितम् २०९
शाययेदूर्ध्ववक्त्रं तु [9]सपाशं हृदयेऽञ्जलिः[10] । [11]कालारिमूर्तिराख्याता कल्याणमथ वक्ष्यते ॥२१०॥

[कल्याणमूर्तिः[12]]

ललाटमध्यमाद्वामे तन्नेत्रस्यावसानके । वामनासापुटान्ते च हिक्कामध्ये तु लम्बयेत् ॥ २११ ॥

---

[1] cf. *Aṃśumatkāśyapa* 80, 12-16:

"अष्टहस्तमथ शृणु ॥
शूलं च परशुं वज्रं खड्गं दक्षिणहस्तके । विस्मयं खेटकं पाशं सूचिहस्तं च वामके ॥
विद्रुमस्य निभाकारं सर्वाभरणभूषितम् । कालहा मूर्तिराख्याता अधस्तात्काल उच्यते ॥
द्विभुजं च द्विपादं च सुदंष्ट्रं पाशपाणिनम् । करण्डमकुटोपेतमसृग्धारासुनिर्गमम् ॥
महाभयसमायुक्तं सपाशहृदयाञ्जलिम् । विकीर्णपादं मां दृष्ट्वा शाययेदूर्ध्ववक्त्रकम् ॥
कालहा मूर्तिराख्याता"

[2] A : अष्टाभुजं pour अष्टभुजं [3] A : सूक्तं pour षूक्तं ; C : युक्तं [4] B : विद्रुमासनरौद्रकम्
[5] G : धृक् pour युक् [6] A : संदष्ट pour सदंष्ट्रं [7] B : करण्डं कुक्कुटान्वितम्
[8] G : निष्कामत् pour निष्क्रान्ता [9] A, B : सपाद pour सपाशं
[10] B : हृदयाञ्जलिः pour हृदयेऽञ्जलिः [11] A : कालहा pour कालारि

[12] cf. *Aṃśumatkāśyapa* 71, 1-19:

अथ कल्याणमूर्तेस्तु लक्षणं वक्ष्यतेऽधुना । ललाटमध्यमाद्वामे वामनेत्रावसानके ॥
वामनासापुटान्ते च हिक्कामध्ये तु लम्बयेत् । दक्षिणे नाभिमध्यात्तु वेदवह्न्यङ्गुलं तु वा ॥
नीत्वा हिक्काङ्घ्रिगुल्फस्य मध्ये सूत्रं प्रलम्बयेत् । अन्तरं मानसूत्रं च समभङ्गं यथा तथा ॥
सुस्थितं वामपादं तु दक्षिणं कुञ्चितं भवेत् । दक्षिणे पूर्वहस्तं तु गौरीदक्षिणहस्तधृत् ॥
वरदं वामहस्तं तु परहस्तद्वये ततः । दक्षिणे परशुं वामे परे कृष्णमृगीधरम् ॥
जटामकुटसंयुक्तं सर्वाभरणभूषितम् । देवं प्रवालवर्णाभं देवेशस्य विशेषतः ॥
सस्यश्यामनिभा देवी प्राग्वन्मानादिसंयुता । उत्पलं वामहस्तेन धृतं दक्षिणहस्तकम् ॥
शम्भोर्हस्तेन संग्राह्य लज्जया लम्बनान्विता । पार्वत्यानुगता श्रीर्भूः सर्वाभरणभूषिता ॥
हस्ताभ्यां संस्पृशेदेते गौर्यास्तु[हि]कटिं द्विज । देवाग्रे कारयेत्कुण्डे होमकर्म प्रजापतिः ॥
शम्भोर्वै स्तनसीमान्तं प्रजेशस्योदयं बुधः । चतुर्भुजं चतुर्वक्त्रं सर्वाभरणभूषितम् ॥
कुण्डिकां साक्षमालां च वामेऽवामे धरेत्परे । स्रुक्स्रुवौ पूर्वहस्ते तु धरेद्वामेतरे क्रमात् ॥
उत्तराभिमुखासीनं पद्मपीठे प्रजापतिम् प्राग्गौ देवीदेवेशौ देवी देवस्य दक्षिणे ॥



AṢṬABHUJA – KĀLĀRI



KALYĀṆAMŪRTI

सव्ये [1]च नाभिमध्ये तु सूत्रान्तं गुणमात्रकम् । स्थिताङ्घ्रिगुल्फमध्ये[2] तु पूर्वसूत्रं [3]प्रसारयेत् ॥२१२॥

द्व्यन्तरं च [4]तथांशं च समभङ्गं [5]यथा कुरु । कुञ्चितं दक्षिणं पादं वामपादं तु [6]सुस्थितम् ॥ २१३ ॥

[7]सव्यपूर्वकरेणैव देव्याः सव्यकरं ग्रहेत् । वरदं वामहस्तं तु [8]परहस्तद्वयोरपि ॥ २१४ ॥

परशुं सव्यहस्ते तु मृगं वामे तु [9]संधरेत् । जटामकुटसंयुक्तं दिव्याभरणभूषितम् ॥ २१५ ॥

दिव्यवस्त्रैरलंकृत्य [10]प्रवालसदृशप्रभम् । श्यामवर्णनिभां गौरीं दुकूलवसनान्विताम् ॥ २१६ ॥

उत्पलं वामहस्ते तु [11]मकुटं केशबन्धितम् । [12]सुस्थितं वामपादं [13]चापीतरं कुञ्चितान्वितम् ॥ २१७ ॥

ईषल्लम्बितवक्त्राढ्यां[14] दक्षिणे तु व्यवस्थिताम् । [15]तस्याश्चैवापरे पार्श्वे [16]श्रीभूमी चैव [17]कारयेत् ॥

तयोर्हस्तोभयाभ्यां तु [18]गौर्यास्त्वपरं संस्पृशेत् । देवस्याग्रे [19]च कुण्डे तु जुहुयात्तु प्रजापतिः ॥ २१९ ॥

होमस्योत्तरदेशे तु [20]हरिर्वर्धनि[21]संयुतः । देवस्य वरदे हस्ते [22]गौरीं ददेत्तदम्बुना ॥ २२० ॥

शक्रादिसर्वदेवाश्च[23] शक्तियुक्ता वृताः स्थिताः[24] ।

---

दक्षिणाभिमुखो विष्णुर्होमस्योत्तरदिक्स्थितः । शम्भोर्नासाग्रसीमान्तं श्रेष्ठं हीनं स्तनान्तकम् ॥
तयोर्मध्येऽष्टभागेन नवधा केशवोदयम् । श्यामवर्णः समाभङ्गः शङ्खचक्रं परे करे ॥
हिरण्यकरकेणापः पूर्वहस्तद्वयोरपि । संग्राह्य वरदे हस्ते दद्यादुदकपूर्वकम् ॥
अनादिगोत्रसंभूतः स शिवः परमेश्वरः । आदिगोत्रामुमां गौरीं तथैवास्मै ददाम्यहम् ॥
इत्युक्त्वा वरदे हस्ते दद्याद्भक्त्योदकं हरिः । अष्टलोकेशविद्येशाः सिद्धयक्षगणादयः ॥
ऋषयश्चैव गन्धर्वा मातरश्चान्यदेवताः । ततच्छक्तिसमोपेता हृदयाञ्जलिसंयुताः ॥
संभ्रान्तमनसोपेताः संवीक्ष्य परितः स्थिताः । एवं कल्याणमूर्तिस्तु........ ॥

voir aussi *Ajitāgama*, 36, 260-267.

1 A : तु pour च 2 A : मध्यं pour मध्ये 3 C, G : वि pour प्र
4 B : तथेशश्च 5 A : तथा pour यथा 6 C, G : संस्थितम्
7 A : सव्ये पूर्वे pour सव्यपूर्व 8 A : त्रिपा pour पर
9 A : संस्मरेत् 10 A : प्रवालसदृशं विभुम् 11 C : मुकुटं 12 A : संस्थितं ; C : सस्मितं
13 A : तु इतरं pour चापीतरं 14 A, B : वस्त्राढ्यां pour वक्त्राढ्यां 15 A : तस्यां चैव परे
16 A : श्रीभूमिं चैवं ; B : स्त्रीभूमिश्चैव ; G : श्रीभूमिश्चैव 17 C : तारयेत्
18 A : गौर्या स्वपरसंस्पृशौ ; B : गौर्या स्वपरसस्पृशौ ; C : भार्या स्वपरसंस्पृशौ 19 A : तु pour च
20 A : हरिर्वर्धनसंधृतः
21 La forme grammaticale correcte est वर्धनी ; mais le mètre ne serait pas respecté.
22 A : गौरीदत्तं pour गौरीं ददेत्
23 A : सर्वदेवश्च pour सर्वदेवाश्च ; B : सर्वे देवाश्च ; G : दिव्यदेवाश्च
24 Il semble qu'il y ait là une lacune; voir page 75 note 9

[[1]नृत्तरूपम् ; तत्र भुजङ्गत्रासनृत्तम् ]

भुजङ्गत्रासमुद्दण्डमत्युद्दण्डं त्रिधा भवेत् ॥ २२१ ।
[2]त्र्यक्षं चतुर्भुजं शान्तं द्विपादं [3]च [4]जटाधरम् । [5]सुस्थितं दक्षिणं पादमपस्मारोपरि स्थितम् ॥२२२
तस्य आन्वन्तमुद्धृत्य[6] वामपादं [7]तिरस्तलम् । पताका [8]दक्षिणे हस्ते [9]वामहस्तं तु वर्तितम् ॥२२३॥
[10]प्रकोष्ठे तु [11]पताकायां सपत्रं पन्नगं न्यसेत् । [12]डमरुं सव्यहस्ते तु वामहस्तेऽग्निमुद्धरेत् ॥ २२४ ॥
[13]कर्णान्तं दक्षिणे सूचि हिक्कान्ताग्निकराग्रकम्[14] । हिक्कान्तं स्यात्पताकाग्रं नाभ्यन्तं जानुरुद्धृतः ॥
तज्जानुपरिवृत्तस्य[15] मणिबन्धान्तरं [16]मनुः । [17]तज्जङ्घादक्षिणे हस्ते [18]मध्याग्रान्तं मुखं भवेत् ॥ २२६ ॥

---

[1] cf. *Kāmikāgama* II 45, 1-13a:
नृत्तमूर्तिप्रतिष्ठां तु वक्ष्ये तल्लक्षणान्विताम् । चतुर्भुजस्त्रिणेत्रश्च संविकीर्णजटायुत: ॥
जटामकुटसंयुक्तो वक्रनागफणावृत: । पृष्ठगा: पार्श्वगास्ता: स्यु: पञ्चाद्येकैकवृद्धित: ॥
त्रिंशत्संख्यावसाना: स्युर्जटास्ता: सान्तरालका: । धुत्तूरारग्वधार्कादिपुष्पयुक्ता: सपिङ्गला: ॥
कृताञ्जलिपुटोपेतजाह्नव्या दक्षिणस्थया । बालचन्द्रेण संयुक्तो वामपार्श्वस्थितेन च ॥
युक्तो वकुलमालाभिर्मुक्तादामोरगादिभि: । व्याघ्राजिनाम्बरो दीप्त: सर्वाभरणभूषित: ॥
वामदोर्मूलमालम्बिद्वीपिचर्माम्बरान्वित: । दिव्याम्बरान्वितो वापि मृगाजिनयुतोऽपि वा ॥
करस्थब्रह्मकपालेन नानापुष्पैरलंकृत: । धृतवाराहदन्ताग्र: शार्दूलनखकच्छप: ॥
शाङ्खिकैर्मणिभि: प्रोतमालया हृदि भूषित: । स्थितो दक्षिणपादेन वामेनोपरिवर्तिना ॥
कुञ्चितावर्तमानाङ्घ्रि: सुप्रसारिततत्कर: । अम्बिकामुखबिम्बाब्जभ्रमरीकृतलोचन: ॥
आबद्धकिङ्किणीयुक्तस्तद्वन्नूपुरशोभित: । वामदक्षिणकर्णाढ्यपत्रिकानककुण्डल: ॥
दक्षाभयकरस्थेन भुजङ्गेनोत्फणेन च । वामापरकरस्थेन वह्निना दक्षकेन तु ॥
डिण्डिमेन समायुक्त उपवीतेन संयुत: । गोक्षीरधवलप्रख्य आदित्याङ्गलभङ्गयुक् ॥
नानासर्पसमायुक्तस्त्वपस्मारोपरि स्थित: ।

voir aussi *Ajitāgama* 36, 228b-233

[2] A : त्रियक्षं pour त्र्यक्षं [3] A : तु pour च [4] A : जटाधनु:; C : जटातनम् ; G : जटाननम्

[5] A : संस्थितं [6] B : उत्सृज्य pour उद्धृत्य [7] A : त्र्यकरतलम् ; B : त्रिकराङ्गुलम् [8] A : दक्षिणं हस्तं

[9] Le ms. B omet la portion entre le premier *pāda* du *śloka* 223b et le second *pāda* du *śloka* 224b et lit: पताका दक्षिणे हस्ते वामहस्तेऽग्निमुद्धरेत्

[10] B omet le *śloka* 224 [11] C : पदार्कायां [12] A : डमरुकं pour डमरुं

[13] A : कर्णादं ; C : अर्कान्तं ; G : कण्ठान्तं

[14] A : करागृहम् pour कराग्रकम् ; C : कशागृहम् ; G : कशाग्रहम्

[15] A : परिवर्तस्य pour परिवृत्तस्य [16] C, G . मनुम् pour मनु:

[17] A : तज्जङ्घाद्दक्षिणे ; C, G : तज्जङ्घाद्वर्तिते [18] B : मध्याकान्तं



BHUJAṄGATRĀSA-NṚTTI

अर्धचन्द्रं[1]तु धुत्तूरं नाग[2]स्फीतशिरस्तथा । बकपक्षसमायुक्तं भानुपुष्पयुतं[3] शिरः ॥ २२७ ॥
[4]तनवस्तु जटाभारा जटाग्रे जाह्नवीं धरेत्[5]। [6]दक्षिणे तां विना वापि शिरश्चक्रसमन्वितः ॥ २२८ ॥
कुण्डलं दक्षिणे कर्णे पत्रं वै वामकर्णके । दक्षिणे [7]कर्णपुष्पं वाप्युभयोरपि चैव वा ॥ २२९ ॥
व्याघ्रचर्मोत्तरीयं च कृष्ण[8]चर्माम्बरैर्युतम् । प्रभामण्डलसंयुक्तमपस्मारोपरि स्थितम् ॥ २३० ॥

[[9]नतमानं सूत्रपातश्च]

धर्मरुद्रार्कमात्रं वा नतमानं विधीयते । प्रभामण्डलमध्यात्तु ललाटोष्णीषमध्यमात् ॥ २३१ ॥
नीत्वा तु दक्षिणे व्योममात्रं[10] नेत्रान्तमाश्रितम् । सव्यनासापुटान्ते च[11] हिक्कायां[12] नाभिमध्यमे २३२
[13]वामोर्वभ्यन्तरे [14]लम्ब्यं [15]सव्याङ्घ्रिगुल्फमध्यमे । लम्बितं पूर्वसूत्रं [16]स्याल्ललाटसूत्रकान्तरम् ॥२३३
[17]गुल्फसूत्रान्तरं चैव वेद[18]मात्रमिति स्मृतम् । हिक्कामध्यात्तु[19] सूत्रान्तं[20]वसुमात्रमुदाहृतम् ॥२३४

---

1 B : च pour तु  2 B : शीत pour स्फीत ; G : वीत  3 G : धृतं pour युतं

4 A, G : तनवस्तु जटाभारं जटाग्रे ; C : तनवस्ततटाभारजटाग्रे

5 Pour la définition de la जाह्नवी voir *Kāmikāgama* II 46, 45-47a:

देवस्य वक्त्रमानेन जाह्नव्यायाम उच्यते । द्विभुजा च त्रिणेत्रा च करण्डमकुटान्विता ॥
सर्वाभरणसंयुक्ता कृताञ्जलिपुटान्विता । ऊर्ध्वभागादधोभागं तोयाकारेण कारयेत् ॥
गङ्गादेव्यानया देवः संयुक्तो वा विवर्जितः ।

6 A : दक्षिणे तां पिना वाचि ; B : दक्षिणे तापिनो वापि  7 B, G : पुष्पमालां pour कर्णपुष्पं

8 C : वर्ण pour चर्म

9 cf. *Aṃśumatkāśyapa* 68, 4b-8a:

प्रागुक्तविधिना ग्राह्य बिम्बमानं द्विजोत्तम । उत्तमदशतालेन सर्वाङ्गं परिकल्पयेत् ॥
भानुरुद्रदशांशेन तुङ्गे नृत्तानतं भवेत् । उष्णीषमध्यमात्सव्ये ललाटान्मध्यदक्षिणे ॥
नीत्वा शिवाङ्गुलं सव्ये नेत्रान्ते च पुटान्तके । हनोः सव्ये तु हिक्कायां मध्ये नाभेश्च मध्यमे ॥
वामोर्वाभ्यन्तरे चैव स्थिताङ्घ्रौ गुल्फमध्यमे । प्रभामण्डलमध्यात्तु पूर्वसूत्रं प्रलम्बयेत् ॥

10 A, B, C : मात्रां pour मात्रं  11 A : पुटं चैव pour पुटान्ते च  12 A : हिक्काया pour हिक्कायां

13 B, C, G : वामोर्वभ्यन्तरे  14 C : लङ्घ्य ; G : लम्ब्य

15 A : सव्याङ्घ्री pour सव्याङ्घ्रि ; B : सव्याङ्घ्रेः  16 B : स्याल्ललाटे सूत्रयेऽन्तरम्

17 cf. *Aṃśumatkāśyapa* 68, 8b-10:

ललाटात्सूत्रनीत्रं तु युगांशं वार्धहीनकम् । गुल्फात्सूत्रान्तरं चैव तद्वदेव विधीयते ॥
हिक्कामध्यात्तु सूत्रान्तं सार्धं सप्ताष्ट वाङ्गुलम् । मकुटे बकपक्षाग्रात्सार्धाष्टांशं तथैव च ॥
ऊर्ध्वकुक्षिं स्पृशेत्पूर्वसूत्र एवं प्रकल्पयेत् ।

18 A : सूत्र pour मात्र  19 C : मध्यं तु pour मध्यात्तु  20 C, G : सूत्रान्तर pour सूत्रान्तं

[1]सूत्रात्तु बकपक्षाग्रे[2] मूर्तिरङ्गुलमिष्यते । [3]स्पृष्टोर्ध्वकुक्षिमालम्ब्यं [4]युक्त्या शेषान्तरं विदुः ॥ २३५ ॥
[5]सूत्राद्वर्तितबाह्वग्रं[6] [7]ससप्ततत्कराग्रजम् । [8]तस्मादपरबाह्वग्रं वेदमात्रमुदाहृतम् ॥ २३६ ॥
[9]तस्मादनलहस्ताग्रं [10]चत्वारिंशतिमात्रकम् । तत्सूत्रात्सव्यबाह्वग्रं विंशत्यङ्गुलमिष्यते ॥ २३७ ॥
[11]तस्माड्डमरुकं हस्ते मणिबन्धस्य [12]बाह्यके । त्रिंशत्यङ्गुलमाख्यातं चत्वारिंशति वाङ्गुलम् ॥२३८॥
[13]हिक्कान्तमणिबन्धोर्ध्वं [14]सूच्यग्रात्कर्णसीम तु । [15]सूच्यग्रात्कर्णबाह्यान्तं चत्वारिंशतिमात्रकम् ॥२३९
सपञ्चचत्वारिंशद्वा [16]पञ्चाशद्वान्तराङ्गुलम् । [17]पताका[18]तलमध्यात्तु सूत्रमर्कद्वयाङ्गुलम[19] ॥२४० ॥
[[20]तन्मध्यमाङ्गुलाग्रं तु हिक्कासूत्रसमोद्धृतम् ।] [21]तद्धस्ते कूर्परं सूत्राच्चत्वारिंशतिमात्रकम् ॥२४१

---

[1] A : सूत्रं तु [2] A : अग्र pour अग्रे ; C, G : अग्रं [3] A : स्पृष्टोर्ध्वं pour स्पृष्टोर्ध्व

[4] A : युक्ता pour युक्त्या

[5] cf. *Aṃśumatkāśyapa* 68, 11-12, 16b-19 et 23:
तत्सूत्राद्दोलबाह्वग्रमर्धाधिककलाङ्गुलम् । तस्मादपरबाह्वग्रं युगाङ्गुलमुदाहृतम् ॥
तस्मादग्निकराग्रान्तं साष्टत्रिंशाङ्गुलं तु वा । चत्वारिंशतिमात्रं वा" .......... ॥
दक्षिणे पूर्वसूत्रात्तु बाह्वग्रं विंशदङ्गुलम् । तस्माड्डमरुके हस्ते मणिबन्धस्य बाह्यकम् ॥
अष्टाविंशतिमात्रं वा त्रिंशदङ्गुलमेव वा । चत्वारिंशतिमात्रं वा वामे संख्याः क्रमान्नयेत् ॥
तद्धस्ते मणिबन्धोर्ध्वं हिक्कासूत्रसमं भवेत् । डमरुके मध्यपीठस्य सूचि कर्णान्तमुद्धृतम् ॥
तर्जन्यग्रं तु सूचिः स्यात्तर्जनी ऋजुका भवेत् । सूच्यग्रात्कर्णसीमान्तं चत्वारिंशतिमात्रकम् ॥
सपञ्चचत्वारिंशच्च पञ्चाशन्मात्रकं तु वा ।

[6] B : सूत्राद्वर्तनबाह्याग्रं [7] A : सप्तदशकराग्रजम् [8] A : तस्मादापर pour तस्मादपर

[9] Les manuscrits C et G omettent les *śloka* 237 et 238a

[10] La forme grammaticale correcte est चत्वारिंशद्

[11] B : तस्माड्डमरुघं हस्ते [12] A : बाह्यकम्

[13] B : हिक्कान्तमणिबन्धार्धं ; C : हिक्कान्तं मणिबन्धोच्चं [14] C : सूच्यग्रं कर्णसीमकम्

[15] B : मध्याग्रात् pour सूच्यग्रात् [16] C : पञ्चाशद्व्यन्तराङ्गुलम्

[17] cf. *Aṃśumatkāśyapa* 68, 24b-26a:
दक्षिणे पूर्वहस्तं तु अभयं परिकल्पयेत् । प्राक्सूत्रादभये हस्ते मध्यं भानुद्वयाङ्गुलम् ॥
तन्मध्यमाङ्गुलाग्रं तु हिक्कासूत्रसमोद्धृतम् । सूत्रात्कोर्परनीत्रं च चत्वारिंशतिमात्रकम् ॥

[18] B : पताकि pour पताका ; C : पदार्क

[19] Après 240b les mss A, B et C ajoutent les demi-*śloka* 243b et 244a.

[20] Les Mss A, B et C omettent le demi-*śloka* 241a

[21] A : तद्धस्तैः कोर्परं pour तद्धस्ते कूर्परं

[1]सूत्रात्कक्षान्तरं तत्र भान्वङ्गुलमिति स्मृतम्[2] । सूत्रान्मध्योदरे[3] वामे नीव्रं वेशाङ्गुलं भवेत् ॥२४२ ॥
वामस्फिक्पिण्डनीव्रं तु सूत्राद्वै द्वादशाङ्गुलम् । सूत्रात्कुञ्चितजानोस्तु[4] द्व्यन्तरं तु दशाङ्गुलम् ॥२४३॥
स्थिताङ्घ्रिजानोर्वामाङ्घ्रिजानुनीव्रं कलाङ्गुलम् । [5]स्थिताङ्घ्रेर्वामपार्ष्ण्यन्तं वेदरुद्राङ्गुलं भवेत् ॥ २४४ ॥
[6]स्थितजानूद्धृतपार्ष्णेः पञ्चविंशतिमात्रकम् । [7]कूर्पराड्डोलहस्तस्य नाभिरेकादशाङ्गुलम् ॥ २४५ ॥
तद्धस्ते मणिबन्धात्तु वामजान्वन्तरं रुरो[8] । वसुनन्दरुदशांशं वा जङ्घामध्याग्रकान्तकम् ॥ २४६ ॥
नवधर्माङ्गुलं वापि रुद्राङ्गुलमथापि वा । डोलादभयहस्तान्तं दशनन्दाङ्गुलं तु वा ॥ २४७ ॥
[9]तत्रानुक्तानि नीव्राणि यथासौन्दर्यमाचरेत् । वामे गौरीसमायुक्तं [10]चर्ममुण्डासमायुतम्[11] ॥ २४८ ॥

---

[1] cf. *Aṃśumatkāśyapa* 68, 28-39:
सूत्रात्कक्षान्तरं सव्यपार्श्वे द्वादशमात्रकम् । सूत्रान्मध्योदरं वामे नवाङ्गुलमुदाहृतम् ॥
वामस्फिक्पिण्डनीव्रं तु सूत्रादष्टादशाङ्गुलम् । सूत्रात्कुञ्चितजानोस्तु द्व्यन्तरं तु दशाङ्गुलम्
नवाङ्गुलं चाष्टमात्रं च जानुनीव्रं यथाक्रमम् । भानुरुद्रदशाङ्गुल्यं नतमानेन कल्पयेत् ॥
स्थिताङ्घ्रिजानोर्वामाङ्घ्रिजानुनीव्रं कलाङ्गुलम् । त्रिपञ्चमनुमात्रं वा जान्वोरन्तरमान्तरम् ॥
स्थिताङ्घ्रिनलकामध्याद्वामपार्ष्ण्यन्तरं बुधः । सवेदचत्वारिंशच्च त्वङ्गुलं तु विधीयते ॥
ससप्तषट्चत्वारिंशदङ्गुलं वाथ तद्भवेत् । स्थितजानूद्धृतपार्ष्ण्योश्चतुर्विंशतिमात्रकम् ॥
त्रयस्त्रिंशतिमात्रं वा जानोः पार्ष्ण्यन्तरं द्विधा । उद्धृताङ्घ्रितलान्तं च स्थितजानूर्ध्वतः समम् ॥
उद्धृताङ्घ्रेस्तु जानूर्ध्वं नाभिसूत्रसमं भवेत् । कोर्पराड्डोलहस्तस्य नाभिसूत्राद्दशाङ्गुलम् ॥
एकादशाङ्गुलं वाथ कल्पयेत्कोर्परान्तकम् । तद्धस्ते मणिबन्धात्तु वामजानोस्तु द्व्यन्तरम् ॥
दशाङ्गुलं वाथ कर्तव्यं नवाङ्गुलमथापि वा । डोलहस्ते तु मध्यस्थादङ्गुलाग्राद्विशेषतः ॥
वामपादे तु जङ्घान्तमन्तरं धर्ममात्रकम् । नवाङ्गुलान्तरं वापि रुद्राङ्गुलमथापि वा ।
डोलहस्ताभयान्तं तु द्व्यन्तरं तु दशाङ्गुलम् । अन्यान्युक्तानि नीव्राणि यथासौन्दर्यमाचरेत् ॥

[2] Le ms. C omet les *śloka* 242 et 243

[3] A : उदरं pour उदरे ; G : अन्तरं   [4] A : जान्वोस्तु pour जानोस्तु

[5] B omet le demi-*śloka* 244b

[6] B : स्थितजानूर्ध्वपार्ष्ण्यन्तं; C : स्थितवामोद्धृतं पार्ष्णेः ; G : स्थितं जान्वोद्धृतं पार्ष्णेः

[7] A : कोर्पर pour कूर्पर

[8] A : गुरोः pour रुरो   [9] C, G : अत्र pour तत्र   [10] A : धर्मपिण्डि pour चर्ममुण्डा ; B : चर्ममुण्डी C : चर्ममुण्डि

[11] cf. *Kāmikāgama* II 46, 49b-50:
"पार्श्वगां देवीं कल्पयेत्तद्विधानतः ॥
कुर्याद्भृङ्गीरिटिं वाथ भद्रकालीमथापि वा । भुजङ्गत्रास आख्यातः"

[उद्दण्डनृत्तम्[1]]

भुजङ्गत्रासमाख्यातमुद्दण्डमधुनोच्यते । त्रियक्षं चाष्टहस्तं च द्विपादं क्षीरसन्निभम् ॥ २४९ ॥
जटामकुटसंयुक्तं [2]नागेन्द्रकं च धुत्तुरम् । नानावर्णाम्बरैर्युक्तं सर्वाभरणसंयुतम् ॥ २५० ॥
[3]सवक्रं दक्षिणं पादमपस्मारोपरि स्थितम् । उद्धृतं वामपादं [4]चाप्युष्णीषोर्ध्वार्कमात्रकम् ॥ २५१॥
[5]अभयं शूलपाशं च डमरुं दक्षिणे करे । [6]घण्टां चैव कपालं च [7]डोलं चैवाग्निपात्रकम् ॥ २५२ ॥
अङ्गुष्ठमुद्धृताङ्गुष्ठस्तु [8]कर्णाद्वादुद्वयाङ्गुलम् । [9]जङ्घामध्यात्तु [10]बाहन्तर्भान्वङ्गुलमुदाहृतम् ॥२५३ ॥
[11]जानोस्तु डोलाबाह्वग्रं द्वादशाङ्गुलमिष्यते । लम्बान्तराग्रसूत्रस्य [12]पार्श्वादेवं विधीयते ॥ २५४ ॥
वामे गौरीसमायुक्तमुभयोर्हस्तयोरपि । स्कन्दं धृत्वा तु [13]लज्जाढ्यामीषद्वै लम्बिताननाम् । २५५ ॥

---

[1] cf. *Amśumatkāśyapa* 68, 78-81:

उष्णीषोर्ध्वेऽर्कमात्रान्तं सव्यपादं समुद्धरेत । सवक्रं वामपादं तु अपस्मारोपरि स्थितम् ॥
भुजाष्टकसमायुक्तमेतत्पञ्चकमुच्यते । अभयं शूलपाशं च डमरुं दक्षिणे करे ॥
कपालमग्निपात्रं च घण्टां हस्तिकरोपमम् । गजहस्तोपमं हस्तं प्रसार्य दक्षिणानुगम् ।
यद्वस्त्रमनृत्तस्य पूर्वसूत्रं प्रसारयेत् । चिह्नं पञ्चमनृत्तस्य एवमेवेति विद्यते ॥

cf. *Śritattvanidhi* (éd. Bombay) pp. 66-67:

अथ संहारताण्डवध्यानम् —

त्रिणेत्रं चाष्टहस्तं च सुविकीर्णजटान्वितम् । कुञ्चितं वामपादं तमपस्मारोपरि स्थितम् ॥
उद्धृतं दक्षिणं पादं व्याघ्रचर्मोत्तरीयकम् । अभयं शूलपाशौ च डमरुं दक्षिणे करे ॥
कपालं चाग्निपात्रं च दधं[दधद्?] विस्मयहस्तकम् । गजहस्तोपमं वामे चतुर्दोर्भिः समन्वितम् ॥
गजहस्तोपमं सव्यमपसव्यानुगं तथा । नन्दीशं सव्यभागे तु वामे गौरीसमन्वितम् ॥
सप्तमं नृत्तमाख्यातं जगद्वृद्धिकरं भवेत् ॥ शिष्टं प्रथमनृत्तवत् ॥ गौरवर्णः ॥

voir aussi *Ajitāgama* 36, 236-237.

[2] A : नागेन्वर्कंधरूयुतम् ; B : नागेन्द्रकंधरूपकम् ; C : नागे यार्कं च घुत्तुरम् ; G : नागोर्वार्कं च धुर्धुरम्
[3] A : स्वकन्दं pour सवक्रं ; C, G : सचक्रं [4] A : तु उष्णीष pour चाप्युष्णीष
[5] A : अभयं शूलकपालं च ; C, G : अभयाङ्कशपाशं च [6] B : खण्डां [7] A : डोलां
[8] G : कण्ठो pour कर्णाद् [9] C : जङ्घामध्यं तु ; G ; जङ्घामध्ये तु [10] B : जान्वन्तं pour बाह्वन्तर्
[11] A : जान्वोस्तु [12] A : पाश्वदेव pour पार्श्वादेवं ; B : पार्श्वदिव ; C : प्रारदेवं तु ; G : पृथग्देवी
[13] A : लज्जास्याम् pour लज्जाढ्याम्



UDDAṆḌANṚTTA



ATYUDDAṆḌA NṚTTA

[अत्युद्दण्डनृत्तम्[1]]

उद्दण्डमेवमाख्यातम् ; अत्युद्दण्डमथोच्यते । [2]स्वतः स्ववस्थितं वामपादमब्जेऽन्यमूर्ध्वगम्[3] ॥२५६॥

[4]द्विरष्टकसमायुक्तं जटामकुटमण्डितम् । डमरुकाभयवज्रं[5] च शूलं पाशं तथैव च ॥ २५७ ॥

[6]टङ्कं दण्डं च नागं च दक्षिणेऽष्टभुजे[7] भवेत् । [8]डोलं गजोपमं चाग्निं मिथुनं वलयं तथा ॥ २५८ ॥

वृषद्वयं च घण्टां च कपालं वामपार्श्वके । [9]प्रागुक्तं पूर्वसूत्रं तु वामपार्श्वे प्रसारयेत् ॥ २५९ ॥

[10]नीव्रं वेदांशतः सर्वे[11] प्रागिवैव प्रकल्पयेत् । वामपार्श्वे स्थितं स्कन्दं [12]सव्यहस्तोद्गतं नतम ॥२६०

---

[1] cf. *Aṃśumatkāśyapa* 68, 83-86a:

दोर्भिः षोडशभिर्युक्तं वामे गौरीसमायुतम् । हस्ताभ्यामुद्धृतं स्कन्दं स्तनं तस्य प्रसारितम् ॥

अभयं शूलपाशं च खड्गं डमरुकं ध्वजम् । वेतालं सूचिहस्तं च दक्षमष्टकरं भवेत् ॥

अनलं गजहस्ताभं खेटकं विस्मयं तथा । घण्टां चैव कपालं च क्षुरिकां सूचिमेव च ॥

वामे त्वष्टभुजा ख्याताः शेषं पञ्चमनृत्तवत् ।

cf. *Śritattvanidhi* (éd Bombay) p.66:

दोर्भिः षोडशभिर्युक्तं वामे गौरीसमाश्रितम् । स्कन्दं दक्षिणपार्श्वे तु सव्यहस्ते धृताञ्जलिम् ॥

अभयं डमरुं चैव वज्रं शूलं च बिभ्रतम् । पाशं टङ्कं तथा दण्डं नागं वै दक्षिणे करे ॥

सव्यानुगं करं चैव वामे पूर्वकरं तथा । अनलं पुस्तकं चैव वरदं केतुखेटकम् ॥

घण्टां चैव कपालं च वामपार्श्वेऽष्टभिः करैः । सर्वलक्षणसंयुक्तं शेषं प्रथमनृत्तवत् ॥

त्रैपुरं ताण्डवं प्रोक्तम् ॥ गौरवर्णः ।

cf. *Śilparatna* II 22, 53-57:

दोर्भिः षडङ्गसंयुक्तं [षोडशभिर्युक्तं?] वामे गौरीसमायुतम् । स्कन्दो भयात्कराभ्यां तु मातुः स्तनहृदोदरात् ॥

निपीडय वा कराभ्यां तु वामभागोद्धृताञ्जलिम् । एवं गौरी निरीक्ष्येशं भीत्यातिस्नेहविस्मयात् ॥

अभयं डमरुं चैव वज्रं शूलं तथैव च । पाशं टङ्कं तथा दण्डं नागं वै दक्षिणे करे ॥

सजानुगकरं डोलं वामं गजकरोपमम् । अनलं मिथुनं चैव वलयं केतुमेव च ॥

घण्टां चैव कपालं च वामपार्श्वेऽष्टहस्तके । पादौ पञ्चमनृत्तस्य विधिवत्तद्विधीयते ॥

[2] C : सपादं सुस्थितं ; G : सपदं सुस्थितं [3] B : अन्यमूर्धगम् pour अन्यमूर्ध्वगम्

[4] C, G : भुजाष्टक pour द्विरष्टक [5] C : वक्त्रं pour वज्रं [6] A : टङ्कं च दण्डनागं च

[7] A : भुजं pour भुजे [8] A : डोलागजोपपश्चाग्निमिथुनं ; C : डोलं गजेन पश्चाग्नि [9] A : प्रागुक्तपूर्वसूत्रं तु

[10] A : नीत्रे वेदांशमः सर्वे ; B : नीत्रे वेदांशभः सर्वे

[11] La forme grammaticale correcte est सर्वस्मिन्

[12] A : सव्यहस्ताज्जनानता ; B : सव्यहस्तं ; C : सव्यहस्ता जनानता ; G : सव्यहस्ता जनानतम्

करण्ड[1]मकुटोपेता सर्वाभरणभूषिता । [2]गौरी चैवं तु[3] वामे तु ह्यन्यत्र चर्ममुण्डनी ॥ २६१ ॥
नृत्तं करोति [4]स ह्येवमृषयश्चामराः स्थिताः । नृत्तमेवं समाख्यातं भिक्षाटनमथ शृणु ॥ २६२ ॥

[भिक्षाटनलक्षणम्[5]]

पादयोः पादुकोपेतं वामपादं तु सुस्थितम् । गमनोत्सुकमन्यं तु ह्यीषदुद्धृतपार्ष्णिकम्[6] ॥ २६३ ॥
[7]सुविकीर्णजटाभारं जटामण्डलमेव वा । [8]कोपिनं वाथवानन्द[9]नानानागैश्च भूषितम् ॥ २६४ ॥
[10]सव्ये पूर्वकरं कृष्णमृगाढ्यं वेशमुद्रया । कपालं तु धरेद्वामे [11]ब्रह्मणस्तूर्ध्वमूर्धजम् ॥ २६५ ॥
[12]डमरुं दक्षिणे त्वन्ये[13] [14]वामे त्वन्यच्च पिञ्छभृत् । सितवस्त्रोत्तरीयं वा [15]नागं वा हरिणीत्वचम् ॥ २६६
द्विभुजं वाथ कर्तव्यं विना पिञ्छमृगाढ्यकम् । डमरुकं विना शूलं तत्करेणैव धारयेत् ॥ २६७ ॥
[16]शूलाग्रेण धरेद्दैत्यं दैत्येन्द्रस्य शिरोऽथवा । पूर्वसूत्रप्रसारं[17] तु कङ्कालस्याग्रकस्य च ॥ २६८ ॥
एवं भिक्षाटनं प्रोक्तम्; कङ्कालमथ-वक्ष्यते ।

[कङ्कालक्षणम्[18]]

रक्तकञ्चुकबद्धाङ्गं जटामकुटमण्डितम् ॥ २६९ ॥

---

[1] C, G : मुकुट pour मकुट [2] C et G omettent le demi-*śloka* 261b
[3] A : गौरीमेवं तु ; B : गौरीमेव तु [4] A : सच्चैवम् pour सह्येवम्
[5] cf. *Kāraṇāgama* I 11,351-356a:

त्रिणेत्रं चतुर्भुजं नग्नरूपं किञ्चित्स्मिताननम् । आवृतालंकृताभङ्गि पादे पादुकसंयुतम् ॥
दक्षिणे तु कराग्रं तु हरिणास्यानुगं भवेत् । दक्षिणावरहस्तं तु डमरुक्युतं भवेत् ॥
वामे कपालहस्तं तु अपरं पिञ्छधारिणम् । कुञ्चितं दक्षिणं पादं वामपादं तु सुस्थितम् ॥
सभङ्गस्थानकं कुर्याद्गमनोत्सुकरूपकम् । कपालोपेतहस्तस्य पृष्ठं नाभिसमं भवेत् ॥
मणिबन्धाच्च नाभेस्तु द्वयन्तरं षोडशाङ्गुलम् । शेषं सर्वं विशेषेण कङ्कालस्योक्तवद्भवेत् ॥
एवं भिक्षाटनं प्रोक्तम्"

voir aussi *Ajitāgama* 36, 219-223.
[6] B : पाणिकम् pour पार्ष्णिकम्
[7] A : स्व pour सु [8] A : कोपिणं वाथ नन्दं वा [9] B : नानानागविभूषितम्
[10] C : सर्वे pour सव्ये [11] A : त्रिगुणः pour ब्रह्मणः ; B : त्रिगुणा [12] A : डमरुकं pour डमरुं
[13] La forme grammaticale correcte est त्वन्यस्मिन्
[14] A : वामे त्वन्यं च [15] A, B : नाहं pour नागं
[16] A : शूलाग्रे वा pour शूलाग्रेण [17] C : प्रसादं pour प्रसारं ; G : प्रवादं
[18] cf. *Kāraṇāgama* I 11,303-310a:

"कङ्कालं त्वधुना शृणु ।
चतुर्भुजं त्रिणेत्रं च कपर्दमकुटान्वितम् । पादे पादुकसंयुक्तं किंचिद्वै गमनोत्सुकम् ॥
सर्वाभरणसंयुक्तं यज्ञसूत्रोपशोभितम् । शङ्खं तु वामकर्णे तु दक्षिणेन च कुण्डलम् ॥



KAṄKĀLA

[1]धुत्तूरपुष्पं नागं च वामे [2]सव्येन्दुशेखरम् । किंचित्प्रहसितास्यं च [3]गणैर्गेयसमन्वितम् ॥ २७० ॥
कर्णंकुण्डलसंयुक्तं वामे शङ्खदलं[4] तु वा[5] । वामे पूर्वकरे[6] ढक्कां प्रहारं दक्षिणे धरेत् ॥ २७१ ॥
[7]दक्षिणे [8]परहस्तस्तु [9]मृगवक्त्रे तु व्यापृतः । वामे परे तु [10]पिञ्छं स्यात्सकलास्थि[11]समन्वितम् ॥२७२

---

क्षौमवस्त्रधरं कुर्याद्दक्षिणे क्षुरिकायुधम् । डमरुं वामहस्ते तु प्रहरं दक्षिणे करे ॥
कङ्कालदण्डमूले तु पिञ्छदण्डस्य मूलकम् । वामे त्वपरहस्तेन संगृहीतं तु कल्पयेत् ॥
उभयोर्दण्डकाग्रं तु अंसकोपरि विन्यसेत् । कृष्णामुखगतं हस्तं दक्षिणे परहस्तकम् ॥
नानानागसमायुक्तं किंचित्प्रहसिताननम् । बलिपात्रधरं भूतदेवं वामे तु कारयेत् ॥
भिक्षादानोन्मुखस्त्रीभिर्मोहिताभिः समाकुलम् । नानाभूतसमायुक्तं नानालीलासमन्वितम् ॥

cf. *Aṃśumatkāśyapa* 75,2b-6a:

शुद्धश्वेताभवर्णं च सर्वाभरणभूषितम् । रत्नकञ्चुकबद्धाङ्गजटामकुटमण्डितम् ॥
धूत्तूरपुष्पं नागं च वामे सव्येन्दुशेखरम् । हसितं वक्त्रं संधार्य सुगेयगणसेवितम् ॥
किंचित्प्रकाशितान्तस्थदशनं सुविलासितम् । गेयशृङ्गारसंयुक्तमास्यमेवं प्रकीर्तितम् ॥
कर्णौ कुण्डलसंयुक्तौ वामे शाखा[शङ्ख?]दलं तु वा । पूर्वहस्तद्वयोर्वामे ढक्का सव्ये प्रहारकम् ॥

cf. *Śilparatna* II 22,116b-119:

कङ्कालमूर्तिनं वक्ष्ये पादयोः पादुकान्वितम् । सुस्थितं वामपादं तु गमनापेक्षयापरम् ॥
पादमीषत्समुद्धृत्य करोत्यधिकसुन्दरम् । शुद्धश्वेतनिभं चारुसर्वाभरणभूषितम् ॥
रत्नकञ्चुकबद्धाङ्गं जटामकुटमण्डितम् । धूर्धूरपुष्पं नागं च वामे दक्षेन्दुशेखरम् ॥
किञ्चित्प्रकाशितान्तस्थदशनांशुविराजितम् ।

voir aussi *Ajitāgama* 36, 224-228.

[1] A : धुर्धूर pour धुत्तूर [2] B : सव्ये तु pour सव्येन्दु

[3] La meilleure lecture semble être गणगेयसमन्वितम् ou गणैर्गेयैः समन्वितम्

[4] A : जलं pour दलं [5] G : मुचा pour तु वा [6] A : धरे pour करे

[7] cf. *Aṃśumatkāśyapa* 75, 6b-10a:

दक्षिणं हरिणीवक्त्रे व्याहितं (व्यापृतं?) सिंहकर्णवत् । वामहस्ते तु पिञ्छं च कङ्कालास्थि च धारयेत् ॥
तदस्थ्याकृति निर्मांसं द्विपादद्विकरान्वितम् । कृष्णश्यामनिभाकारमपाने दण्डवेशनम् ॥
दण्डं कङ्कालपादौ द्वौ रज्जुना बन्धयेद्बुधः । केतुकिङ्किणिनेत्राढ्यं निष्क्रान्तं रुचिरं [रुधिरं?] तु वा ॥
एतत्कङ्कालनाम्ना तु वामस्कन्धोपरि न्यसेत् । अनेकभूतैर्जायाभिः सेवितं त्वादरान्वितः ॥

cf. *Śilparatna* II 22, 120-123a:

दक्षिणं हरिणीवक्त्रे व्यापितं सिंहकर्णवत् । वामहस्ते च दण्डं तु कङ्कालास्थि च धारयेत् ॥
तदस्थ्याकृति निर्मांसं द्विपादं द्विकरान्वितम् । कृष्णश्यामनिभाकारमपाने दण्डवेशनम् ॥
दण्डं कङ्कालपादौ द्वौ रज्जुना बन्धयेद्बुधः । केतुदण्डेन नेत्राभ्यां निष्क्रान्तं रुधिरं तु वा ॥
एवं कङ्कालदण्डं तु वामस्कन्धोपरि न्यसेत् ।

[8] A : परहस्तं तु [9] A : मृगे वक्त्रे तु व्यापितम् [10] G : खड्गं pour पिञ्छं [11] A : अद्वि pour अस्थि

[1]तदस्थ्याकृति निर्मांसं द्विपादं द्विकरान्वितम् । कृष्णश्यामनिभाकारमपरे दण्डवेशनम् ॥ २७३ ॥
[2]दण्डे [3]कङ्कालपादौ द्वौ नागपाशेन बन्धयेत् । नेत्राभ्यां किङ्किणीकेतु [4]वाक्रान्तं त्वग्जधारया ॥ २७४ ॥
[5]कङ्कालमेतदस्थि स्यात्स्कन्धोपरि निधापयेत् । [6]विविधैर्भूतजायाभिः[7] सेवितं त्वति[8]कामतः ॥ २७५ ॥
[9]बलिपात्रं धरेद्भूतं[10] [11]वामपार्श्वे मनोत्सुकम् । [12]दर्व्या पात्रे बलिं दद्युर्जायास्तु [13]नतवाससः ॥ २७६
[14]ललाटे वामपार्श्वे तु नेत्रान्ते तत्पुटान्तके । अधरस्य तु [15]हिक्काया मध्ये हृदयमध्यमे ॥ २७७ ॥
नाभेस्तु दक्षिणे [16]वेदमात्रं नीत्वा प्रसारयेत् । वामपादे तु गुल्फस्य मध्ये सूत्रं प्रलम्बयेत् ॥ २७८ ॥
आभङ्गं समभङ्गं वाप्यतिभङ्गमथापि वा । [17]व्याघ्रचर्माम्बरोपेतं दुकूलवसनान्वितम् ॥ २७९ ॥

---

1 A : तस्याकृति pour तदस्थ्याकृति ; G : तदस्याकृति ; le mot आकृति se trouve ici au neutre au lieu du féminin.

2 A : दण्ड pour दण्डे ; B : दण्डं    3 B : कराल pour कङ्काल

4 A : क्रन्तान्ताद्रूमधारया ; B : क्रन्तान्ताद्रूगधारया ; C, G : कान्तान्तद्रूगधारया

5 B : कङ्कालमेकदा स्थित्या स्कन्धोपरि    6 B : सविधैः pour विविधैः

7 A : जाघाति pour जायाभिः ; B : जायादि    8 A : अधि pour अति

9 cf. *Aṃśumatkāśyapa* 75, 10b-12a:
बलिपात्रधरं भूतं वामाग्रे गमनान्वितम् । दर्व्या त्वन्नं तु तत्पात्रे निधाय कृतजायया ॥
किंचित्प्रकाशितं योनि संयुक्ता नम्रवासस: । संभ्रान्तमनसोपेता जाया: सर्वास्त्वनेकश: ॥
cf. *Śilparatna* II 22, 123b-125a:
बलिपात्रधृतं भूतं वामेऽग्रे गमनान्वितम् । दक्षिणेऽन्नं तु तत्पार्श्वे निधाय कृतजायया ॥
किंञ्चित्प्रकाशितं योनि संयुतानतवाससा । संभ्रान्तमनसोपेतं [ता?] जाया: सर्वास्त्वनेकश: ॥

10 A : बलिपात्रान्तरे भूतं ; B : बलिपात्रं तरेद्भूतं

11 A : वामे पार्श्वे गमनोसुकम् ; B : वामपार्श्वे गमनोसुकम् ; la meilleure lecture semble être गमनोत्सुकम्

12 C : सर्व pour दर्व्या    13 A : नतवाससा

14 cf. *Aṃśumatkāśyapa* 75, 12b-14:
ललाटवामपार्श्वे तु नेत्रान्ते तत्पुटान्तके । हन्वन्तस्य तु वामे तु हिक्कामध्ये हृदस्तथा ॥
नाभे: सव्ये युगाङ्गुल्यं वामपादस्य गुल्फके । मध्ये तु लम्बयेद्ब्रह्मसूत्रं हीनाधिकं विना ॥
आभङ्गस्योक्तमार्गेण नतमानं प्रकल्पयेत् ।

15 A : हिक्कायां    16 A : देव pour वेद

17 cf. *Aṃśumatkāśyapa* 75, 15-18a
व्याघ्रचर्माम्बरोपेतं दुकूलवसनान्वितम । दक्षिणे कटिपार्श्वे तु क्षुरिकां चैव बन्धयेत् ॥
क्षुरिकां हेमसंकाशामुपबन्धसमन्विताम् । उभयो: पार्श्वयोर्हस्ते नानानागविभूषितम् ॥
ऋषिभिर्देवगन्धर्वसिद्धविद्याधरादिभि: । हृदयाञ्जलिसंयुक्तै: संभ्रान्तमनसान्वितै: ॥
संमानितं सदानन्दं सेवितं तै: सुपूजितम् ।
cf. *Śilparatna* II 22, 125b-128:
व्याघ्रचर्माम्बरोपेतं दुकूलवसनान्वितम् । दक्षिणे कटिपार्श्वे तु क्षुरिकां चैव बन्धयेत ॥
क्षुरिका हेमसंकाशा ह्युपबन्धसमन्विता । यक्षकिन्नरसिद्धाद्यै: सेवितं पूजितं नुतम ।
चामरैरर्कचन्द्राभ्यां वीजितं रत्नभूषितै: । अण्डानां सुस्थितार्थं तु सर्वलोकोपकारकम् ॥
कङ्कालमोचनार्थं तु[स]स्यात्कङ्कालकाभिध: ।



Ardhanārī

नानानागसमोपेतं सर्वाभरणभूषितम् । [1]भिक्षाटनमिवायुक्तं [2]युक्तं चान्यं प्रकल्पयेत् ॥ २८० ॥
एवं कङ्कालमाख्यातमर्धनारिरथोच्यते ।

[अर्धनारीश्वरलक्षणम्[3]]

चतुर्बाहुर्द्विबाहुश्च [4]द्विविधः स विधीयते ॥ २८१ ॥
[5]समभङ्गोऽप्यभङ्गः स्यात्सूत्रादयस्त एव हि । दक्षिणं सुस्थितं पादं वामपादं तु कुञ्चितम् ॥ २८२ ॥
गौरीरूपं तु वामे तु दक्षिणार्धेश्वरात्मकम् । अभयं परशुं सव्ये [6]त्वन्यमुक्षणस्तु कूर्परे ॥ २८३ ॥
[7]तदन्यवामहस्तं तु [8]पुष्पधृक्कटकं भवेत् । द्विभुजे सव्यहस्तं[9] तु [10]वरदं ह्यभयं तु वा ॥ २८४ ॥
वामं पुष्पधरं ख्यातं दक्षिणेश्वरभूषणम् । गौर्यास्त्वाभरणं वामे तथैव[11] दिव्यवाससम् ॥ २८५ ॥
[12]पुंस्तनं दक्षिणे विद्याद्वामे स्त्रीणां पयोधरम् । शेषं युक्त्या तु कर्तव्यं पुंस्त्वं स्त्रीत्वं विशेषतः ॥२८६ ॥
अर्धनारिः[13] समाख्यातः; दक्षिणामूर्तिकं शृणु ।

[दक्षिणामूर्तिलक्षणम्[14]]

[15]त्र्यक्षं चतुर्भुजं शान्तमार्जव[16]मार्दवान्वितम् ॥ २८७ ॥

---

[1] C : भिक्षाटनसमायुक्तं [2] C, G : युक्त्या चण्डं pour युक्तं चान्यं

[3] cf. *Aṃśumatkāśyapa* 72, 1-9:
अथार्धनारीमूर्तेस्तु वक्ष्येऽहं शृणु सुव्रत । चतुर्भुजं च द्विभुजं द्विविधं परिकीर्तितम् ॥
समभङ्गस्थानकोक्तमार्गेणैव नतादयः । सुस्थितं दक्षिणं पादं वामपादं तु कुञ्चितम् ॥
वामेऽर्धपार्वतीयुक्तं दक्षिणेऽर्धं महेश्वरम् । अभयं परशुं सव्ये हस्ते तत्तु शिवांशकम् ॥
वृषभमूर्ध्नि विन्यस्तकोर्परं वामहस्तकम् । तदन्यवामहस्ते तु कटकं पुष्पसंयुतम् ॥
द्विभुजे वरदं सव्ये वामहस्ते तु पुष्पधृत् । शिवस्याभरणं सव्ये वामे स्त्रीभूषणान्वितम् ॥
पुंस्तनं दक्षिणे पार्श्वे वामे स्त्रियः पयोधरम् । अथवा कुञ्चितं सव्यं पादं वामं तु सुस्थितम् ॥
सव्यं शूलधरं हस्तं वामं पुष्पधरं भवेत् । वरदं दक्षिणं हस्तमन्योक्षशिरकोर्परम् ॥
कपालं दक्षिणे हस्ते वामहस्तं प्रसारितम् । दक्षिणे रौद्रदृष्टिः स्याद्वामपार्श्वे तु शीतलम् ॥
दुकूलं चोरुमध्यान्तं सव्ये गुल्फान्तमन्यके । एवं समासतः प्रोक्तमर्धनारीश्वरं हरम् ॥
voir aussi *Ajitāgama* 36, 247-251.

[4] B : द्विपादं च pour द्विविधः स ; C G : द्विविधं तद् [5] A : समभङ्गास्यभङ्गं स्यात्

[6] A : त्वदीयमुक्षस्तु कोर्परम् C : अन्यमुक्षणस्तु कोर्परम् ; G : अन्यकक्षस्तु कोर्परम्

[7] C, G : तदन्यं वामहस्ते तु [8] B : पुष्पं हृत्कण्टकं भवेत् [9] B : हस्ते pour हस्तं

[10] B : वरदस्य परं तु वा [11] B, C, G : तथैवं [12] A : पुंस्तद्दक्षिणे ; B : पुंस्त्वं तु दक्षिणे

[13] A : अर्धनारी

[14] cf. *Aṃśumatkāśyapa* 79, 20b-23:
अन्योन्याङ्कितलं विप्र स्फिक्पिण्डाधः प्रकल्पयेत् । ज्ञानमुद्रा हृदः स्थाने त्वभ्यन्तरमुखं करम् ॥
वरदं वामहस्तं तु मेढ्रपीठोपरि न्यसेत । अपरे दक्षिणे चाब्जं मालाक्षं वामहस्तके ॥
नासाग्रं तु समीक्ष्याक्षावार्जवं सूत्रदेहके । अपरे तु जटा लम्बा ऋषिभिः सेवितं वरम् ॥
योगमूर्तिरिति ख्यातम् ''

अन्योन्याङ्घ्रितलौ द्वौ च स्फिक्पिण्डाधः प्रकल्पयेत् । हृदये ज्ञानमुद्रां तु ह्यभ्यन्तरमुखं करम् ॥ २८८॥
वरदं वामहस्तं तु कटिसूत्रोपरि न्यसेत् । दक्षिणे परहस्तेऽक्षमालाधृग्वामसूचिका ॥ २८९ ॥

---

cf. *Kāmikāgama* II 51, 1b-9a; 10-14a ; 21-25 et 30-40:

व्याख्यानगेययोगेषु निष्ठस्य त्रिविधस्य च । व्याख्यायुग्ज्ञानमुद्रातो गेयी वीणासमन्वित: ॥
द्वाभ्यां विरहितो योगी स नानाकारभेदत: । चतुर्भुजस्त्रिणेत्रस्तु कुन्देन्दुधवलप्रभ: ॥
श्वेतविद्रुमहेमाभः श्यामाभो वा प्रकीर्तित: । व्याघ्रचर्माम्बरो वापि दिव्याम्बरधरस्तु वा ॥
उत्तरीयसमोपेतः शुक्लयज्ञोपवीतकः । विकीर्णमूर्धजो वापि जटामकुट एव वा ॥
पट्टिकाबन्धनो वापि सत्करोटिकया युतः । धुर्त्तूरारग्वधैर्नागपत्रैश्चन्द्रेण मण्डित: ॥
पद्ममुद्रासमोपेतो गङ्गाकिङ्किणिसंयुत: । अधस्ताद्वटवृक्षस्य शैलादूर्ध्वं श्रित: पुन: ॥
व्याघ्रचर्मोपरिष्टात्तु स्थितो वीरासनोऽथवा । लम्बितं दक्षिणं पादं तज्जानूपरि संस्थितम् ॥
वामाङ्घ्रिनालकं कुर्यात्सव्यहस्तं तु मुद्रया । संदंशसंज्ञयोपेतो वामहस्तस्त्वपुस्तक: ॥......
अथवा नागसंयुक्तो वामहस्त: समीरित: । वरदं तं विजानीयाज्जानुस्थमणिबन्धक: ॥
दण्डहस्तो यदा स स्यात्प्रकोष्ठं जानुसंस्थितम् । विकसत्पद्मसंकाशस्त्वधस्ताद्विस्तृताङ्गुलि: ॥
परहस्तद्वये चाक्षमालाज्वालासमन्वित: । पद्मं वा चोत्पलं वापि व्यालं वामे तु कल्पयेत् ॥
कटकौ तौ प्रकर्तव्यौ प्रसन्नसमलोचन: । नासाग्रदृष्टियुग्वामहस्तो वा स्यात्सुपुस्तक: ॥
आभङ्गसहितं कुर्याद्देहमध्ये तु वामत: । ......सजटामकुटा देवचूचुकास्यगलान्तका: ॥
तत्तत्कलासमोपेताः शुक्लयज्ञोपवीतिन: । शुक्लाद्यम्बरसंयुक्ता भस्मरुद्राक्षसंयुता: ॥
कौशिक: काश्यपः श्यामस्त्वितर: पीतवर्णक: । रक्तवर्णो भरद्वाजो धूम्राभावत्रिगौतमौ ॥
एषामेकं द्वयं वापि त्रयं वा पार्श्वयोर्न्यसेत् । व्याख्यानमूर्तिरेवं स्याद्गेयमूर्तिस्ततो मत: ॥
ऊर्ध्वाधोमध्यकटकौ तस्यां सर्पकरावुभौ । वीणा तु दक्षिणे वाग्रे दक्षिणे कटकस्थिता ॥
दक्षिणे कटकं चोरुस्थितायां विनिवेशयेत् । व्याख्यानसहितस्त्वेव संदंशस्व समास्ययुक् ॥
तत्राक्षिपातयोगेन सदा कुञ्चितलोचन: । प्रसृतो वामहस्त: स्याद्योगमूर्तिरयं मत: ॥
अथ कुञ्चितवामाङ्घ्रियुग्मस्फिग्गतपार्ष्णिक: । उद्धृतं तस्य जान्वग्रं दण्डकोर्परकान्तयुक् ॥
सदंशदृष्टिपातश्च आभङ्गं चैव पूर्ववत् । नानामृगैस्तु संकीर्णं नानाव्यालैस्तु संयुतम् ॥
नानामुनिगणैः सार्धं सिद्धविद्याधरैरपि । भूतैश्च किन्नरैरन्यैः पुष्पवृक्षैश्च मण्डितम् ॥
शैलं कुर्यात्तु तत्पार्श्वे वटवृक्षस्तु शाड्वल: । फलशाखोपशाखाढ्यो नानापक्षिसमायुत: ॥
तन्मूले दक्षिणे छायानिषण्णः कृपया युत: । रत्नोपशोभिते पीठे व्याघ्रचर्मोत्तरच्छदे ॥
आसीनो मुनिभि: सम्यक्कौशिकादिभिरादरात् । शिवद्विजकुलस्यादिभूतैस्तु परित: स्थितैः ॥
आगमाहितचेतोभि: परमेशेन दीक्षितैः । एवं तु दक्षिणामूर्तेर्मूर्तिभेदा उदाहृता: ॥
व्याख्यायुग्ज्ञानद: प्रोक्तो गेययुग्भुक्तिदो मत: । सयोगो मुक्तिदो ज्ञेय इति ज्ञात्वा समाचरेत् ।
आसीनो वा स्थितो वापि ऋषिभि: संवृतो न वा । वटवृक्षविहीनो वा भूताद्यावृत एव वा ॥
भूतस्थलम्बपादो वा दक्षिणेश: समीरित: ।

voir aussi *Ajitāgama* 36, 252-256.

[15] A : त्रिणेत्रं pour त्र्यक्षं [16] A : मार्दवं स्थितम्



DAKṢIṆĀ MŪRTI

[1]नासाग्रं तु [2]समीक्ष्याक्षि स्वल्पासितप्रकाशकम् । अपरे पार्श्वयोश्चैव जटाधाराः [3]प्रलम्बयेत् ॥२९०॥
ऋषयः पार्श्वयोश्चैव [4]नीत्या तृप्तिं प्रकल्पिताः । [5]बाहोश्चैव जटाभारे [6]व्याला यानसमन्विताः॥२९१
मृगपक्ष्यादयश्चैव [7]योगाभ्यासं प्रचारिताः । [8]दक्षिणामूर्तिराख्याता [9]योगमूर्तिस्तथैव हि ॥ २९२ ॥

[रत्नन्यासः[10]]

प्रतिमालक्षणं[11] ह्येवं प्रतिष्ठां शृणु सुव्रत[12] । [13]सुकृते मण्डपे रम्ये वितानाद्यैरलंकृते[14] ॥ २९३ ॥
स्थण्डिलं शालिभिः कुर्याद्दर्भैः पुष्पैः परिस्तरेत् । विष्टरं स्थापयेत्तस्मिन्प्रोक्षयेद्धृदयेन तु ॥ २९४ ॥
[15]माणिक्यं [16]मरकतं चैव [17]वैडूर्यं चैव नीलकम् । मौक्तिकं स्फटिकं चैव पद्मरागं च वज्रकम् ॥
प्रवालं नव रत्नानि मध्यादीशावसानकम् । ब्रह्मादिलोकपालानां मन्त्रेणैव क्रमेण तु ॥ २९६ ॥
हिरण्यशकलांस्तत्र विन्यसेद्धृदयेन तु । गन्धादिभिः समभ्यर्च्य सर्वातोद्यसमन्वितम् ॥ २९७ ॥
ततो बिम्बं हृदा योज्य स्थपतिः स्निग्धमाचरेत् ।

---

[1] A : नासाग्रात्तु

[2] A : समीक्ष्याक्ष्य स्वल्पशीताः प्रकाशिताः ; C : समीक्ष्याथ स्वल्पाशीताः प्रकाशिताः ; G : समीक्ष्याक्ष्यस्वल्पासिता प्रकाशिता

[3] A : प्रलम्बिताः [4] A : नीत्वा pour नीत्या [5] C : बालेन्दुजटाभारं

[6] A : व्याला यातसमन्विताः ; C, G : व्यालयानसमन्वितम्

[7] A : योगान्मासं प्रचारिताः; B : योगाभ्यासं प्रकल्पिताः; C : योगात्मा संप्रसारिताः ; G : योगात्मसंप्रचारिताः

[8] A : दक्षिणामूर्तिमाख्यातं [9] A : योगमूर्तिस्तदेव हि ; G : योगमूर्तिं तदेव हि

[10] cf. *Virāgama* 63, 23-28a:
रत्नन्यासं प्रकर्तव्यमाचार्यः शिल्पिना सह । रत्नन्यासं प्रकर्तव्यं सत्यकस्य पदेऽथवा ॥
शालिना विकिरेत्तत्र तण्डुलं च तिलं न्यसेत् । नववस्त्रसमायुक्तां प्रतिमां तत्र विन्यसेत् ॥
माणिक्यं मध्यमे स्थाप्य परितः स्थापयेत्क्रमात् । इन्द्रनीलं च वैडूर्यं स्फटिकं मरकतं तु च ॥
पद्मरागं प्रवालं च वज्रं मौक्तिकमुच्यते । पूर्वादिषु न्यसेदेतान्पञ्चब्रह्म समुच्चरन् ॥
सिंहासनस्थदेव्याश्च रत्नन्यासं च कारयेत् । अर्धनारीश्वरस्यैव शिवभागे तु विन्यसेत् ॥
सुस्निग्धं कारयेत्तत्र क्षालयेत्प्रतिमां ततः ॥
voir aussi *Ajitāgama* 40, 14-20a.

[11] A : लक्षणे pour लक्षणं

[12] Le ms. C ajoute: इति श्रीमद्रौरवतन्त्रे प्रतिमालक्षणविधिर्नाम एकोनत्रिंशत्पटलः; Le ms. G ajoute: इति श्रीमद्रौरवतन्त्रे प्रतिमालक्षणविधिः नवविंशतिः । महेशस्थापनविधिः

[13] C, G : सुकूर्मे pour सुकृते [14] B : कृतम् pour कृते [15] B, G : माणिक्कं [16] G : मरतकं

[17] Le ms. B omet la portion entre le premier pāda du *śloka* 295a et le second pāda du *śloka* 295b et lit: माणिक्कं मरकतं चैव पद्मरागं च वज्रकम्

[नेत्रोन्मीलनम्[1]]

बिम्बशुद्धिं ततः कृत्वा स्थण्डिलेऽन्यत्र विन्यसेत् ॥ २९८॥

नेत्र[2]द्वययुते ऋक्षे नेत्रमोक्षणमाचरेत् । स्वर्ण[3]सूचिप्रहाराभ्यां भ्रूरेखादीन्सुलेखयेत्[4] ॥ २९९ ॥

भ्रूरेखां [5]पक्ष्मरेखां च[6] कृष्णमण्डलरेखया । ज्योतिर्मण्डलरेखां च[7] लेखयेन्नेत्रमन्त्रतः ॥ ३०० ॥

ततः स्वर्णनखाभ्यां तु नेत्रेणोन्मीलनं कुरु । क्षीराज्यमधुसंयुक्तमक्षेणाक्षेषु तर्पयेत् ॥ ३०१ ॥

[8]मधुवाता ऋतायेति [9]मधुपात्रं प्रदर्शयेत् । [10]घृतं मिमिक्षेति मन्त्रेण [11]घृतपात्रं तु दर्शयेत् ॥३०२॥

[12]गौर्धेनुभव्यमन्त्रेण सवत्सां गां प्रदर्शयेत्[13]।

[कुम्भाभिषेकः[14]]

..............कुम्भाद्बीजसमन्वितम् ॥ ३०३ ॥

---

[1] cf. *Santānasaṃhitā* 21, 14b-21a:

ताम्रपात्रमयं कृत्वा तस्याग्रे विन्यसेद्बुधः । क्षीरं मधु घृतं चैव विन्यसेद्देशिकोत्तमः ॥

सवत्सां कपिलां धेनुं प्रतिमाग्रे व्यवस्थिताम् । सुवर्णनखसंयुक्तं स्वर्णकूर्चसमन्वितम् ॥

वस्त्रेण प्रतिमां बध्वा स्वर्णसूच्या च लेखयेत् । भ्रुवं च लेखयेत्तत्र पक्ष्मरोमाणि लेखयेत् ॥

कृष्णं च मण्डलं लिख्य करवीरोपमं भवेत् । श्वेतं कृष्णं तथा रक्तं त्रिविधं लोचनप्रभम् ॥

कपिलां दर्शयेत्पश्चाद्ब्राह्मणान्दर्शयेत्ततः । शिल्पिना मोक्षयित्वा तु पुण्याहं कारयेद्बुधः ॥

नेत्रे तु विन्यसेत्क्षीरमयुताक्षरमूर्तिना । मधुवाता ऋतायेति मधु तत्रैव लेपयेत् ॥

घृतं मिक्षेति मन्त्रेण घृतं कूर्चसमन्वितम् । नखयुक्तेन हस्तेन विन्यसेन्नेत्रमध्यमे ॥

voir aussi *Ajitāgama* 40, 20b–32.

[2] A : त्रय pour द्वय [3] C : सूची pour सूचि [4] A : सुलेपयेत् ; B : सुयोजयेत्

[5] A : पक्षरेखां ; B : पद्मरेखां ; C : पत्ररेखां [6] B : वा pour च [7] B : वा pour च

[8] cf. *Mahānārāyaṇa Upaniṣad* 9, 8.

[9] A : मधुपात्रेषु दर्शयेत् ; C, G : मधुपात्रेण दर्शयेत्

[10] cf. *Mahānārāyaṇa Upaniṣad*, 9, 11.

[11] A : घृतपात्रेण दर्शयेत् ; B : घृतं पात्रेण दर्शयेत् ; C : घृतपात्राणि दर्शयेत्

[12] cf. *Āpastambamantrapāṭha* 2, 10, 9

[13] Dans tous les manuscrits utilisés pour cette édition il y a une lacune après *śl.* 303a: les portions traitant जलाधिवास, शयनाधिवास, कुम्भस्थापन, होम et une partie du rituel à exécuter le jour du कुम्भाभिषेक sont omises. Voir *Ajitāgama, paṭala* 40, *śloka* 32b-114 pour les passages correspondants.

[14] cf. *Kāmikāgama* I 68, 91-94 et 97-98:

शिवकुम्भं समुद्धृत्य वर्धन्या सह देशिकः । परिवारघटैर्युक्तं सर्वालंकारसंयुतम् ॥

हर्म्यप्रदक्षिणं कृत्वा प्रतिमाग्रे नयेद्घटान् । कुम्भाद्बीजं समादाय प्रतिमाहृदि विन्यसेत् ॥

तत्कुम्भस्थजलेनैव स्नापयेत्परमेश्वरम् । वर्धन्या बीजमादाय तत्पीठे विन्यसेद्गुरुः ॥

देवेन सहजा देवी तस्यास्तु हृदि विन्यसेत् । विभिन्नपीठा देवी चेत्पृथक्स्नापनमारभेत् ॥......

अर्चनोक्तं समभ्यर्च्य वस्त्राभरणपुष्पकैः । प्रभूतं तु हविर्दद्यात्ताम्बूलादिसमन्वितम् ॥

स्नापनं कल्पयेद्वा चेदुत्सवेन युतं तु वा । अत्रानुक्तं तु यत्सर्वं लिङ्गस्थापनवन्नयेत् ॥

voir aussi *Ajitāgama* 40, 106-112.

आदायाञ्जलिहस्ताभ्यां प्रतिमां हृदि विन्यसेत् । गौरीं तथैव वर्धन्या [1]गौर्यास्तु हृदि विन्यसेत् ॥३०४
[2]कुम्भाद्भिरभिषिच्याथ चार्चनोक्तं समर्चयेत् । चलोदरं [3]चेद्बिम्बं तु प्रासादाभ्यन्तरे द्वयम् ॥ ३०५॥
[4]एकत्रिपञ्चसप्ताहं [5]व्याप्य [6]सोत्सवमाचरेत्। स्नपनं कारयेत्पश्चान्महाहविर्निवेदयेत् ॥ ३०६ ॥
एवं यः कुरुते [7]पुंसां स याति परमां गतिम् ॥ ३०७ ॥

इति [8]श्रीमद्रौरवतन्त्रे क्रियापादे [9]प्रतिमालक्षणविधिर्नाम [10]पञ्चत्रिंशः पटलः

---

[1] C : गौर्यां च [2] A : रम्भाद्भिः pour कुम्भाद्भिः ; C : कुम्भाद्यैः [3] A : च pour चेद
[4] A : एकं pour एक [5] A : वाप्यं pour व्याप्य [6] B : सोत्सत्वम् pour सोत्सवम्
[7] G : पुंसः pour पुंसां [8] B omet श्रीमद्रौरवतन्त्रे क्रियापादे
[9] A : महेशस्थापनपटलः षट्त्रिंशः ; G : महेशस्थापनविधिपटलस्त्रिंशतितमः
[10] B : षट् pour पञ्च

# [षट्त्रिंशः पटलः]
## [विष्णुस्थापनविधिः[1]]
### [विष्णुस्थानम्[2]]

विष्णुपूजां प्रवक्ष्यामि [3]संक्षेपात्तु गुरो शृणु । [4]ग्रामादिषु च मध्ये [5]च [6]दिशाष्टास्वन्तरालके ॥ १ ॥
सागराणां तु पार्श्वे वाप्यरण्ये नदितीरके[7] । तटाकतीरोक्तदिशि कर्तव्यं हरिमन्दिरम् ॥ २ ॥
प्रासादमण्डपादीनि[8] [9]कर्तव्यान्युक्तमानवत् ।

### [विष्णुलक्षणम्[10]]

चतुर्भुजं द्विनेत्रं च प्रशान्तं कृष्णसंनिभम् ॥ ३ ॥
किरीटमकुटं दिव्यं [11]राजभूषणभूषितम् । [12]संपातस्थानकं पद्मपीठस्योपरि संस्थितम् ॥ ४ ॥
अभयं [13]दक्षिणे [14]पूर्वहस्ते वामे तु [15]दण्डधृक् । दक्षिणे परहस्ते [16]च चक्रं वामे तु शङ्खधृक् ॥ ५ ॥
[17]पीताम्बरधरं नाना[18]चित्रवस्त्रविभूषितम् । दक्षिणेऽदक्षिणे श्रीभूः [19]संस्थिते [20]हरिदीक्षिते[21] ॥ ६ ॥
तयोरङ्घ्री[22] हरेः पार्श्वे सुस्थितावन्यकुञ्चितौ[23] । कृत्वैवं प्रतिमां [24]लोहैर्मृदा वा [25]धातुजैरपि ॥ ७ ॥

---

[1] Pour विष्णुस्थापनविधि voir *Acintyaviśvasādākhya* 64, *Kāraṇāgama* I 99, *Pārameśvarāgama* (T. No 140) pp 46-47, *Virāgama* (T. No. 123) pp. 32-37 et *Santānasaṃhitā* 33.

[2] cf. *Kāmikāgama* I, 67, 15a: वरुणे विष्णुवासः स्यात्
cf. *Kāraṇāgama* I 99, 6b-7a:
ग्रामस्य वारुणे भागे समं कुर्याद्विशेषतः । अथवा वायुदिग्भागे गरुडालयमुत्तमम् ॥

[3] B : संक्षेपेण ; C : संक्षेपाच्च [4] B : ग्रामादीनां च [5] B : तु pour च

[6] B : दिशावष्टान्तरालके ; E, F, G : दिशिरष्टान्तरालके

[7] La forme grammaticale correcte est नदीतीरके ; mais le mètre ne serait pas respecté.

[8] B : आदीनां pour आदीनि [9] B : कर्तव्यमुक्त pour कर्तव्यान्युक्त

[10] cf. *Virāgama* (T. No. 123) pp. 32-33:
आसीनं स्थानकं वापि शयनं वापि कारयेत् । स्वतन्त्रं परिवारेण स्थापनं विधिपूर्वकम् ॥...
एकवक्त्रं द्विपादं च चतुर्हस्तसमायुतम् । चक्रं दक्षिणहस्ते तु शङ्खं वामहस्तके ॥
अभयं दक्षिणे हस्ते वामे दण्डं च हस्तके । नेत्रद्वयसमायुक्तं सुस्थितं पद्मपीठके ॥
कौस्तुभमणिसंयुक्तं ललाटे हेमपट्टकौ । पीताम्बरधरं देवं श्यामवर्णसमन्वितम् ॥
सर्वाभरणसंयुक्तं किंचित्प्रहसिताननम् । श्रीभूमिसहितं चैव कारयेद्देशिकोत्तमः ॥
शिलालोहमृदा कुर्याच्छास्त्रदृष्टेन कर्मणा ॥
voir aussi *Ajitāgama* 36, 289-293.

[11] B : राजभूषितभूषणम् [12] A : संपादस्थापनं पद्मं पीठस्योपरि सुस्थितम्

[13] C, F, G : दक्षिणं [14] B : पूर्वे हस्ते ; C, F, G : पूर्वं हस्तं [15] B : दण्डवत् ; F : दण्डधृत्

[16] C : तु pour च [17] B : पीताम्बरं गदायुक्तं [18] E, F : छत्र pour चित्र

[19] A : संस्थितो ; B, C, F, G : संस्थितौ [20] हरित = विष्णुः [21] C, F : हरिति क्षितौ

[22] B, C : अङ्घ्रिः pour अङ्घ्री [23] B : कुञ्चितम् pour कुञ्चितौ ; C F G : कुक्षितौ

[24] B : लोहैर्भूतजातानुजन्तु वा [25] A : धातुजं तु वा

[प्रतिमामानम्[1]]

द्वारोदयसमं तुङ्गं [2]परं मध्यं कनीयसम् । तयोर्मध्ये तु [3]षट्त्रिंशत्त्रिंशतित्रिनवोदयम् ॥ ८ ॥

[4]महाबेरोदयं ख्यातं [5]कर्मार्चां चाथ वच्मि ते । [6]मूलबेरोदयेऽग्न्यंशं परं [7]धात्वंशकेशवम् ॥ ९ ॥

[8]कन्यसं स्यात्तयोर्मध्ये[9] [10]प्रशस्तं सप्तविंशतिः ।

[मन्त्राः[11]]

[12]वान्तमौकारसंयुक्तमग्निबीजसमन्वितम् ॥ १० ॥

बिन्दुनादसमायुक्तं मूलमन्त्रं हरेर्विदुः । स्वनामाद्यक्षरेणैव बिन्दुनादसमन्वितम् ॥ ११ ॥

[13]देव्योर्मूलं समाख्यातं [14]ब्रह्माङ्गान्प्राग्वदुद्धरेत् ।

[रत्नन्यासो नेत्रोन्मीलनं च[15]]

रत्नन्यासं हृदा कुर्यान्नेत्रेणैवाक्षिमोचनम्[16]॥ १२ ॥

---

[1] cf. *Virāgama* (T. No. 123) p. 33:
पूजांशोच्चप्रमाणेन कर्तव्यं प्रतिमां प्रति । तेन गर्भं तथा हित्वा एकैकं प्रतिमोच्छ्रयम् ॥
चतुर्वा पञ्च षट्तालं प्रतिमां कारयेत्ततः ।

[2] A : मध्यं चैव pour परं मध्यं ; C : परमध्य ; G : परं मध्य [3] C : षड्विंशत्त्रिंशतित्रिनवोदयम्

[4] A : महाश्चेदोदयं ; B : महाश्वेतोदयं ; E : महाचरोदयं ; F : महाश्वर्योदयं ; G : महेश्वरोदयं

[5] A : कर्मश्चामथ वर्जिते [6] A : मूलं वरोदये न्यंशं ; B, C : मूलं परोदये न्यंशं [7] B : धात्वंशकेश्वरम्

[8] C : कन्यसः स्यात् [9] A : मध्यं [10] A : प्रशस्तात्

[11] cf. *Virāgama*, p. 34:
सप्तमे तु चतुर्थं तु सप्तमे तु द्वितीयकम् । प्रथमस्यादिसंयुक्तं बिन्दुनादसमन्वितम् ॥
विष्णुमूलमिदं ज्ञेयं विष्णुबीजं ततः शृणु । प्रथमस्यादिसंयुक्तं बिन्दुनादविभूषितम् ॥
विष्णुबीजमिदं मन्त्रं त्रिदशैरपि दुर्लभम् । ह्रस्वा ब्रह्म समाख्याता दीर्घा ह्यङ्गानि चोच्यते ॥

[12] A : वान्तमौकारसंयुक्तम् ; B : वान्तमोंकारसंयुक्तम् ; E : मान्तमौकारसंयुक्तं

[13] A : देव्या मूलं [14] Le mot अङ्ग se trouve au masculin au lieu du neutre.

[15] cf. *Virāgama* pp. 34-35:
रत्नन्यासं प्रकर्तव्यं लक्षणेन समन्वितम् । शैलजे लोहजे वापि मृण्मये वापि कारयेत् ॥
स्थितिमूर्तिं प्रतिष्ठाप्य रत्नन्यासं तु कारयेत् । नयनमोक्षणं कुर्यान्नेत्रद्वययुते दिने ॥
स्वर्णसूचिकया चैव भ्रूरेखां शिल्पिना लिखेत् । मण्डलं च समालिख्य प्रच्छन्नपटसंयुतम् ॥
सुवर्णनखसंयुक्तं मध्वाज्यं चैव तर्पयेत् । अक्षिहोमं तु नेत्रेण आज्येनैव शताहुतिः ॥
कपिलां दर्शयेत्पश्चान्नेत्रद्वययुते दिने । ब्राह्मणान्भोजयेत्तत्र[न्दर्शयेत्तत्र?]ब्रह्मजज्ञानमन्त्रतः ॥

[16] B : अक्षिमोक्षणम् pour अक्षिमोचनम् ; C : अग्निमोचनम्

[1]गावं [2]गौर्धेनुभव्येन [3]ब्रह्मजज्ञानतो [4]द्विजम् । [5]इदं विष्णुर्विचक्रमे मन्त्रेण [6]क्षत्रियं संप्रदर्शयेत् १३ ॥

[प्रतिमाशुद्धिः, जलाधिवासश्च[7]]

ब्रह्माङ्गैः [8]प्रतिमाशुद्धिं कृत्वा गन्धादिभिर्यजेत् । सर्वालंकारसंयुक्तं ग्रामं कुर्यात्प्रदक्षिणम् ॥ १४ ॥
जलाधिवासनं कुर्यात्सकल[9]स्थापनोक्तवत्[10] । [11]प्रतिष्ठामण्डपं[12] चैव कुण्डसंस्कारकं तथा ॥ १५ ॥

[शयनाधिवासः[13]]

स्थण्डिलं वेदिकायां तु शालिभिस्तिलतण्डुलैः । कृत्वा पद्मं समालिख्य दर्भान्पुष्पान्[14] परिस्तरेत् ॥ १६
शयनं कल्पयेत्तस्मिन्नण्डजाद्यैरनुक्रमात् । [15]नागेन्द्रं चार्चयेत्तत्र गन्धपुष्पादिभिर्बुधः[16] ॥ १७ ॥
जलादानीय बिम्बं तु स्नानवेद्यां निधापयेत् । गव्यैर्गन्धोदकैश्चैवाप्यस्त्रेणैवाभिषेचयेत् ॥ १८ ॥
गन्धाद्यैरर्चयेद्धीमान्बध्वा प्रतिसरं ततः । लम्बकूर्चसमायुक्तं नववस्त्रेण वेष्टयेत् ॥ १९ ॥
शयने शाययेत्पश्चात्प्राक्शिरश्चोर्ध्ववक्त्रकम् । पीताम्बरेण संछाद्य [17]श्रीभूमी पार्श्वयोस्तथा ॥ २० ॥

---

[1] C : गन्धं pour गावं ; G : गवां

[2] cf. *Āpastambamantrapāṭha* 2, 10, 9  [3] cf. *Taittirīyāraṇyaka* 10, 1, 10

[4] B : द्विजाः pour द्विजम्  [5] cf. *Taittirīyasaṃhitā* 1, 2, 13, 1

[6] A : त्र्यक्षत्र्यं pour क्षत्रियं

[7] cf. *Santānasaṃhitā* 33, 21b-25a:
जलाधिवासनं पश्चात्पूर्वोक्तविधिना सह । ग्रामप्रदक्षिणं कुर्यात्सर्वातोद्यसमन्वितम् ॥
नववस्त्रेण संवेष्ट्य प्रतिमां कूर्चसंयुताम् । प्रतिमां कण्ठदघ्ने तु जले चैवाधिवासयेत् ॥
अष्टौ कुम्भान्समादाय सूत्रेण परिवेष्टितान् । कूर्चेनैव समायुक्तान्पूरयेद्गन्धतोयकैः ॥
पूर्वादीशानपर्यन्तमष्टमूर्तीश्च विन्यसेत् । गन्धपुष्पादिना पूज्य गीतनृत्तेन संयुतम् ॥

[8] A : प्रतिमां शुद्धिं ; G : प्रतिमा शुद्धं  [9] A : सकलं pour सकल

[10] La portion traitant du rituel de जलाधिवास dans le सकलस्थापन ou प्रतिमालक्षण *paṭala* est omise dans tous les manuscrits utilisés pour cette édition. voir page 122 note 13

[11] cf. *Vīrāgama* p. 35:
मण्टपं कारयेत्तत्र सप्ताष्टनवहस्तकम् । मध्यमे वेदिकां कुर्यात्परितः कुण्डमुच्यते ॥
दिशासु चतुरश्राणि वृत्तकुण्डं विदिक्षु च । इन्द्रईशानयोर्मध्ये योन्याकारं भवेत्तथा ॥

[12] B : प्रतिष्ठां मण्टपे ; C : प्रतिष्ठां मण्टपं

[13] cf. *Vīrāgama* p. 36:
शालिना विकिरेद्वेद्यां तण्डुलार्धं तिलं न्यसेत् । वास्तुहोमं दिवा कुर्याल्लक्षणेन समन्वितम् ॥
शयनं पञ्चभिः कल्प्य मूलेन प्रतिमां न्यसेत् । प्रच्छन्नपटसंयुक्तं गन्धपुष्पादिनार्चयेत् ॥
श्रीभूमी चैव विप्रेन्द्र दक्षिणे चोत्तरे न्यसेत् ॥

[14] Le mot पुष्प se trouve au masculin au lieu du neutre.

[15] A : नागेन्द्रमर्चयेत्तत्र ; G : नागेन्द्रचर्म चेत्तत्र  [16] A : बुधाः pour बुधः  [17] B : श्रीं भूमिं

[कुम्भस्थापनम्[1]]

रुद्रसंख्यान्नवान्कुम्भान्सूत्रवस्त्राम्बुसंयुतान्[2]। [3]सकूर्चान्हेमपुष्पाढ्यान्परितोऽष्टौ घटान्न्यसेत् ॥ २१
त्रिषु मध्ये हरिं [4]ध्यायेच्छ्रीभूमी [5]दक्षिणोत्तरे। वासुदेवं हरिं कृष्णमच्युतं [6]चानिरुद्धकम् ॥ २२ ॥
प्रद्युम्नं श्रीधरं देवं धरणीपतिमेव च। शक्राद्यष्टघटेष्वर्च्य[7] तत्तन्मूलेन पूजयेत् ॥ २३ ॥

[होमः, कुम्भाभिषेकश्च[8]]

[9]हविष्यान्तं समभ्यर्च्य ततो होमं समाचरेत्। अग्न्याधानादिकं सर्वमग्नि[10]कार्योक्रमाचरेत् ॥ २४ ॥
समिदाज्य[11]चरूँल्लाजान्दधि[12]दुग्धं प्रियङ्गु च। [13]शिरोऽन्तं [14]सद्यमन्त्रादि प्रत्येकं तु शताहुतिः ॥ २५ ॥
[16]इदं विष्ण्वतिमन्त्रेण [16]पूर्णाहुतिमथाचरेत्। प्रभाते स्नानवेद्यां तु स्थापयेच्च [17]यथाक्रमम् ॥ २६ ॥
[18]कुम्भान्मन्त्रं न्यसेद्बिम्बहृदि ह्यभ्यर्च्य सेचयेत्। [19]श्रीभूमी च तथाभ्यर्च्य [20]हविष्यान्तं प्रपूजयेत् ॥

---

1 cf. *Santānasaṃhitā* 33, 33b-37:

अभितः कलशानष्टौ विन्यसेत्साधिदैवतान्। विष्णुश्च पूर्वतः स्थाप्यो महाविष्णुर्महानसे ॥
याम्ये चैव सदाविष्णुं निरृतौ नारायणं तथा। पश्चिमे वासुदेवं तु संकर्षणं तु वायवे ॥
प्रद्युम्नं चोत्तरे न्यस्य ईशान्यामनिरुद्धकम्। स्वैः स्वैर्मन्त्रैश्च संस्थाप्य पूजयेच्छिवशास्त्रवित् ॥
सकूर्चान्सापिधानांश्च सवस्त्रान्हेमसंयुतान्। प्रधानकुम्भमीशान्यां विन्यसेद्विष्णुमूलतः ॥
पार्श्वयोर्वर्धनी न्यस्या श्रीर्भूमिस्तत्र देवता ॥

2 A : सूत्रवक्त्राम्बुसंयुतान् ; C : स्वर्णवस्त्राम्बुपूरितान् ; G : सवस्त्राम्बुप्रपूरितान् 3 G : सकूर्चं pour सकूर्चान्

4 B : स्थाप्य श्रीभूमिं ; C, F, G : चैव श्रीभूमी 5 C, F, G : दक्षिणेतरे 6 A omet च

7 A : घटेऽभ्यर्च्य pour घटेष्वर्च्य

8 cf. *Virāgama* p. 36:

ततो होमः प्रकर्तव्यः पलाशसमिधा सह। समिदाज्यचरूँल्लाजान्मन्त्रैर्हुत्वा तु देशिकः ॥
इदं विष्णुर्विचक्रमेण आज्येनैव शताहुतिः। विष्णोर्नुकं च मन्त्रेण चरुणा च शताहुतिः ॥
हुत्वा हुत्वा स्पृशेत्प्रतिमां व्याहृतिं जुहुयात्ततः। वेदना वेदनत्वात्[?] गणानां त्वेति होमयेत् ॥
ततः प्रभाते विमले स्नानं कृत्वा तु देशिकः। स्थितिन्यासं प्रकर्तव्यं पूर्वलक्षणसंयुतम् ॥
ततोऽवसानहोमं तु समिदाज्यचरून्सह। विष्णुबीजेन मूलेन हृदयेन क्रमाद्धुनेत् ॥
सर्वद्रव्यसमायुक्तं हव्यवाहं समुच्चरन्। स्विष्टमग्नेति मन्त्रेण जुहुयात्तदनन्तरम ॥
स्थापयेत्प्रतिमां तत्र मानुषे तु पदे तथा। स्नापयेद्विष्णुकुम्भं तु विष्णुबीजेन संयुतम् ॥
देव्योः कुम्भेन देव्योस्तु स्नापयेत्स्वस्वमन्त्रत. ॥

9 A : हविषान्तं 10 B : कार्योक्तमार्गतः 11 C, G . चरुं क्षीरं pour चरूँल्लाजान्

12 A : दुग्ध pour दुग्धं ; B : मुद्गं 13 A : शिरोस्तं pour शिरोऽन्तं 14 C : च सदा मन्त्र्य pour सद्यमन्त्रादि

15 cf. *Taittiriyasaṃhitā*, 1, 2, 13, 1

16 C, F, G : पूर्णाहुतिं समाचरेत् 17 A, B : नराद्धरिम pour यथाक्रमम्

18 B : कुम्भान्मन्त्रं न्यसेन्मन्त्रं ; C, G : कुम्भं मन्त्रं न्यसेद्बिम्बे 19 G : श्रीभूमिश्च

20 A : हविषान्नं प्रयोजयेत ; B : हविषान्तं प्रयोजयेत्

[1]इदं विष्णुर्वि मन्त्रेण [2]नित्यार्चनं समाचरेत् ।

[परिवारपूजा[3]]

द्वारस्य दक्षिणे शङ्खमूर्तिं [4]वामे तु चक्रकम् ॥ २८ ॥
पुरस्ताद्गरुडं पूज्य [5]हृदयेऽञ्जलिसंयुतम् । [6]विमलं च विधातारं विक्रमं विजयं तथा ॥ २९ ॥
पुष्टिमूर्तिं च वृद्धिं च त्रिपदं [7]चाभिवृद्धिदम् । [8]गरुडध्वजमारोप्याप्युत्सवं चोक्तमार्गतः ॥ ३० ॥

[स्नपनम्]

कर्तव्यं स्नपनं चैव मध्यकुम्भे हरिं यजेत् । [9]वर्धन्योः पार्श्वयोश्चैव [10]श्रीभूमी च क्रमाद्यजेत् ॥ ३१ ॥
[11]परिवारार्चनाद्देवानर्चयेत्कलशे न्यसेत् । तत्तन्मन्त्रमनुस्मृत्य स्थाप्याभ्यर्चनमाचरेत् ॥ ३२ ॥
[12]अनुक्तमन्त्रोपचारादि [13]कर्तव्यं तु ममोक्तवत् ॥ ३३ ॥

इति [14]श्रीमद्रौरवतन्त्रे[क्रियापादे][15]विष्णुस्थापनविधिर्नाम षट्त्रिंशः पटलः

---

[1] cf. *Taittirīyasaṃhitā* 1, 2, 13, 1.

[2] B : नित्यार्चनमाचरेत्

[3] cf. *Aparājitapṛcchā* p. 332:
शङ्खचूडः प्रचण्डश्च जयश्च विजयस्तथा । धाता चैव विधाता च सुभद्रो भद्र एव च ॥
दक्षिणोत्तरक्रमेण गङ्गा च यमुना स्थिते । उत्तरङ्गे भवेल्लक्ष्मीः क्षेत्रपाला उदुम्बरे ॥
कण्ठके मातरः कार्या ग्रहास्त्रिपुरुषस्तथा । वासुदेवादिभेदांश्च द्वारेषु परिकल्पयेत् ॥
वासुदेवं संकर्षणं प्रद्युम्नं चानिरुद्धकम् । चतुर्युगप्रभेदेषु द्वारेषु परिकल्पयेत् ॥
येषां परिकरा ये स्युस्तांस्तद्वारेषु कल्पयेत् । भवेयुः सुखदा नित्यं कर्तुश्चावरकस्य तु ॥
इति विष्ण्वायतने द्वारदेवताः ॥

cf. *Kāraṇāgama* I 99, 18b-20a:
परिवारादिसंयुक्तं स्थापयित्वा विशेषतः । संकर्षणादिमूर्तीनां (मूर्तीस्तु?) पूर्वादिषु च विन्यसेत् ॥
अथवान्यप्रकारेण परिवारविहीनकम् । मया संक्षेपतः प्रोक्तं विशेषं पाञ्चरात्रवत् ॥

[4] C : वामेन च क्रमम् ; F : वामेन वा क्रमम् ; G : वामे क्रमं तथा [5] G : हृदये भूमिसंयुतम्

[6] C, F : विमानं च [7] C, F, G : चाभिवृद्धिभिः [8] A : गरुडध्वजं समारोप्य

[9] C, F, G : अन्यौ पार्श्वद्वयोश्चैव [10] B : श्रियं भूमिं च योजयेत् ; C, F, G : श्रीभूमिं च ततो यजेत्

[11] B : परिवारार्चनादेवमर्चयेत् [12] A : अनुक्तात्रोपचारी च ; C : अनुक्तात्रोपचारादि

[13] A : कर्तव्यं तु नमोक्तवत् ; B : कर्तव्यं तु नमोन्तकम् [14] A : श्रीरौरवतन्त्रे ; B omet श्रीमद्रौरवतन्त्रे

[15] A : विष्णुस्थापनपटलः सप्तत्रिंशः ; B : विष्णुस्थापनं नाम सप्तत्रिंशः पटलः ; C : विष्णुस्थापनविधिर्नाम अष्टत्रिंशत्पटलः ; F : विष्णुस्थापनविधिरष्टत्रिंशत्पटलः ; G : विष्णुस्थापनविधिः पटलः अष्टत्रिंशत्

## [सप्तत्रिंशः पटलः]

## [मोहिनीस्थापनविधिः[1]]

### [मोहिन्युत्पत्तिः[2]]

प्रवक्ष्यामि समासेन मोहिनीस्थापनं परम् । [3]देवासुरमहायुद्धे त्वमृतोन्मथने सति ॥ ॥
[4]अमृते मन्थनेनैव [5]संभूते च विलोडनात् । [6]देवांस्तानपि संगृह्य [7]व्यतिक्रमकृतासुरान् ॥ २ ॥
[8]हिंसार्थं [9]मित्रवद्भाव्य [10]भजध्वमशनीयकम् । [11]इत्युक्त्वा सुहृदः कार्यं [12]तेऽमृते तु यदा कृताः ॥
[13]तदा जायात्मना कृष्णो[14]ऽददात्तेषां भृतामृतम् । [15]विजिता दानवास्त्वेवं संविशेयुस्तु मां यदा ॥ ४ ॥
[16]तदा तु कृष्णजायां चामोहयं यत्तु मोहिनी ।

---

[1] Pour मोहिनीस्थापनविधि voir *Kāraṇāgama* I, 101 et *Sūkṣmāgama* cité dans la *Śivālaya-nirmāṇasthāpanadipikā* (T. No 122) pp 152-158.

[2] cf. *Kāraṇāgama* I 101, 1-5a:

मोहिनीस्थापनं वक्ष्ये समासेन प्रजापते । देवासुरमहायुद्धे त्वमृतं मथने सति ॥
पीयूषमथने काले संभवे च विलोटने । देवस्थावपि संग्राह्य वति... कृतासुरान् ॥
हिंसार्थं मे मन्त्रवद्भाव्य भवामो तांशनी वयम् । इतरत्वा सहकारी ते अमृता देयदा कृता ॥
तदा जायात्मना कृष्णन्दयात्तेनामृतामृतम् । विजिता दानवास्त्वेवं संविशेयुस्तु मां सदा ॥
तदा तत्कृष्णजायां तु हैमे माभातु मोहिनी ।

cf. *Sūkṣmāgama*, p. 152:

प्रवक्ष्यामि समासेन मोहिनीस्थापनं परम् । देवासुरमहायुद्धे त्वमृतं मथने सति ॥
अमृतं मथनं चैव संवेशु चम्लोटके । देवस्थापितसंगृह्य व्यतिरिक्तकृतासुरान् ॥
हंसमन्त्रैव तद्भाव्य भवामेतांशनीयताम् । उदरत्वासहत्कारीदमृता देवता कृता ॥
तदा आयन् मन: कृष्ण दयात्तेषां मृतामृतम् । विजिता दानवास्त्वेवं संविरेचय मां यदा ॥
तदा तत्कृष्णमायां तु अहं मोहात्तु मोहिनी ॥

Pour la légende de la *Mohinī* voir le *Brahmāṇḍapurāṇa, uttarabhāga*, adhyāya 9 et 10 et le *Bhāgavatapurāṇa* VIII 8-12.

[3] B : देवासुरमहायुद्धं सति त्वमृतमन्थने

[4] A : अमृतोन्मथनं चैव ; G : अमृतानां मथनेनैव ; E, G : अमृतानां मथं चैव

[5] A : संभवे च द्रुलोटने ; B, G : संभवेच्च विलोडने ; C : संभवे तद्विलोडने

[6] A, B, E, G : देवास्थावपि ; G : देवास्तावपि

[7] A : व्यतिक्रमकृतान्सुरान् ; B : व्यतिक्रमकृतीन्सुरान् ; C : व्यक्तिं चापि सुरासुरान् ; E : व्यक्तिं चमसुरासुरान्

[8] A : हंसार्थं ; B : हंसार्धं   [9] A : मैत्र pour मित्र

[10] A : भवामेतांशनीयकम् ; C : हवामेतांशरीवयम् ; G : हवामेता: शनीवयम्

[11] A : इतरत्वा सुहृत्कारी ; B, C, G : इतरत्वा सहत्कारी

[12] A : दमृतादेयता कृता ; B : अमृतादेयता कृता ; C : ते अमृते यदा तु तम् G : ते अमृते यदा कृता

[13] A : तदा आयान्मनः कृष्णः ; B : तदा जायां मनः कृष्णः   [14] A : दयात्तेषाममृतामृतम्

[15] C : जितान्तरजरवास्त्वेवं   [16] C : तदा तत्र pour तदा तु

[मन्त्रोद्धारः[1]]

[2]कलार्णं तु समुद्धृत्य चतुर्दशस्वरान्वितम् ॥५॥
बिन्दुनादसमायुक्तमस्यास्तु[3] मूलमन्त्रकम् । ब्रह्माङ्गान्यपि तेनैव [4]चोध्दरेदुक्तमार्गतः ॥ ६ ॥

[मोहिनीस्थानम्[5]]

[6]ग्रामबाह्येष्टदेशे च मोहिन्यावासकं परम् । प्रागुक्तेनैव हर्म्यं तु कर्तव्यं [7]मण्डपादिकम् ॥ ७ ॥
गरुडं [8]सिंहमुक्षं वा कल्पयेद्ग्रीवमञ्चके ।

[प्रतिमा[9]]

[10]प्रतिमां द्वारमानेन गर्भमानेन वा कुरु ॥ ८ ॥
[11]लोहजं शैलजं वापि [12]मृण्मयं दारुजं तु वा । धातुजं वाथ कर्तव्यमनेनैव प्रकारतः ॥ ९ ॥

---

[1] cf. *Kāraṇāg ama* I 101, b-6:

कालार्णं तु समुद्धृत्य चतुर्दशस्वरान्वितम् । बिन्दुनादसमायुक्तमस्यास्तु मूलमन्त्रकम् ॥
ब्रह्माङ्गान्यपि तेनैवाप्युद्धरेदुक्तमार्गतः ।

[2] A : कालार्णं तु ; C : कलशान्तरं    [3] A : मध्यास्तु pour अस्यास्तु ; B : मध्यात्तु ; F : तस्यास्तु

[4] C : उत्तरेदुत्तमाहृतः ; E : उत्तरेदुक्तमाहृतः

[5] cf. *Kāraṇāgama* I 101, 7-8a;

ग्रामबाह्ये मनोरम्ये मोहिन्यावासकं परम् । प्रागुक्तेनैव हर्म्यं तु कर्तव्यं मण्टपादयः ॥
गरुडं सिंहमुक्षं वा कल्पयेद्ग्रीवमञ्चके ।

[6] C : ग्रामबाह्याष्टदेशे च मोहिन्यावासकोपरि    [7] A : मण्टपादिश ; C : मण्टपादिशः    [8] E : वृषम् pour सिंहम्

[9] cf. *Kāraṇāgama* I 101, 8b-16;

प्राग्द्वारस्य समानेन गर्भमानेन तत्कुरु । लोहजं शैलजं वापि मृण्मयं दारुजं तथा ॥
धातुजं वाथ कर्तव्यमनेनैव प्रकारतः । द्विनेत्रा द्विभुजा शान्ता द्विपादा श्यामलप्रभा ॥
करण्डमकुटोपेता सर्वाभरणभूषिता । पद्मपीठोपरिष्ठात्तु पीतवस्त्रधृता वरा ॥
आसीनं स्थानकं वापि कल्पयेत्कल्पवित्तमः । त्रिभङ्गस्थानकं चेत्तु [पीठे] सव्याङ्घ्रिशायिनी ॥
लम्बितं वामपादं तु सव्यहस्तधृतोत्पला । प्रसार्य वामहस्ते तु वरदं कटकं तु वा ॥
अन्यत्सव्ये तु शूलं वा कपालं वामहस्तके । एवं संकल्पयेन्मोहीदक्षिणे द्विभुजं हरम् ॥
चतुर्हस्तं प्रकर्तव्यं वामाङ्घ्रिं विष्टरे शयेत् । लम्बयेद्दक्षिणं पादमभयं वरदान्वितम् ॥
टङ्कं कृष्णमृगं वामे दक्षिणेऽवरकेसरी(ऽपरे?) । जटामकुटसंयुक्तं सोमेश्वरमिवाकृति ॥
केवलं मोहिनीं चैव कल्पयेत्कल्पवित्तमः ।

[10] A : प्रातर्द्वारसमानेन ; B : प्रातर्द्वारे समानेन ; C : प्रातर्द्वारं च मानेन G : प्राक् तद्वारं तु मानेन

[11] C : हैमजं ; G : हेमजं    [12] B : मृन्मयं

[1]द्विनेत्रां द्विभुजां शान्तां द्विपादामञ्जनप्रभाम् । [2]करण्डमकुटोपेतां सर्वाभरणभूषिताम् ॥ १० ॥
[3]पद्मपीठोपरिष्टात्तु [4]पीतवासोधृताम्बराम् । स्थानकं [5]वासनं वापि कल्पयेत्कल्पवित्तमः ॥ ११ ॥
त्रिभङ्गस्थानकं चेत्तु पीठे [6]सव्याङ्घ्रिशायिनीम् । लम्बितं वामपादं तु [7]सव्यहस्ते धृतोत्पलाम् ॥ १२ ॥
[8]प्रसार्यवामहस्ते तु वरदं कटकं तु वा । [9]अन्यत्सव्ये तु शूलं वा कपालं वामहस्तके ॥ १३ ॥
एवं संकल्पयेन्मोही[10] दक्षिणे [11]द्विभुजं हरम् । चतुर्भुजं [12]वा कर्तव्यं वामाङ्घ्रि विष्टरे शयेत् ॥ १४॥
लम्बयेद्दक्षिणं पादमभयं वरदान्वितम् । टङ्कं कृष्णमृगं [13]वामेऽवामे वरकरे धरेत् ॥ १५॥
जटामकुटसंयुक्तं [14]सोमेश्वरमिवाकृतौ । केवलं [15]मोहिनीं चैव कल्पयेत्कल्पवित्तमः ॥ १६ ॥

[द्वारपालिकाः[16]]

अष्टाङ्गी कोटरी चैव दक्षिणेऽदक्षिणे [17]स्थिते । [18]द्विनेत्रे द्विभुजे शान्ते [19]चामरामालिकाकरे ॥ १७ ॥
पार्श्वयोर्गर्भगेहे तु [20]प्रवेशस्य तु पार्श्वयोः । [21]रक्तश्यामनिभे एते कल्पयेत्केशवन्धिते[22] ॥ १८ ॥
शङ्किनी टङ्किनी चैव [23]बाह्यद्वारे तु पार्श्वयोः । दक्षिणेऽदक्षिणे [24]शूलं डमरुं चैव धारयेत् ॥ १९ ॥

---

1 E, F : द्विनेत्रा द्विभुजा शान्ता द्विपादमञ्जनप्रभा ; G : द्विनेत्रा द्विभुजं शान्ता द्विपादान्त्वञ्जनं प्रभा
2 E, G : करण्डमकुटोपेता सर्वाभरणभूषिता 3 B : पद्मपीठोपरि प्रविष्टां तु
4 A : पीतवासोधृतावराम् ; B : पीतवासोद्धृतां परम् ; C : पीतं वासाग्रताम्बराम् : G : पीतं वासधृताम्बराम
5 A : वासकं 6 C : सव्यास्त्र pour सव्याङ्घ्रि ; E : सर्वास्त्रि 7 B : सव्यहस्तोद्धृतोत्पलाम्
8 C : आचार्यं वामहस्तेन ; G : आसार्य वामहस्ते वा 9 B : अपसव्ये च शूलं तु
10 A : मोहीं pour मोही 11 B : द्विभुजां हराम् 12 A : वाथ pour वा
13 A : वामे वरकरे धरेत् ; B : वामे वरदं च करे धरेत्
14 A : सोमेश्वरमिवाकृतिम् ; C : सोमेश्वरमथाकृतिम् ; G : सोमेश्वरमिवाकृतिः 15 A : मोहिनी तस्य
16 cf. *Kāraṇāgama* I 101, 17-19:

अष्टाङ्गी कोटरी चैव दक्षिणेऽदक्षिणे स्थिता । द्विनेत्रे द्विभुजे शान्ते चामरमालिकाकरे ॥
पार्श्वयोर्गर्भगेहे तु प्रवेशस्य तु पार्श्वयोः । रक्तश्यामनिभे एते कल्पयेत्केशबन्धिते ॥
शङ्किनी टङ्किनी चैव बाह्यद्वारसुपार्श्वयोः । दक्षिणेऽदक्षिणे शूलं डमरुं चैव धारयेत् ॥

17 A : स्थिताः ; B : स्थिताम् ; C, F : स्थितः
18 A : द्विनेत्रौ द्विभुजौ चार्चौ ; G : द्विनेत्रौ द्विभुजौ शान्तौ
19 A : चामरामालिकः करः ; C, F : चामरौ मालिकाकरः ; G : चामरौ मल्लिकाकरः
20 B : प्रवेश्य तु च पार्श्वयोः 21 A : रक्तश्यामनिभावेतौ ; C, F : रक्तश्यामनिभाकारौ
22 A, C, F : बन्धितौ pour बन्धिते 23 A : बाह्यद्वारसुपार्श्वयोः 24 G : शूलडमरुकं चैव

[षोडशपरिवारदेवताः[1]]

अंगिनी आंगिनी चैव [2]इंगिनी ईंगिनी तथा । उंगिनी [3]ऊंगिनी चैव ऋंगिनी ॠंगिनी तथा ॥ २० ॥
लृंगिनी लॄंगिनी चैव एंगिनी ऐंगिनी तथा । ओंगिनी औंगिनी चैव अंगिनी [4]अःगिनी तथा ॥ २१ ॥
इन्द्रादिक्रमयोगेन स्थापयेत्परिवारकान् । [5]एवं षोडशपरीवारान्दिग्विदिक्स्थापयेत्ततः[6] ॥ २२ ॥
[7]अभया वरदाः सर्वे[8] प्रासादाभिमुखे[9] स्थिताः ।

[मण्टपः[10]]

प्रासादस्याग्रतः कुर्यान्मण्डपं नवहस्तकम् ॥ २३ ॥
मध्ये तु वेदिकां कुर्यादग्निभागैकविस्तृताम्[11] । [12]तदग्न्यंशसमुत्सेधा [13]कर्तव्या [14]सोपवेदिका ॥ २४ ॥
चतुर्दिक्ष्वग्निकुण्डानि वृत्ताकाराणि कल्पयेत् ।

[रत्नन्यासः, नेत्रोन्मीलनं च[15]]

रत्नन्यासं तु मूलेन[16] हृदा नयनमोक्षणम् ॥ २५ ॥
मधु घृतं सवत्सां गां ब्राह्मणान्दर्शयेत्ततः । नेत्रमन्त्रं समुच्चार्य [17]पञ्चकन्याः प्रदर्शयेत् ॥ २६ ॥

---

1 cf. *Kāraṇāgama* I 101, 20-23a:
अंगिनी आंगिनी चैव इंगिनी ईंगिनी तथा । उंगिनी ऊंगिनी चैव ऋंगिनी ॠंगिनी तथा ॥
लृंगिनी लॄंगिनी चैव एंगिनी ऐंगिनी तथा । ओंगिनी औंगिनी चैव अंगिनी अःगिनी तथा ॥
इन्द्रादिक्रमयोगेन स्थापयेत्परिवारकन् । एवं षोडशपरीवारान्दिग्विदिक्स्थापयेत्ततः ॥
अभयवरदाः सर्वे प्रासादाभिमुखस्थिताः ।

2 E, F : इन्दुनी राङ्गनी तथा 3 E, G : इङ्गिनी 4 A : अंगिनी तथा

5 B : षोडशैवं परिवारान् ; C, G : एवं षोडश परीवारं 6 C : दिशो दिक्स्थापयेद्बुधः

7 C, F, G : अभयं pour अभया 8 B : चैव pour सर्वे

9 B : अभिमुख pour अभिमुखे ; E, F, G : अभिमुखाः

10 cf. *Sūkṣmāgama* pp. 154-155:
प्रासादस्याग्रतः कुर्यान्मण्टपं नवहस्तकम् । मध्ये तु वेदिका कार्या अग्निभागैकविस्तृता ॥
तदर्धांशसमुत्सेधा कर्तव्या वेदिका तथा । चतुर्दिक्ष्वग्निकुण्डानि वृत्ताकाराणि कल्पयेत् ॥

11 A : विस्तृतम् pour विस्तृताम्

12 A : तदग्न्यंशं समुत्सेधं ; B : तस्य न्यासं समुत्सेधं ; C, F, G : तस्यामंशं समुत्सेधं

13 B, C, F, G : कर्तव्यं pour कर्तव्या 14 B : स्नानवेदिका

15 cf. *Kāraṇāgama* I 101, 25-26a:
रत्नन्यासं तु मूलेन हृदा नयनमोक्षणम् । सर्पिर्मधु सवत्सां गां धान्यं विप्रं प्रदर्शयेत् ॥
नेत्रमन्त्रं समुच्चार्य पञ्च कन्याः प्रदर्शयेत् ।

16 A : हृदा वै धनमोक्षणम् ; E, G : हृदा वै नयमोक्षणम् 17 A : पञ्चकन्यां

[जलाधिवासः[1]]

हृदा स्नाप्य [2]सुवस्त्राद्यैरलंकृत्य विशेषतः । [3]ग्रामप्रदक्षिणं कृत्वा जलाधिवासनं कुरु ॥ २७ ॥
एकरात्रं त्रियामं वा यामं वापि जले वसेत् ।

[शयनाधिवासः[4]]

स्थण्डिलं कारयेद्वेद्यां [5]शालिभिस्तिलतण्डुलैः ॥ २८ ॥
[6]लाजपुष्पकुशांस्तीर्य शयनं नववस्त्रतः । गन्धाद्यैस्तु समभ्यर्च्य बध्वा प्रतिसरं ततः ॥ २९ ॥
शयने शाययेद्देवीं प्राक्शिरश्चोर्ध्ववक्त्रकाम्[7] । नववस्त्रेण संछाद्य गन्धाद्यैस्तु समर्चयेत् ॥ ३० ॥

[कुम्भस्थापनम्[8]]

[9]स्थापयेन्मोहिनीकुम्भं [10]तद्बिम्बस्य शिरोऽन्तिके । [11]सकूर्चवस्त्रहेमाढ्यमद्भिः पूर्यं पिधाय च ॥ ३१ ॥
मूलमन्त्रं न्यसेत्तस्मिन्ध्यात्वा [12]मोहिनीमर्चयेत् । [13]दौवारिकावृतान्कुम्भान्परितः परिकल्पयेत् ॥ ३२ ॥

[होमः[14]]

[15]हविरन्तं समभ्यर्च्य ततो होमं समाचरेत् । पलाशखदिराश्वत्थमुदुम्बर[16]समित्क्रमात् ॥ ३३ ॥
[17]समिदाज्यचरूँल्लाजान् सर्षपांश्च यवांस्तिलान् । [18]अजमांसमपूपं च फलं सक्तुं हृदादिभिः ॥ ३४ ॥

---

[1] cf. *Kāraṇāgama* I 101, 26b-27:
हृदा स्नाप्य सुवस्त्राद्यैरलंकृत्य विशेषतः । ग्रामप्रदक्षिणं कृत्वा जलाधिवासनं कुरु ॥
एकरात्रं त्रिरात्रं वा प्रहरं वा जले वसेत् ।

[2] A : सुवर्णाद्यैः pour सुवस्त्राद्यैः [3] C et F omettent les *śloka* 27b et 28a

[4] cf. *Kāraṇāgama* I 101, 28-30a:
स्थण्डिलं कारयेद्वेद्यां शालिभिस्तिलतण्डुलैः । लाजपुष्पकुशांस्तीर्य शयनं नववस्त्रतः ॥
गन्धाद्यैस्तु समभ्यर्च्य बध्वा प्रतिसरं ततः । शयने शाययेद्देवीं प्राक्शिरश्चोर्ध्ववक्त्रकाम् ।
नववस्त्रेण संछाद्य गन्धाद्यैस्तु समर्चयेत् ।

[5] C, F, G : शालिभिस्तण्डुलैरपि [6] A : लाजपुष्पांकुरजास्तीर्य [7] A : वक्त्रकम् pour वक्त्रकाम्

[8] cf. *Kāraṇāgama* I 101, 30b-32:
स्थापयेन्मोहिनीकुम्भं तद्बिम्बस्य शिरोऽन्तिके । सकूर्चवस्त्रहेमाढ्यमद्भिः पूर्यं पिधाय च ॥
मूलमन्त्रं न्यसेत्तस्मिन्ध्यात्वा च मोहिनीं यजेत् । दौवारिकावृतान्कुम्भान्परितः परिकल्पयेत् ॥
हविष्यान्तं समभ्यर्च्य "

[9] A, B : स्थापयेन्मोहिनीं कुम्भे [10] A : तद्बिम्बं च [11] B सकूर्चवस्त्रहेमाद्भिः परिपूर्णं विधाय च

[12] A : मोहिनिम् pour मोहिनीम् [13] A : दौवारिकान्वृतान्

[14] cf. *Kāraṇāgama* I 101, 32b-36a:
"तथो होमं समाचरेत् ।
पलाशखादिराश्वत्थोदुम्बरं च समित्क्रमात् । समिदाज्यचरूँल्लाजान्सर्षपांश्च यवांस्तिलान् ॥
अजमांसमपूपं च फलं सक्तुं हृदादिभिः । शतमर्धं तदर्धं वा प्रत्येकाहुतिमाचरेत् ॥

शतमर्धं तदर्धं वा प्रत्येकाहुतिमाचरेत् । द्रव्यान्ते व्याहृतिं हुत्वा [1]तत्तदङ्गैः स्पृशाहुतिः ॥ ३५ ॥
ततः पूर्णाहुतिं कुर्यान्मूलमन्त्रेण देशिकः ।

[कुम्भाभिषेकः[2]]

एवं [3]जागरणं रात्रौ प्रभाते सुमुहूर्तके ॥ ३६ ॥
शयनाद्देवीमुद्धृत्य सर्वालंकारसंयुताम् । [5]हर्म्यं प्रदक्षिणीकृत्य गर्भगेहं [6]समाविशेत् ॥ ३७ ॥
स्थापयेन्मूलमन्त्रेण तत्तदङ्गानि [7]विन्यसेत् । घटाद्बीज हृदि [8]न्यस्य [9]तदद्भिरभिषेचयेत् ॥ ३८ ॥

---

द्रव्यान्ते व्याहृतिं हुत्वा तत्तदङ्गैः स्पृशादिभिः [स्पृशेत्तथा] । ततः पूर्णाहुतिं कुर्यान्मूलमन्त्रेण देशिकः ॥
एवं जागरणं रात्रौ''

cf. *Sūkṣmāgama* p. 156:

'' ततो होमं समाचरेत् ।
पलाशखादिराश्वत्थमुदुम्बरसमित्क्रमात् । समिदाज्यचरूँल्लाजान्सर्षपांश्च यवांस्तिलान् ॥
**गोधूमं च** अपूपं च फलं सक्तुं हृदादिभिः । शतमर्धं तदर्धं वा प्रत्येकाहुतिमाचरेत् ॥
द्रव्यान्ते व्याहृतिं हुत्वा तत्तदङ्गैः स्पृशेत्तथा । ततः पूर्णाहुतिं कुर्यान्मूलमन्त्रेण देशिकः ॥
एवं जागरणं रात्रौ''

15 A : हविषान्तं 16 C, F, G : औदुम्बर pour उदुम्बर
17 A : समिदाज्यचरुं ; C : समिदाज्ये चरून्
18 On trouve dans le *Sūkṣmāgama* अजमांस au lieu de गोधूम ; voir page 133, note 14.
1 A : तत्तदङ्गैः स्पृशादिभिः ; B : तत्तदङ्गे स्पृशाहुतिः ; C : तदङ्गैश्च हृदादिभिः ; E, F : तदङ्गैश्च स्पृशादिभिः
2 cf. *Kāraṇāgama* I 101, 36-40:

'' प्रभाते सुमुहूर्तके ।
शयनाद्देविमुद्धृत्य सर्वालंकारसंयुतम् । हर्म्यं प्रदक्षिणीकृत्य गर्भगेहं समाविशेत् ॥
स्थापयेन्मूलमन्त्रेण तत्तदङ्गानि विन्यसेत् । घटाद्बीजं हृदि न्यस्य तदद्भिरभिषेचयेत् ॥
परिवारघटांश्चैव तत्तत्पीठेऽभिषेचयेत् । ब्रह्माङ्गैरभिषिच्याथ हृदा गन्धादिभिर्यजेत् ॥
हविष्यान्तं समभ्यर्च्य बस्तमांसं हृदा ददेत् । परिवारबलिं चैव तद्द्रव्येणैव दापयेत् ॥
प्रतिष्ठा यजनं ह्येवम् ''

cf. *Sūkṣmāgama* pp. 156 157:

प्रभाते सुमुहूर्तके ।
शयनाद्देविमुद्धृत्य सर्वालंकारसंयुताम् । हर्म्यं प्रदक्षिणीकृत्य गर्भगेहं समाविशेत् ॥
स्थापयेन्मूलमन्त्रेण तत्तदङ्गानि विन्यसेत् । घटाद्बीजं हृदि न्यस्य तदद्भिरभिषेचयेत् ॥
परिवारघटांश्चैव तत्तत्पीठेऽभषेचयेत् । ब्रह्माङ्गैरभिषिच्याथ हृदा गन्धादिभिर्यजेत् ॥
हविष्यान्तं समभ्यर्च्य **धूपदीपं** हृदा ददेत् । परिवारबलिं चैव तद्द्रव्येण[च]दापयेत् ॥
प्रतिष्ठामर्चनं ह्येवम्''

3 F, G : जागरकं 4 B, E, F, G : देविम् pour देवीम् 5 G : हर्म्यप्रदक्षिणं कृत्वा
6 C, F, G : समाचरेत् 7 B : कल्पयेत् 8 C : न्यस्येत् pour न्यस्य 9 C : तत्तत्कुम्भाभिषेचयेत्

परिवारघटांश्चैव तत्तत्पीठेऽभिषेचयेत् । ब्रह्माङ्गैरभिषिच्याथ हृदा गन्धादिभिर्यजेत् ॥ ३९ ॥
[1]हविरन्तं समभ्यर्च्य [2]बस्तमांसं[3] हृदा ददेत् । परिवारबलिं चैव [4]तद्द्रव्येणैव दापयेत् ॥ ४० ॥

[उत्सवः[5]]

प्रतिष्ठा [6]र्चार्चनं ह्येवमुत्सवं[7] चाधुनोच्यते । सिंहध्वजोक्षकेतू वा [8]गरुडं [9][10]वापि रोपयेत् ॥ ४१ ॥
पञ्चायुधसमायुक्तं चक्रमूर्ति[11]समन्वितम् । सन्धिदेवावाहनादि सर्वं [12]कुर्यान्महोत्सवम् ॥ ४२ ॥
शूलं [13]कपालं दण्डं च [14]खड्गचापौ तथैव च । [15]मोहिन्यायुधाः पञ्चैते [16]पञ्चमूर्त्यधिदेवताः ॥ ४३ ॥
यागे तु वेदिकायां तु स्थापयेन्मोहिनिवर्धनीम [17]। [18]अंगिन्यादीनि [19]वर्धन्याः परितः स्थापयेद्बुधः ॥

---

[1] A : हविषान्तं [2] C : वस्त्रमांसं

[3] On trouve dans le *Sūkṣmāgama* बस्तमांस au lieu de धूपदीप ; voir page 134, note 2.

[4] G : द्रव्येणैव तदर्पयेत्

[5] cf. *Kāraṇāgama* I 101, 40b-52a:

उत्सवं चाधुनोच्यते ॥
सिंहध्वजोक्षकेतू वा गरुडं वापि रोपयेत् । पञ्चायुधसमायुक्तं चक्रमूर्तिसमन्वितम् ॥
संधिदेवावाहनाद्यं सर्वं कुर्यान्महोत्सवे । शूलं कपालं दण्डं च खड्गं चापं तथैव च ।
मोहिन्यायुधाः पञ्चैते पञ्चमूर्त्यधिदेवताः । यागे तु वेदिकायां तु स्थापयेन्मोहिवर्धनीम् ॥
अंगिन्यादीनि वर्धन्या परितः स्थापयेद्बुधः ॥

तत्तन्मन्त्रं न्यसेद्ध्यायेद्धविषान्तं समर्चयेत् । तस्यैन्द्रेऽग्निं तु संकल्प्य पञ्चकुण्डे तु होमयेत् ॥
समिदाज्यचरूँल्लाजान्सर्षपांस्तिलमुद्गकान् । बस्तानां रुधिरं मांसमपूपं च कुलुत्थकम् ॥
सद्याद्यस्त्रान्तमन्त्रैस्तु मोहिन्यास्तु शताहुतिम् । पञ्चाशत्पञ्चविंशत्या प्रतिद्रव्यं तु होमयेत् ॥
होमान्ते तु बलिं दद्यात्सर्वालंकारसंयुतम् । घोषिणी मर्दिनी घोरी पालिनी पिङ्गली तथा ॥
मद्भूतिर्विकृतिर्मार्दी भृङ्गिणी संधिदेवताः । मध्यादीशावसानेषु बलिं दद्यात्तु संधिषु ॥
शुद्धान्नं मांससंयुक्तं बलिं दद्यात्स्वमन्त्रतः । नवाहं वाथ सप्ताहं पञ्चाहं ह्येवमाचरेत् ॥
बल्यन्ते चोत्सवं कुर्याद्देवीं मोहनमूर्तिकाम् । यानं च परिवेषं च युक्त्या शेषं समाचरेत् ॥
एवं द्वित्रिदिनं वापि वनयात्रां समाचरेत् । अन्यत्सर्वं च कर्तव्यमुत्सवस्य ममोक्तवत् ॥

[6] B : हि pour च

[7] Le mot उत्सव se trouve au neutre au lieu du masculin.

[8] A : सिंहध्वजोक्षके ऊर्ध्वां [9] C, F, G : गारुडं [10] C, F : वा विरोपयेत्

[11] E : मुक्ति pour मूर्ति [12] A : कुर्युर्ममोत्सवम् ; B : कुर्यान्ममोत्सवम्

[13] A : कपालदण्डं च [14] A : खड्गं चापं तथैव च ; B : खड्गं च परशुं तथा

[15] A : मोहिन्यायुधपञ्चैते ; C, F : मोहिन्यायुधं पञ्चैते [16] A : पञ्चमूर्ताधिदैवतम्

[17] A : मोहवर्धनीम् ; B : मोहिनीं वर्धनीम् [18] C : अङ्गन्यासादीनि [19] A : वर्धिन्यां

तत्तन्मन्त्रं न्यसेद्ध्यायेद्धविरन्तं[1] समर्चयेत् । [2]तस्यैन्द्रेऽग्निं तु संकल्प्य [3]पद्मकुण्डे तु होमयेत् ॥ ४५॥
समिदाज्यचरूल्लाँजाम्सर्षपांस्तिलमुद्गकान् । [4]बस्तोघिरं च मांसं च त्वपूपं च कुलत्थकम् ॥ ४६ ॥
सद्याद्यस्त्रान्तमन्त्रैस्तु मोहिन्यास्तु [5]शताहुतीः । पञ्चाशत्पञ्चविंशत्या प्रतिद्रव्यं तु होमयेत् ॥ ४७ ॥
होमान्ते तु बलिं दद्यात्सर्वालंकारसंयुतम् । [6]घोषिणी मर्दिनी घोरी [7]पालिनी पिङ्गली तथा ॥ ४८ ॥
[8]मर्षिणी विकृतिर्मार्दी [9]भृङ्गिणी सन्धिदेवताः । मध्यादीशावसानेषु[10] बलिं दद्यात्तु सन्धिषु ॥ ४९ ॥
शुद्धान्नं मांससंयुक्तं बलिं दद्यात्स्वमन्त्रतः । नवाहं वाथ सप्ताहं पञ्चाहं [11]वा समाचरेत् ॥ ५० ॥
बल्यन्ते चोत्सवं [12]कुर्याद्देव्यै मोहिनिमूर्तये । यानं च परिवेषं च युक्त्या शेषं समाचरेत् ॥ ५१ ॥
एवं द्वित्रिदिनं वापि वनयात्रां समाचरेत् । अन्यत्सर्वं च [13]कर्तव्यमुत्सवस्य ममोक्तवत् ॥ ५२ ॥

इति [14]श्रीमद्रौरवतन्त्रे[क्रियापादे][15]मोहिनीस्थापनविधिर्नाम सप्तत्रिंशः पटलः

---

[1] B, C, F, G : हविषान्तं pour हविरन्तं [2] A : तस्यैन्द्रोग्निं ; B : तस्येन्द्राग्निं ; C, F, G : तस्येन्द्रोग्निं
[3] G, G : पद्मकुण्डं तु [4] B : बस्तमांसप्रतिनिधिरपूपं च गुलोद्भवम् [5] A : शताहुति ; C, G : शताहुतिम्
[6] A : घोरी घोषिणी मर्दिनी च ; B : घोरिणी घोषिणी चैव ; G : घोरी घोषिणी मर्दिनी च
[7] B : भर्दिनी पालि पिङ्गली
[8] B : मर्षिणी विकृती मार्दी ; F : मरीची विक्षति मदी ; C, G : मरिमी विकृती मादी
[9] C : ब्रहिणी pour भृङ्गिणी ; F : ब्रह्मणी ; G : ब्रह्मिणी
[10] B, C, F, G : तु pour षु [11] A : वैवमाचरेत् ; C, F, G : ह्येवमाचरेत्
[12] A : कुर्याद्देवीं मोहिनिमूर्तिनीम् ; B : कुर्याद्देवीं मोहनमूर्तिकाम्
[13] B : कर्तव्यमुत्सवस्य मयोक्तवत् ; C, F, G : कर्तव्यमुत्सवं ह्येवमुक्तवत्
[14] A : श्रीरौरवतन्त्रे ; B omet श्रीमद्रौरवतन्त्रे
[15] A : मोहिनीस्थापनविधिपटलोऽष्टत्रिंशः ; B : मोहिनीस्थापनं नामाष्टात्रिंशः पटलः ; C : मोहिनीस्थापनविधिर्नाम षट्त्रिंशः पटलः ; E : मोहिनीस्थापनविधिः सप्तत्रिंशत्पटलः ; F, G : मोहिनीस्थापनविधिपटलः सप्तत्रिंशत्

# [अष्टत्रिंशः पटलः]

## [नागराजप्रतिष्ठा[1]]

### [मन्त्रोद्धारः[2]]

नागराजप्रतिष्ठां तु[3] प्रवक्ष्यामि समासतः। [4]सप्तमस्वरमुद्धृत्य [5]प्रथमस्वरमथापि वा ॥ १ ॥
बिन्दुनादसमायुक्तं मूलमन्त्रमिति स्मृतम् । [6]ब्रह्माङ्गानि च तेनैवमुद्धरेत्तत्क्रमेण तु[7] ॥ २ ॥

### [प्रतिमालक्षणम्[8]]

[9]रुद्रमात्रं समारभ्य द्विद्व्यङ्गुलविवर्धनात् । [10]सैकसप्ततिमात्रान्तमायामं [11]त्रिंशतिर्भवेत् ॥ ३ ॥

---

[1] Pour नागराजप्रतिष्ठाविधि voir *Kāraṇāgama* II, pp. 403-404, et *Kāraṇāgama* (T. No. 120) pp. 82-90, *Virāgama, paṭata* 91, *Sūkṣmāgama, paṭala* 83 et 84 et *Siddhāntadīpikā* (T. No. 120) pp. 98-128.

[2] cf. *Siddhāntadīpikā* (T. No. 120), p-114:
प्रणवं पूर्वमुच्चार्य त्वष्टवर्गस्य चादिकम् । आदिवर्गद्वितीयेन तच्चतुर्दशसंयुतम् ॥
बिन्दुनादसमायुक्तं शेषराजस्य मन्त्रकम् ॥

[3] B : च pour तु [4] A : सप्तस्वरं समुद्धृत्य [5] B : चाथवा प्रथमस्वरम्

[6] A : ब्रह्माङ्गानि चोक्तेनैवम् [7] B : उत्तरे तत्क्रमेण

[8] cf. *Sūkṣmāgama* 83, 1-13:
नागस्य लक्षणं वक्ष्ये शृणु त्वं तत्प्रभञ्जन । स्वर्णरजतताम्रेण शिलयेष्टकयाथवा ॥
दारुजैर्दर्भमृद्भिर्वा भुजङ्गं तं प्रकल्पयेत् । एकहस्तं समारभ्य वस्वङ्गुलविवर्धनात् ॥
चतुर्विंशतिहस्तान्तं नागायामं प्रकल्पयेत् । आयादिशोभनोपेतं शुभमानं परिग्रहेत् ॥
तन्मानं शतधा भज्यैकांशं चाङ्गुलं भवेत् । वेदांशं मुखमानं स्याद्व्द्य्रंशं मुखविस्तृतम् ॥
भान्वंशं फणदीर्घं स्यात्पञ्चांशं फणविस्तृतम् । नासापुटान्तरं पादं नासितारं शिवाङ्गुलम् ॥
तत्समं नासिदीर्घं स्याद्व्योमांशं दृष्टिमण्डलम् । तन्मध्ये यवमानेन कृष्णमण्डलमाचरेत् ॥
तद्विस्तारार्धमानेन ज्योतिर्मण्डलकं भवेत् । पक्ष्मदीर्घं द्विभागं स्यात्तद्विस्तारं शिवांशकम् ॥
पक्ष्म पञ्चाङ्गुलार्धं तु कर्णं पक्षाङ्गुलं भवेत् । वेदांशं कर्णविस्तारं युज्य सिंहस्य कर्णवत् ॥
चतुर्दन्तसमायुक्तं दन्तदीर्घं तदङ्गुलम् । करण्डमकुटैर्वापि चित्रवस्त्राकृतिस्तु वा ॥
मध्ये फणार्धमानेन तस्य पार्श्वे फणो भवेत् । फणसप्तेषु वा प्रोक्तं त्रिफणं वा समाचरेत् ॥
नाहं वै षोडशाङ्गुल्यं वालान्तं चाङ्गुलं भवेत् । पद्मपीठोपरिष्टात्तु त्रिपद्ममण्डलान्वितम् ॥
नासिमध्यमसूत्रं तु वालाग्रमृजुसूत्रकम् । अंशं वा द्वित्रियंशं वा हीनाधिक्यं न दोषभाक् ॥
शोभाङ्गुलसमोपेतं युक्त्या सर्वं समाचरेत् । नागलक्षणमेवोक्तम् "

[9] A : रुद्रमात्रसमारभ्य ; B : रुद्रमात्रं समावाह्य ; C, G : मुद्रामात्रं समारभ्य

[10] B : सैकविंशतिमात्रान्त्रम् ; C : सैकसप्तत्रिमात्रान्तं

[11] La forme grammaticale correcte est त्रिंशद् ; mais le mètre ne serait pas respecté.

[1]आयादि[2]षड्गुणोपेतं [3]यत्तन्मानं प्रगृह्य च । [4]सैकसप्ततितन्मानं भजेदेकांशमङ्गुलम् ॥ ४ ॥
[5]वेदांशं मध्यविस्तारं भान्वंशं [6]तत्र नाहकम् । अधः [7]पुच्छाग्रविस्तारो [8]मध्यादग्रं क्रमात्कृशम् ॥ ५ ॥
फणायामं तु भान्वंशं वस्वंशं फणविस्तृतम् । [9]घनमर्धाङ्गुलं प्रोक्तं [10]मध्यमगन्ध्यङ्गुलं भवेत् ॥ ६ ॥
एवं [11]पञ्चफणावक्त्रं पञ्च[12]मूर्धसमन्वितम् । अक्षिद्विपञ्चसंयुक्तं जिह्वाविंशतिसंयुतम् ॥ ७ ॥
दशश्रोत्रसमायुक्तं दशशृङ्ग[13]समायुतम् । दशदंष्ट्रासमायुक्तं हिरण्यसदृशप्रभम् ॥ ८ ॥
श्रोत्रं सुषिरमात्रं [14]स्याच्छृङ्गमर्धाङ्गुलं भवेत् । एवं [15]वै [16]नागराजं तं [17]युक्तं युक्त्या तु कल्पयेत् ॥९
लोहजं शैलजं [18]वापि दारुजं [19]वा प्रकल्पयेत् । मृण्मयं वाथ कर्तव्यं [20]धातुजं वा विशेषतः ॥ १० ॥
भद्रे [21]वा पद्मपीठे वा [22]शाययेदपरार्धकम् । [23]पूर्वार्धं वक्त्रमुद्धृत्य प्राङ्मुखं [24]वापरार्धकम् ॥ ११ ॥
द्वित्र्येकपञ्चवलयं [25]कृत्वान्योद्धृतमेव वा । [26]अन्यद्द्विपादद्विभुजं नेत्र[27]द्वयसमन्वितम् ॥ १२ ॥
करण्डमकुटोपेतं [28]नागपञ्चफणं शिरः । अभयं दक्षिणे हस्ते वरदं वामहस्तके ॥ १३ ॥
पीठे तु [29]शाययेद्वामपादमन्यं तु[30] लम्बयेत् । [31]त्रयद्वयेकफणोपेतं नागरूपं तु वा कुरु ॥ १४ ॥

[रत्नन्यासः, नेत्रोन्मीलनं च[32]]

रत्नन्यासं तु मूलेन हृदा वै नेत्रमोचनम्[33]। कृत्वा तु मधु सर्पिश्च सलिलं नालिकेरकम् ॥ १५ ॥

---

[1] B : आयतिः pour आयादि [2] A : षट्सुत pour षड्गुण
[3] B : यत्नमानं तु विंशतिः [4] B : सैकसप्ततिकं मानं
[5] C : वेदान्त pour वेदांशं ; F : वेदाङ्ग [6] C : तत्रिनाहकम् [7] A : पूजा pour पुच्छ
[8] A : मध्यभागं [9] A : वनमध्याङ्गुलं ; C, F : वनं मध्याङ्गुलं [10] A : मध्यमध्यङ्गुलं ; B : मध्यं मध्याङ्गुलम्
[11] A : पञ्चफणं वक्त्रं [12] C, G : मूर्ध्नि pour मूर्ध [13] C : समायतम् pour समायुतम्
[14] A : वा शृङ्गमध्याङ्गुलं [15] B : हि pour वै [16] A : नागराजानां
[17] A : युक्तियुक्त्या तु ; B : युक्तियुक्तं तु ; C : युक्त्या युक्त्यानु ; G : युक्तियुक्तानु
[18] C, G : वाथ [19] B : वाथ कल्पयेत् [20] C, G : भानुजं ; F : भुमाणं [21] C, F : च pour वा
[22] B : शाययेत परार्धकम् ; G : शाधयेदपरार्धकम्
[23] B : पूर्वार्धं वक्रमुद्धृत्य ; C : पूर्वं वक्त्रं च मुद्धृत्य ; F, G : पूर्वं बक्त्रं समुद्धृत्य [24] A : वा परान्तकम्
[25] G : धृत्वा pour कृत्वा [26] B : अन्यं द्विपादं द्विभुजं [27] A : त्रय pour द्वय [28] C : नागं pour नागं
[29] C : शाधयेद् pour शाययेत् [30] A : अन्यत्तु pour अन्यं तु
[31] A : त्रिद्व्येकव्रणोपेतं ; B : त्रिद्व्येकप्रव्रणोपेतं
[32] cf. *Virāgama* 91, 30b-35a:
रत्नन्यासं प्रकर्तव्यं लक्षणेन समन्वितम् । शैलजे लोहजे वापि दारुजे वापि कारयेत् ॥
स्थितमूर्तिं प्रतिष्ठाप्य रत्नन्यासं तु कारयेत् । नयनोन्मीलनं कुर्यान्नेत्रद्वययुते दिने ॥
स्वर्णसूचिकया चैव भ्रूरेखां शिल्पिना लिखेत् । मण्डलं च समालिख्य प्रच्छन्नपटसंयुतम् ॥
स्वर्णसूचिसमायुक्तं मध्वाज्यं चैव तर्पयेत् । अक्षिहोमं तु नेत्रेण आज्येनैव शताहुतिम् ॥
कपिलां दर्शयेत्पश्चान्नेत्रद्वययुते दिने । ब्राह्मणान्दर्शयेत्तत्र ब्रह्मजज्ञानमन्त्रतः ॥
[33] B : मोक्षणम् pour मोचनम्

क्षीरं हिरण्यसंयुक्तं तन्मन्त्रेण प्रदर्शयेत् । ईशानेन तु मन्त्रेण [1]ब्राह्मणान्दर्शयेत्ततः[2] ॥ १६ ॥
हृदा [3]गव्याभिषेकं तु स्नापयेद्गन्धतोयकैः ।

[जलाधिवासः[4]]

नानापुष्पैरलंकृत्य ग्रामं कृत्वा प्रदक्षिणम् ॥ १७ ॥
[5]जलमध्ये न्यसेद्बिम्बं पूर्वोक्तविधिना कुरु ।

[यागमण्डपः[6]]

प्रासादस्याग्रतः कुर्यान्मण्डपं सप्तहस्तकम् ॥ १८ ॥
[7]मध्ये तु वेदिकां कृत्वा मण्डपस्य त्रिभागतः । [8]तत्त्रिभागैकमुत्सेधं दर्पणोदरसन्निभम् ॥ १९ ॥
प्राच्यां कृत्वाग्निकुण्डं तु पद्मं वा वृत्तमेव वा ।

---

[1] G : ब्राह्मणं pour ब्राह्मणान्  [2] C : पुनः pour ततः  [3] G, C : गव्याभिषिच्याथ

[4] cf. *Kāraṇāgama* (T. No. 120), pp. 83-84:
बिम्बशुद्धिं ततः कृत्वा पश्चाद्ग्रामप्रदक्षिणम् । जलाधिवासनं कार्यं कण्ठदघ्ने जले शुभे ॥
गङ्गां च यमुनां चैव नर्मदां च सरस्वतीम् । सिन्धुं गोदावरीं चैव कावेरीं च जलान्तरे ॥
संकल्प्य स्वस्वनामानि जले नागं तु शाययेत् । अभितः कलशानष्टौ पूर्ववत्स्थापयेद्गुरुः ॥
दिवसं दिवसार्धं वा एकयामं जलोषितम् ।

cf. *Virāgama* 91. 35b-39a:
धामप्रदक्षिणं कुर्याल्लोहजस्य विधीयते । जलाधिवासनं कुर्यात्पञ्चगव्येन स्नापयेत् ॥
प्रतिमां कण्ठदघ्ने तु जले चैवाधिवासयेत् । वस्त्रयुग्मेन संवेष्ट्य प्रच्छन्नपटसंयुतम् ॥
मूलमन्त्रेण बि न्द्र जले चैवाधिवासयेत् । अभितः कलशानष्टौ लोकपालाधिदेवतान् ॥
गन्धपुष्पादिना पूज्य पायसान्नं बलिं ददेत् । एकरात्रं त्रिरात्रं वा पञ्चरात्रमथापि वा ॥

cf. *Sūkṣmāgama* 84, 20:
बिम्बशुद्धिं ततः कुर्याद्ग्रामावृत्तं तदन्तके । जलाधिवासनं पश्चात्"

[5] Les manuscrits A, B, C, E et F omettent le demi-*śloka* 18a.

[6] cf. *Virāgama* 91, 40-41a:
मण्डपं कारयेत्तत्र सप्ताष्टनवहस्तकम् । तन्मध्ये वेदिकां कुर्यात्परितः कुण्डमुच्यते ॥
चतुरश्राणि कुण्डानि पूर्ववद्धोममाचरेत् ।

cf. *Sūkṣmāgama* 84, 11b-14a:
शिवालयेऽन्यदेशे तु मण्डपं चतुरश्रकम् । धर्मरन्ध्राष्टहस्तं वा कलास्तम्भसमन्वितम् ॥
मण्टपं तु त्रिधा भज्य मध्यभागे तु वेदिका । रत्निमात्रसमुत्सेधा दर्पणोदरसंनिभा ॥
चतुर्द्वारसमायुक्तमलंकुर्याद्विशेषतः । योनिकुण्डाब्जकुण्डं वा पश्चिमे तु प्रकल्पयेत् ॥

[7] Le ms. G omet le second pāda du *śloka* 19a, les *śloka* 19b, 20a et le premier pāda du *śloka* 20b et lit : मध्ये तु वेदिकां कृत्वा प्रोक्षयेदस्त्रमन्त्रतः

[8] B : तत्र pour तत्त्रि

[शयनाधिवासः[1]]

गोमयालेपनं कृत्वा प्रोक्षयेदस्त्रमन्त्रतः ॥ २० ॥
स्थण्डिलं वेदिकायां तु शालिभिस्तिलतण्डुलैः । शयनं कल्पयेत्तत्र गन्धपुष्पादिभिर्यजेत् २१ ॥
जलादानीय बिम्बं तु स्नापयेत्पञ्चगव्यकैः । [2]शुद्धाद्भिरभिषिच्याथ [3]बध्वा प्रतिसरं हृदा ॥२२।
गन्धादिभिः समभ्यर्च्य नववस्त्रेण वेष्टयेत् । शयने शाययेत्पश्चात् [4]प्राक्शिरश्चोर्ध्ववक्त्रकम् ॥ २३ ॥

[कुम्भस्थापनम्[5]]

तस्य दक्षिणपार्श्वे तु [6]कूर्चादिभिः समन्वितम् । गन्धाम्बुपूरितं कुम्भं नागराजाभिमन्त्रितम् ॥२४॥

---

[1] cf. *Sūkṣmāgama* 84, 14b-15a:

उद्वास्य शिल्पिनं पश्चाद्भूसुरान्भोजयेत्क्रमात् । गोमयेनोपलिप्याथ वास्तुहोमं च कारयेत् ॥

cf. *Kāraṇāgama* (T. No. 120) p. 84:

गोमयेनानुलिप्याथ शालिपिष्टेन रञ्जितम् । स्थण्डिलं वेदिकोर्ध्वे तु द्रोणाष्टकसुशालिभिः ॥
तण्डुलैश्च चतुर्द्रोणैर्द्रोणद्वयतिलैरपि । तन्मध्ये नलिनं कृत्वा साष्टपत्रं सकर्णिकम् ॥

[2] C : शुद्धाद्यैः pour शुद्धाद्भिः

[3] Le ms. B omet le second pāda du *śloka* 22b et le premier pāda du *śloka* 23a et lit शुद्धाद्भिरभिषिच्याथ नववस्त्रेण वेष्टयेत्

[4] C : शिरश्चोर्ध्वं च वक्त्रकम्

[5] cf. *Virāgama* 91, 39b-46a:

जलादुत्तीर्य पूर्वेद्युः स्नापयेत्पञ्चगव्यकैः ।......शयनं पञ्चभिः कल्प्य मूलेन प्रतिमां न्यसेत् ॥
प्रच्छन्नपटसंयुक्तं गन्धपुष्पादिनार्चयेत् । अभितः कलशानष्टौ विन्यसेन्नागबीजतः ॥
सवस्त्रान्सापिधानांश्च सहिरण्यान्सकूर्चकान् । अनन्तो वासुकिश्चैव तक्षः कार्कोट एव च ॥
शङ्खश्चैव महाशङ्खः शङ्खपालस्तथैव च । गुलिकाद्यष्टनागानां वेदिकुम्भेषु पूजयेत् ॥
मध्यकुम्भे तु संपूज्य नागराजं प्रपूजयेत् । तत्तत्स्वनाममन्त्रेण पूजयेत्तु यथाक्रमम् ॥
दद्याद्गुलौदनं चैव ताम्बूलं दापयेत्ततः ।

cf. *Sūkṣmāgama* 84, 20b-26a:

" रक्षाबन्धं ततः परम् ॥
निद्राकुम्भसमायुक्तं शयनं परिकल्पयेत् । वेदिमध्ये विशेषेण साष्टद्रोणैश्च शालिभिः ॥
तन्मध्ये नलिनं लिख्य तिलतण्डुलसंयुतम् । दशकुम्भसमायुक्तं त्रिसूत्रैः परिवेष्टितम् ॥
अन्तःकूर्चसमायुक्तं नालिकेरोपरि न्यसेत् । प्रतिमारत्नसंयुक्तं कूर्चवस्त्रादिवेष्टितम् ॥
आवाहनादिमार्गेण स्थापयेत्तु विचक्षणः । मध्यमे नागराजं च नागबिम्बे तु पूजयेत् ॥
नागकन्यां समावाह्य तद्वामे वर्धनीं न्यसेत् । पूर्वादीशानपर्यन्तमनन्ताद्यर्चयेत्सुधीः ॥
गन्धाक्षतैश्च पुष्पैश्च नैवेद्यैश्च प्रपूजयेत् ।

[6] B : कूपादिभिः ; F : वामादिभिः

स्थापयेत्परितोऽष्टौ च कुम्भान्संस्थापयेत्तथा[1] । [2]अनन्तादीन्न्यसेत्तेषु[3] [4]हविरन्तं [5]समर्चयेत् ॥ २५॥

[होमः[6]]

ततो होमं प्रकुर्वीत ह्यनेन विधिना बुधः । समिदाज्यचरूँल्लाजान् [7]सक्तुक्षीरयवांस्तिलान् ॥ २६ ॥
कदलीं पनसं चैव सर्षपांश्च यथाक्रमम् । [8]सद्याद्यस्त्रावसानैस्तु प्रत्येकं पञ्चविंशतिः ॥ २७ ॥
[9][स्पर्शाहुतिं ततो हुत्वा पूर्णाहुतिमथाचरेत् ।

[कुम्भाभिषेकः[10]]

ततः प्रभाते विमले स्नानं कृत्वा तु देशिकः ॥ २८ ॥
उत्थाप्य शयनान्नागं स्थापयेच्च ततः परम् । प्रायश्चित्तं ततो हुत्वा त्वष्टोत्तरसहस्रकम् ॥ २९ ॥

---

[1] B, C : ततः pour तथा

[2] Le ms. A ajoute: तस्य दक्षिणपार्श्वे तु कूर्चादिभिः समन्वितम् ; voir *śloka* 24a

[3] B : न्यसेतत्र pour न्यसेत्तेषु ; C : यजेतेषु [4] A : हविषान्तं [5] C : समर्पयेत्

[6] cf. *Kāraṇāgama* (T. No. 120) pp 87-88:

अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् । कुण्डमध्ये यजेद्धीमान्नागस्याकृतिरूपकान् ॥
समिदाज्यचरूँल्लाजान्सर्षपांश्च यवांस्तिलान् । होमद्रव्याणि सप्तैतान्होमयेद्देशिकोत्तमः ॥
षडङ्गमूलमन्त्रैश्च प्रत्येकं तु सहस्रकम् । सर्पगायत्रिमन्त्रैश्च अष्टोत्तरसहस्रकम् ॥
द्रव्यं प्रति विशेषेण कुर्यात्स्पर्शाहुतिं तथा । मकुटं वदनं चैव हृदयं नाभिगुह्यकम् ॥
पादौ चैव तु तद्द्रव्यं हुत्वा तेनैव मन्त्रतः । मूर्धादिपादपर्यन्तं हुत्वान्ते च तथा स्पृशेत् ॥
एवं जागरणं रात्रौ प्रभाते स्थापनं कुरु ॥

cf. *Virāgama* 91, 46b-50a:

ततो होमं प्रकर्तव्यं पलाशसमिधा सह । समिदाज्यचरूँल्लाजान्सर्षपांश्च यवांस्तिलान् ॥
शालिनीवारगोधूमं मुद्गेनैव समन्वितम् । पञ्चब्रह्मषडङ्गेन क्रमाद्धुत्वा तु देशिकः ॥
इदं विष्णुरिति मन्त्रेण आज्येनैव शताहुतिम् । विष्णोर्नुकं च मन्त्रेण चरुणा च शताहुतिम् ॥
हुत्वा हुत्वा स्पृशेन्मूर्तिं व्याहृतिं जुहुयात्ततः । वेदना वेदन त्वा तु गणानां त्वेति होमयेत् ॥

cf. *Sūkṣmāgama* 84, 26b-30:

ततः कुण्डान्तिकं गत्वा होमं कुर्याद्विचक्षणः । अग्निकार्योक्तमार्गेणाग्निमध्ये सुपूजयेत् ॥
समिदाज्यान्नशालींस्तु यवगोधूमवैणवम् । अपामार्गं च नीवारं प्रियङ्गुतिलसर्षपम् ॥
लाजं पलाशसंयुक्तं होमयेत्तु यथाक्रमम् । नागब्रह्माङ्गमूलैस्तु प्रत्येकं होममाचरेत् ॥
सहस्रं वा तदर्धं वा तदर्धार्धमथापि वा । अष्टोत्तरशतं वापि पञ्चाशत्पञ्चविंशतिः ॥
प्रायश्चित्ताहुतिं हुत्वा पूर्णाहुतिमथाचरेत् ॥

[7] A : सक्थु pour सक्तु [8] A : सद्यश्चास्त्रवनान्ते तु ; B : सद्याद्यस्त्रावसानं तु ; C : सद्याद्यस्त्रावसाने तु

[9] Dans tous les manuscrits utilisés pour cette édition, il semble qu'il y ait une lacune après le *śloka* 27b et avant 32a, on ne trouve en effet aucune description de कुम्भाभिषेक. Les *śloka* proposés entre crochets à titre de reconstruction hypothétique, ont pour seul objet de suggérer le contenu de cette lacune, et s'appuient pour cela sur l'autorité du *Rauravāgama-paddpati* (T. No 120)

[10] cf. *Kāraṇāgama* (T. No. 120) pp. 89-90:

आचार्यो मूर्तिपैः सार्धं स्नानत्रयमथाचरेत् । उत्थाप्य शयनान्नागं स्थापनं च ततः परम् ॥
प्रायश्चित्तं ततो हुत्वा अष्टोत्तरसहस्रकम् । अष्टबन्धं ततः कृत्वा बन्धयेत्सुदृढं कुरु ॥
सुमुहूर्ते सुलग्ने च गुरवे संनिवेदयेत् । कुम्भानुद्धृत्य शिरसा आवृतान्कलशोदकान् ॥

सुमुहूर्ते सुलग्ने च गुरवे संनिवेदयेत् । कुम्भानुद्धृत्य शिरसा चावृतान्कलशोदकान् ॥ ३० ॥
अभिषिच्य यथान्यायं पूजयेत्सर्पराजकम् । पञ्चामृतैः पञ्चगव्यैर्गन्धोदकेक्षुसारकैः ॥ ३१ ॥]
क्षीरतण्डुलचूर्णेन नारिकेलोदकेन च । [अभिषिच्य क्रमेणैवमुपचारांश्च दापयेत् ॥ ३२ ॥]
पाद्यं सद्येन दत्त्वा तु वामेनाचमनीयकम् । अघोरेणार्घ्यकं दत्त्वा चास्त्रेणैवाभिषेचनम् ॥ ३३ ॥
गन्धमीशानमन्त्रेण पुष्पं वै हृदयेन तु । धूपं तु शिरसा दत्त्वा दीपं नेत्रेण दापयेत् ॥ ३४ ॥
माल्यमाभरणं चैव [1]कवचेनैव दापयेत् । नैवेद्यं हृदयेनैव [2]नमस्कारोऽस्त्रमन्त्रतः ॥ ३५ ॥
[3]वेदिकायां स्थापयित्वा [4]स्नपनोक्तं समाचरेत् । एवं यः कुरुते मर्त्यः सर्वरोगाद्विमुच्यते ॥ ३६ ॥

इति [5]श्रीमद्रौरवतन्त्रे [क्रियापादे] [6]नागराजप्रतिष्ठा नामाष्टत्रिंशः पटलः ॥

---

अभिषिच्य क्रमेणैताञ्ज्ञात्वा चैव समाचरेत् । धूपदीपं च नैवेद्यं ताम्बूलाद्युपचारकैः ॥
पुष्पाञ्जलिं ततो दत्त्वा प्रणम्य दण्डवद्भुवि । मन्त्रहीनं क्रियाहीनं द्रव्यहीनं कृपानिधे ॥
यत्पूजितं मया देव परिपूर्णं तदस्तु ते । यजमानस्ततो द्रव्यवस्त्रालंकारभूषणैः ॥
शान्तिकुम्भाभिषेकं च दानानि च यथाक्रमम् । आचार्यं पूजयेत्पश्चाद्गोदानं भूमिदानकम् ॥
उत्तमं पञ्चनिष्कं स्यान्मध्यमं तु तदर्धकम् । तदर्धमधमं ज्ञेयमाचार्यस्य तु दक्षिणा ॥
ऋत्विग्भ्यो दक्षिणां दद्याद्दम्पती पूजयेत्क्रमात् । दशदानं ततः कृत्वा सर्वेभ्यो भूरिदक्षिणाम् ॥
ब्राह्मणान्भोजयेत्तत्र अष्टोत्तरशतानि च । आशीर्वादास्ततो ग्राह्याः सर्वान्कामानवाप्नुयात् ॥

cf. *Virāgama* 91, 5( b-54a:
ततः प्रभाते विमले स्नानं कृत्वा तु देशिकः । स्थितिन्यासं प्रकर्तव्यं पूर्ववल्लक्षणान्वितम् ॥
ततोऽवसानहोमं तु समिदाज्यचरुभिः सह । नागमूलेन हृदये मन्त्रेणैव क्रमान्न्यसेत् ॥
सर्वद्रव्यसमायुक्तं हव्यवाहं समुच्चरन् । स्विष्टमग्नेतिमन्त्रेण जुहुयात्तदनन्तरम् ॥
ब्राह्मणान्भोजयेत्तत्र यागकुम्भाभिषेचयेत् । महाहविर्निवेद्याथ ताम्बूलं दापयेत्ततः ॥

cf. *Sūkṣmāgama* 84, 31-39:
उत्थाप्य शयनाद्बिम्बं स्पर्शाहुतिमथाचरेत् । स्वस्थाने स्थापयेद्बिम्बं न्यासं कृत्वा यथाक्रमम् ॥
अग्नौ मूर्तिं समुत्थाप्य कुम्भस्योपरि विन्यसेत् । आचार्यं पूजयेत्पश्चाद्दक्षिणां च प्रदापयेत् ॥
यात्रादानं पुरा कृत्वा दशदानं ददेत्क्रमात् । वेद्याः कुम्भं समुत्थाप्य बिम्बाग्रे विन्यसेत्क्रमात् ॥
कुम्भाद्बीजं समुत्थाप्य सर्पस्योपरि विन्यसेत् । तद्वामे वर्धनीं न्यस्य एकं चेत्पीठके न्यसेत् ॥
अनन्ताद्यष्टनागांश्च पूर्वादिकलशान्न्यसेत् । महाभिषेकसंयुक्तं वस्त्रैर्गन्धैरलंकृतम् ॥
पुष्पमाल्यैरलंकृत्य सर्वाभरणभूषितम् । महानैवेद्यसंयुक्तं ताम्बूलं धूपदीपकम् ॥
उपचाराणि सर्वाणि दापयेत्तु विचक्षणः । ब्राह्मणान्भोजयेत्पश्चाद्दक्षिणाभिश्च दापयेत् ॥
अनेन विधिना यस्तु करोति स्थापनं यदि । नागेन्द्रस्य प्रसादेन सर्वान्कामानवाप्नुयात् ॥
आयुरारोग्यपुत्रार्थमैश्वर्यादिसमृद्धिदम् । इह लोके सुखं प्राप्य पुण्यलोकं लभेत्सुधीः ॥

1 B : कवचेनैवमाचरेत् ; C : कवचेनैव तु दापयेत्  2 B : वन्दनं चास्त्रमन्त्रतः
3 A : वेद्यायां स्थापनेनैव ; C : नैवेद्यस्थापनेनैव  4 A : स्नपनं तु
5 A : श्रीरौरवतन्त्रे ; B omet श्रीमद्रौरवतन्त्रे
6 A : नागराजप्रतिष्ठा एकोनचत्वारिंशः पटलः ; B : नागराजप्रतिष्ठा नामैकोनचत्वारिंशः ; C : नागराजप्रतिष्ठाविधिर्नाम पञ्चत्रिंशत्पटलः ; E : नागराजप्रतिष्ठाविधिः षट्त्रिंशत्पटलः ; F : नागराजविधिपटलः षट्त्रिंशतितमः

# [एकोनचत्वारिंशः पटलः]

## [प्रासादलक्षणविधिः[1]]

### [सदनविधानम्[2]]

**वक्ष्येऽहं सदनानां तु संक्षेपाल्लक्षणं [3]रुरो । एकहस्तं समारभ्य [4]द्विद्विहस्तविवर्धनात् ॥ १ ॥**
**[5]एकसप्ततिहस्तान्तं षट्त्रिंशत्सदनं भवेत्[6] । [7]विस्तारसदृशादूर्ध्वे पादमर्धं त्रिपादकम् ॥ २ ॥**

---

[1] Pour प्रासादलक्षण voir *Aṃśumatkāśyapa, paṭala* 6, 8, 9, 21, 22, 24 et 26 à **40**, ***Ajita, paṭala*** 12 à 14, *Kāmika* I 49, 50, 53, 55et 60, *Kāraṇa* I 5 et 7, *Kiraṇa* III 25, ***Dīpta, paṭala*** 2, 5 et 6 à 9, *Santānasaṃhitā, paṭala* 5, et *Suprabheda* I 31.

[2] cf. *Aṃśumatkāśyapa* 22, 37b-58a:
त्रिचतुर्हस्तमारभ्य द्विद्विहस्तविवर्धनात् । नवपङ्क्तिकरान्तं तु आभासैकतलं भवेत् ॥
एवमष्टविधं मानं युग्मायुग्मं चतुश्चतु: । पञ्चषड्ढस्तमारभ्य द्विद्विहस्तविवर्धनात् ॥
रुद्रभानुकरान्तं तु आभासद्वितलेऽष्टधा । सप्ताष्टहस्तमारभ्य द्विद्विहस्तविवर्धनात् ॥
तिथिकलाकरान्तं तु आभासत्रितले दश । ग्रहकर्म समारभ्य सप्ताष्टाधिकपङ्क्तय: ॥
चतुष्पञ्चतलं वाथ युग्मायुग्माश्च ते दश । विस्तारं सप्तषट्पञ्चभागं कृत्वा द्विजोत्तम ॥
रसभूतयुगांशं तु विस्ताराद्रोपयेत्क्रमात् । विस्ताराद्द्विगुणं चैव तस्मादष्टांशमाधिकम् ॥
पञ्चधाभ्युदितं तुङ्गमाभासे सदने द्विज । शान्तिकं पौष्टिकं चैव जयदं चाद्भुतं तथा ॥
सार्वकामिकमित्येतदभिधानं क्रमाद्भवेत् । हस्तैरेतैस्तु वृद्धया वा हान्या वा पूर्णमाचरेत् ॥
आभासं हर्म्यमाख्यातं विकल्पमधुना शृणु । नवपङ्क्तिकरात्पञ्चषट्पञ्चाशत्करान्तकम् ॥
द्विद्विहस्तविवृद्धया तु चतुर्विंशतिसंख्यया । पञ्चभूमिं समारभ्य यावदर्कतलं क्रमात् ॥
अधममध्यमोत्कृष्टास्त्रयो भेदास्तलं प्रति । सप्ताष्टाधिकपङ्क्त्यादि त्रित्रिहस्तविवर्धनात् ॥
षट्सप्ताधिकाशीत्यन्तमुच्चं प्रागिव संख्यया । एवं विकल्पमाख्यातं छन्दमार्गमथ शृणु ॥
त्रिचतुर्दशहस्तादि द्विद्विहस्तविवर्धनात् । पञ्चषट्षष्टिहस्तान्तं व्यासं वै सप्तविंशति: ॥
वेदभूमिं समारभ्य भानुभूम्यवसानकम् । अधममध्यमोत्कृष्टं मानं स्याद्वै तलं प्रति ॥
सप्ताष्टदशहस्तादि त्रित्रिहस्तविवर्धनात् । पञ्चषण्णवतिर्यावदुच्चं प्रागिव संख्यया ॥
अधममध्यमोत्कृष्टं तुङ्गभेदं तलं प्रति । छन्दमेवं समाख्यातं जातिहर्म्यमथ शृणु ॥
सप्ताष्टदशहस्तादि द्विद्विहस्तविवर्धनात् । यावत्सप्ततिहस्तान्तं सप्तविंशतिसंख्यया ॥
चतुर्भूमिं समारभ्य यावदर्कतलावधि । तावद्विस्तारमाख्यातमुत्सेधं शृणु सुव्रत ॥
एकद्वाविंशहस्तादि त्रित्रिहस्तविवर्धनात् । यावदाशतहस्तान्तमुच्चं प्रागुक्तसंख्यया ॥
अधममध्यमोत्कृष्टमुत्सेधं वै क्रमोदितम् । एवं जातिविमानं तु सप्तविंशतिधोदितम् ॥
जातिच्छन्दविकल्पं च आभासेन द्विजोत्तम । महतीष्वन्तरालपाश्च क्षुद्रनाम्ना क्रमोदिता: ॥

[3] **B** : शृणु pour रुरो  [4] A : द्विहस्तं च pour द्विद्विहस्त ; B : द्विहस्तादि

[5] B, G : सैक pour एक ; F : यैक  [6] A, B : तदनन्तरम् pour सदनं भवेत्

[7] G : विस्तारं pour विस्तार

[1]समं सपादमुत्सेधः पञ्चधा शान्तिकादयः। शान्तिकं पौष्टिकं चैव जयदाद्भुतमेव च ॥ ३ ॥
[2]सार्वकामिकमित्येते सदनस्य [3]प्रकीर्तिताः । आदौ तु सप्तमानं तु क्षुद्राख्यसदनस्य तु ॥ ४ ॥
तदन्ते सप्तमानं [4]चाप्याभासाख्यं प्रशंसितम् । [5]सप्तसंख्योदिताद्यन्ते विकल्पमभिधीयते ॥ ५ ॥
तदन्ते [6]तत्समं छन्दं [7]शेषाष्टौ [8]जातिरुच्यते । एकद्वित्रितलं वापि क्षुद्रमानेषु कारयेत् ॥ ६ ॥
त्रिचतुष्पञ्चभूमीर्वा कुर्यादाभासमानके । षट्सप्ताष्टतलं वापि [9]विकल्पे तु विधीयते ॥ ७ ॥
[10]दशनवाष्टभूमीर्वा छन्दमाने तु कल्पयेत् । त्रयोदशकलाभूमी [11]जातिहर्म्ये [12]प्रशंसिते ॥ ८ ॥
त्रिचतुर्भागमारभ्य द्विद्विभागविवर्धनात् । ससप्तवसुभागाढ्य[13]चत्वारिंशांशकावधिः ॥ ९ ॥
[14]एकाद्यर्कतलान्तानां यथायुक्त्या प्रकल्पयेत् ।

---

[1] cf. *Aṃśumatkāśyapa* 26, 15-27a:

हर्म्योच्चं वसुधा भज्य एकांशं हि तलोन्नतम् । द्विभागं चरणायामं प्रस्तरं चैकभागया ॥
गलोच्चं त्वेकभागेन द्विभागं शिखरोदयम् । एकांशं स्तूपितुङ्गं तु कल्प्यैवं शान्तिकं भवेत् ॥
शान्तिके मञ्चमानं तु दशाष्टसप्तभागकम् । एकांशरहितं शेषं मञ्चं वा प्राग्वदेव वा ॥
एवं शान्तिकमाख्यातं पौष्टिकं चाधुना शृणु । सदनोच्चे नवांशे तु शिवांशं तु तलोदयम् ॥
अर्धपादसमायुक्तं द्व्यंशं तु चरणोदयम् । मञ्चमानं तथैकांशं सार्धपादांशकं गलम् ॥
सत्रिभागत्रिभागं तु शिखरोदयमीरितम् । स्तूप्युत्सेधं तथैकांशं पौष्टिकं सदनं त्विदम् ॥
सदनोच्चे दशांशे तु अधिष्ठानोदयं शिवम् । सार्धद्व्यंशं तु पादोच्चं प्रस्तरं तु शिवांशकम् ॥
साधांशं गलमानं तु गुणांशं शिखरोदयम् । एकांशं स्तूपिमानं तु जयदं तदुदाहृतम् ॥
रुद्रांशे हर्म्यतुङ्गे तु सपादांशं धरातलम् । सार्धद्व्यंशं तु पादोच्चं प्रस्तारं तु शिवांशकम् ॥
अध्यर्धांशं तु कण्ठोच्चं सार्धत्र्यंशं तु शीर्षकम् । शेषं स्तूप्युदयं ख्यात त्वद्भुतं सदनं भवेत् ॥
तुङ्गे सप्तांशभागे तु त्रिपादांशं धरातलम् । पक्षांशं पादतुङ्गं तु त्रिपादांशं तु प्रस्तरम् ॥
त्रिपादांशं गले मानं शिखरोच्चं द्विभागकम् । स्तूप्युत्सेधं तथैकांशमेतत्स्यात्सार्वकामिकम् ॥
शान्तिकाद्युदयोपेतं हर्म्यगण्यं क्रमोदितम् ॥

[2] A, B : सार्वकालिक pour सार्वकामिक    [3] G : प्रकीर्तितम्
[4] A : आभासाख्यप्रशासिता ; B : आभासाख्या प्रशासिता
[5] A : सप्तसंख्यादिता द्व्यान्ते ; B ; F : सप्तसंख्यादि तद्यान्ते ; G : सप्तसंख्योदिताद्यान्ते
[6] C : सप्तमछन्दं pour तत्समं छन्दं    [7] B : शेषेऽष्टौ    [8] C, F G : ज्योति pour जाति
[9] A : विकल्पं तु
[10] B : नवाष्टदश pour दशनवाष्ट    [11] A : छन्दमाने pour जातिहर्म्ये    [12] A : प्रशंसितः
[13] A, B : चत्वारिंशत्करावधि    [14] A, B : एकाद्येक pour एकाद्यर्क

[प्रासादालंकारः[1]]

[2]गृहपिण्डयलिन्दहारं च [3]युक्तियुक्तं तु [4]कल्पयेत् ॥ १० ॥

[5]व्योमांशं [6]कर्णकूटानां [7]पञ्जराणां तथैव च । [8]कोष्ठायामं तदक्षांशं[9] [10]हारान्तरमथार्धकम् ॥११॥

---

[1] cf. *Aṃśumatkāśyapa* 28, 64-66:

मानसूत्रान्तरं धर्मभागं कृत्वा द्विजोत्तम । गर्भगेहं तु वेदांशं गृहपिण्डयंशमावृतम् ॥

परितोऽलिन्दमेकांशं हारं भागेन कल्पयेत् । तेष्वेककूटविस्तारं मध्ये कोष्ठायतं द्वयम् ॥

तयोर्मध्यैकभागेन पञ्जरव्यासमुच्यते । हारान्तरमथांशेन पञ्जरस्य तु पार्श्वयोः ॥

cf. *ibid*, 29, 2:

रव्यंशे मानसूत्रान्तः कृते गर्भगृहं रसम् । गृहपिण्डयलिन्दहारादि प्रत्येकं चैकभागया ॥

cf. *ibid*, 29, 37-38a:

मानसूत्रान्तरं नन्दभागं कृत्वा विशेषतः । गर्भगेहं गुणांशं स्याद्भागेन गृहपिण्डिका ॥

अलिन्दमंशेन कर्तव्यं हारं भागेन कल्पयेत् ॥

cf. *ibid*, 29, 46b-47:

गेहव्यासं तु धर्मांशं कृत्वा नाळीगृहं चतुः । गृहपिण्डयंशमानेन अलिन्दं चैकभागया ॥

हारव्यासं शिवांशेन परितः परिकल्पयेत् ॥

cf. *ibid* , 31, 2-3a:

विस्तारं रुद्रधा भज्य गुणांशं गर्भगेहकम् । द्विभागं गृहपिण्डी स्यादलिन्दं चैकभागया ॥

हारा भागेन कर्तव्या"

[2] **A** : ग्रहाणाषाढयमिन्द्रहारा च ; **B** : ग्रहषाणाढयमिन्द्रहारा ; **G** : ग्रहषण्मुद्रहारा च

[3] **A** : युक्तियुक्त्या [4] **B** : योजयेत् [5] **C** : व्योमांशु

[6] Pour कर्णकूट voir *Aṃśumatkāśyapa* 30, 30, 2a:

तलं प्रत्युदितव्याससमाश्रं कर्णकूटकम् ॥

[7] Pour पञ्जर voir *Aṃśumatkāśyapa* 30, 20-27:

"पञ्जरस्त्वधुनोच्यते ॥

उपानादुत्तरान्तं तु नवभागविभाजिते । उपपीठमथांशेन पक्षांशं तु धरातलम् ॥

वेदांशं चरणायामं मञ्चमध्यर्धभागया । अधांशं वेदिकामानं कपोतान्तं गलोदयम् ॥

प्रतिवाजनसीमान्तं पञ्जरोच्चमुदाहृतम् । प्रासादस्य च बाह्ये तु यथाशोभांशनिर्गतिः ॥

पञ्जरं नासिकाकारं कूटकोष्ठाकृतिस्तु वा । हस्तिपृष्ठविमानस्य शिखराभमथापि वा ॥

एवं त्वनेकभेदेन पञ्जराकृतिरुच्यते । यथेष्टं तत्र कर्तव्यं हर्म्येष्वनेकभूमिषु ॥

एवमादितले कुर्यादन्तरप्रस्तरान्वितम् । मानसूत्रात्तु निष्क्रान्तं युक्तमेवं समाचरेत् ॥

पञ्जरं नीव्ररहितं प्रस्तरोर्ध्वे विशेषतः । कर्णकूटसमं सार्धं त्रिपादं वाथ विस्तृतम् ॥

तद्व्याससदृशं तुङ्गं युक्त्या पञ्जरमाचरेत् ॥

[8] Pour कोष्ठ voir *Aṃśumatkāśyapa* 30, 2b:

आयताश्रं तु कोष्ठं स्याच्चतुष्पादैकभित्तितः ।

[9] **A** : कोष्ठावस्तु पदक्षांशं ; **B** : पदाक्षांशं तु कोष्ठायां

[10] **A** : हारान्तस्परमार्थकम् ; **B** : हारां तस्परमार्धकम ; **G** : हाराणां तरस्रार्थकम्

19

[1]सद्ममध्येऽर्धमध्ये च [2]कोष्ठान्संकल्पयेद्बुधः। [3]कण्ठेषु कर्णकूटानि [4]तयोर्मध्ये तु पञ्जरान् ॥ १२ ॥
[5]हारान्तरं तयोर्मध्ये कल्पयेत्कल्पवित्तमः। अधिष्ठानोपरिष्ठात्तु[6] [7]प्रस्तरोर्ध्वे तु वा बुधः ॥ १३ ॥
देवेश्वरप्रतिष्ठा[8] तु कर्तव्या [9]सकलस्य वा।

[गर्भगृहम्[10]]

[11] प्रासादव्यासस्याग्न्यंशे व्योमांशं गर्भगेहकम् ॥ १४ ॥

प्रासादार्धं[12] तु वा [13]भूतभागेऽग्न्यंशं तु वा गृहम्। शेषं [14]भित्तिविशालं स्यात्क्षुद्राणां तु रुरो विदुः ॥
[15]गृहपिण्डयलिन्दहाराश्चाप्याभासाद्ये[16] तु योजयेत्। [17]हारालिन्दं [18]गृहपिण्डेर्बाह्यतः परिकल्पयेत् ॥
एकादिनवसंख्यातमलिन्दं [19]युक्तितो भवेत्। [20]कण्ठे कण्ठे तु सोपानमलिन्देषु[21] [22]प्रकल्पयेत् ॥ १७ ॥
[23]अलिन्दालिन्दसंवेशं प्रदक्षिणवशात्कुरु। गर्भगेहादलिन्दान्तं[24] घनं शैलेष्टकादिभिः ॥ १८ ॥
उपर्युपरि सोपानं [25]हारालिन्दं क्रमान्नयेत्[26]।

---

[1] B : सन्मध्यमे pour सद्ममध्ये ; G : सभामध्ये [2] B : कोष्ठात् pour कोष्ठान्
[3] A : कर्णेषु कर्णकूपानि ; C : कण्ठेषु कण्ठकूटानि [4] B : तयोर्मध्यं तु पञ्जरम्
[5] A : हारात्तयोन्तरार्मध्ये ; B : हाविक्तयोन्तरं मध्ये ; C : हारान्तरान्तयोर्मध्ये [6] A : वा pour तु
[7] A : प्रस्तरोर्ध्वे तु वार्षयः : C : प्रस्तरोर्ध्वोत्सवं बुधः ; G : प्रस्तरोर्ध्वाद्भुवा बुधः
[8] C, G : प्रतिष्ठां pour प्रतिष्ठा [9] A, B, G : सकलं तु वा
[10] cf. *Aṃśumatkāśyapa* 26, 11-14a;
हर्म्यतारत्रिभागैकं गर्भगेहस्य विस्तृतम्। पञ्चभागे त्रिभागं च वेदांशं सप्तभाजिते ॥
दशांशे भूतभागं तु रसांशं रुद्रभाजिते। त्रयोदशांशे सप्तांशं वस्वंशं तिथिभाजिते ॥
सप्तदशांशे नवांशं च व्यासार्धं च द्विजोत्तम। गर्भगेहस्य विस्तारं नवधा कीर्तितं मया ॥
शेषं भित्तिविशालं स्यात्परितः कल्पयेद्बुधः।
voir aussi *Ajitāgama* 11, 21-27.
[11] A : प्रासादव्यासमंशेंऽशे [12] G : अल्पं pour अर्धं [13] A : भूतभागान्यंशं
[14] C, G : भक्ति pour भित्ति
[15] A : गृहाणामिन्द्रहारा च ; B : हेषणामिन्द्रहारा च ; C : गृहषण्मुद्रहारा च
[16] A : आभासाभ्यां pour आभासाद्ये [17] B : हारालिन्द्रं ; C : आराविन्द्रं ; G : आराविन्दुं
[18] A : गृहे षण्डिबाह्यतः ; C : गृहे षण्डं बाह्यतः ; G : गृहे षण्डमग्रतः
[19] A : युक्तितो परे ; B : युक्तितो वरे [20] A, B : कर्णे कर्णे तु [21] B : अलिन्द्वेषु pour अलिन्देषु
[22] B : परिकल्पयेत्
[23] A : अलिन्ददिन्द्रसंवेशं ; B : अलिन्द्रमिन्द्रसंवेशं ; C : अलिन्द्रादिन्दुसंसंवेशं ; F : अलिन्द्रादिन्द्रसंवेशं
[24] B : अलिन्द्रान्तं pour अलिन्दान्तं [25] C : हारालिन्द्रं ; C, F : हारमिन्द्रं [26] B : न्यसेत् pour नयेत्




NĀGARA VIMĀNA



VESARA VIMĀNA

[षड्वर्गः[1]]

व्योमाक्षिशिवचन्द्राश्विनीरुद्राश्चाष्टभागके ॥१९॥
[2]आधारं चरणं [3]मञ्चं [4]ग्रीवशीर्षं च कुण्डलम् । मानमेकतले कुर्याद्रुद्रांशे द्वितलोदये[5] ॥ २० ॥
अधिष्ठानाङ्घ्रिमञ्चाङ्घ्रि [6]प्रस्तरं गलमस्तकम् । [7]स्थूपिमानं क्रमादेकं [8]द्वैकद्वैककमक्षिकम् ॥ २१ ॥
[9]एकस्मादस्य भागोर्ध्वं गुणभागेन भाजिते । त्रितलस्य तलादीनामुच्चमेवं विधीयते ॥ २२ ॥
[10]कृत्वैवं मानकं युक्त्या कलाभौमान्तकं नयेत् ।

[नागरादिलक्षणम्[11]]

[12]कुण्डलान्तमधिष्ठानाद्वेदाश्रं[13] नागरं भवेत् ॥ २३ ॥

---

[1] cf. *Aṃśumatkāśyapa* 26, 15-16:
हर्म्यं च वसुधा भज्य एकांशं हि तलोन्नतम् । द्विभागं चरणायामं प्रस्तरं चैकभागया ॥
गलोच्चं त्वेकभागेन द्विभागं शिखरोदयम् । एकांशं स्तूपितुङ्गं तु कल्प्यैवं शान्तिकं भवेत् ॥
cf. *ibid.*, 27, 6-9a:
प्रसादोच्चं तु विभजेदष्टाविंशतिसंख्यया । गुणांशं धरातलोत्सेधं रसांशं चरणोदयम् ॥
प्रस्तरोत्सेधमग्न्यंशं भूतांशं चरणोदयम् । द्विभागं प्रस्तरोत्सेधमेकांशं वेदिकोदयम् ॥
द्विभागं गलमानं तु सार्धवेदांशशीर्षकम् । स्तूप्युच्चं सार्धभागं तु कल्पितं शान्तिकं भवेत् ॥
cf. *ibid.*, 28, 6b-10a:
प्रासादस्योच्छ्रये भानुद्विगुणांशे विभाजिते । द्विभागं धरातलोच्चं वै वेदांशं चरणोदयम् ॥
मञ्चमानं द्विभागेन पादोनचतुरंशकैः । पादायामं च सार्धांशं प्रस्तरोच्चमुदाहृतम ॥
सार्धत्रिभागं पादोच्चं सपादांशं तु मञ्चकम् । अर्धांशं वेदिकाभागं गलमानं शिवांशकम् ॥
सार्धत्र्यंशं तु शिखरं स्तूप्युच्चं त्वेकभागकम् । एवं हि कल्पितं गेहं शान्तिकं त्विति विद्यते ॥
voir aussi *Ajitāgama* 12, 61-65a:

[2] A : आधारशरणं [3] C, F : पद्मं pour मञ्चं [4] B : चक्री pour ग्रीव
[5] C, F, G : द्वितलोदयम् [6] A : प्रस्तरा pour प्रस्तरं [7] C, F : स्तूपि pour स्थूपि
[8] A : द्वैकं द्वैकतमक्षकम् ; G : द्वैकद्वैकैकमक्षकम् [9] A : एकस्यादस्य ; B : एकः स्यादस्य
[10] A : कृत्वैवमनका युक्त्या ; F : कृत्वैवमगसा युक्त्या ; G : कृत्वैवं मनसा युक्त्या
[11] cf. *Aṃśumatkāśyapa* 24, 31-32:
जन्मादि स्तूपिपर्यन्तं युगाश्रं नागरं भवेत् । वस्वश्रं शीर्षकं कण्ठं द्राविडं भवनं भवेत् ॥
वृत्तग्रीवशिरोपेतं वेसरं हर्म्यमीरितम् । कूटकोष्ठविहीनानां हर्म्याणां कथितास्त्विमे ॥
cf. *Kāmikāgama* I 49, 108b-110a:
उपानात्स्तूपिपर्यन्तं युगाश्रं नागरं भवेत । कण्ठात्प्रभृति वृत्तं यद्वेसरं परिकीर्तितम् ॥
कण्ठात्प्रभृति वस्वश्रं द्रामिडं परिकीर्तितम् । सार्वदेशिकधाम्न्येतन्नागराद्यं प्रकीर्तितम् ॥
cf. *Dīptāgama* 7, 12b-15:
जातित्रयं विधातव्यं प्रासादानां विशेषतः । नागरं द्राविडं चैव वेसरं च त्रिधा मतम् ।
उपानात्स्तूपिपर्यन्तं युगाश्रं नागरं भवेत् । चतुरश्रायतं चैव अष्टाश्रं वा विशेषतः ॥
प्रासादं द्राविडं विद्याद्वेसरं चाथ वक्ष्यते । वृत्तं वृत्तायतं चैव द्व्यश्रवृत्तं तथैव च ॥
प्रासादं वेसरं विद्यात्त्रिविधं तत्प्रशस्यते ॥

[1]तला रुद्रावधि प्रोक्ताः [2]कण्ठाद्वा कुण्डलान्तकम् । कुण्डलान्तमुपानादि वृत्तं[3] वेसरमुच्यते ॥२४॥
[4]मण्डलं स्याद्गलादूर्ध्वं [5]शेषं वेदाश्रमेव वा ।

[अधिष्ठनम् [6]]

प्रतिबन्धाङ्घ्रिबन्धं [7]वाप्यधिष्ठानं तु कारयेत् ॥ २५ ॥

[स्तम्भाः[8]]

ब्रह्मकान्तं तु वा विष्णुकान्तं वा रुद्रकान्तकम् । चरणाकृति[9] कर्तव्यं कुम्भ[10]मण्ड्यादिसंयुतम् ॥ २६ ॥
कुम्भ[11]मण्ड्यादिरहितं [12]बोधिकासहितं तु वा । सवेदिकन्धरं पादं [13]मञ्चं प्रत्यभिपञ्जरम्[14]॥ २७ ॥

---

cf. *Santānasaṃhitā* 5, 10-11a:
उपानादिस्तूपिपर्यन्तं चतुरश्रं नागरं भवेत् । चतुरश्रायताष्टाश्रं प्रासादं द्राविडं भवेत् ॥
वृत्तं वृत्तायतं चापि द्व्यश्रवृत्तं तु वेसरम् ॥
voir aussi *Ajitāgama* 12, 65b-68a:

[12] A : कुण्डलान्तवधिष्ठानाद् ; C : कुण्डलान्तावधिष्ठानाद्   [13] G : वेदाग्रं pour वेदाश्रं

[1] C, F, G : कला pour तला   [2] A : कर्णाद्वा pour कण्ठाद्वा   [3] A : युक्तं pour वृत्तं

[4] A : मण्डलस्य pour मण्डलं स्याद्   [5] A : शेषयोदाश्रमेव वा ; B : शेषयोधाश्रमेव वा

[6] Pour प्रतिबन्ध voir *Aṃśumatkāśyapa* 6, 30b-32:
अधिष्ठानस्य चोत्सेधे एकोनविंशदंशके । उपानं चैकभागेन सप्तांशैर्जगती भवेत् ॥
षडंशं कुमुदोच्चं तु आलिङ्गं चैकभागया । त्रिपट्टं चैकभागेन प्रत्युत्सेधं द्विभागया ॥
वाजनं चैकभागेन प्रतिबन्धमिदं भवेत् ।
voir aussi *Ajitāgama* 13, 18-10.
Pour अङ्घ्रिबन्ध voir *Aṃśumatkāśyapa* 6, 33b-36a:
अधिष्ठानस्य चोत्सेधे पञ्चविंशति भाजिते । शिवांशं पादुकोत्सेधं जगती वसुभागया ॥
धात्वंशं कुमुदाच्चं तु व्योमांशं कम्पमानकम् । अनलांशं गलोत्सेधं शश्यंशं चोर्ध्वकम्पकम् ॥
महापट्टी गुणांशं तु तदूर्ध्वेंऽशेन कम्पकम् । पादबन्धमिति ख्यातम्"
voir aussi *Ajitāgama* 13, 2-4.

[7] A : वा अधिष्ठानं तु

[8] cf. *Aṃśumatkāśyapa* 8, 10-14a:
मूलादग्रं युगाश्रं तु कुम्भमण्ड्यादिसंयुतम् । ब्रह्मकान्तमिति ख्यातं वस्वश्रं विष्णुकान्तकम् ॥
रसाश्रमिन्द्रकान्तं स्याच्चन्द्रकान्तं कलाश्रकम् । कण्ठमानेन तन्मूले वेदाश्रं तु प्रकल्पयेत् ॥
स्तम्भाग्रं चैकभागेन चतुरश्रसमन्वितम् । तयोर्मध्यं तु वस्वश्रं षोडशाश्रमथापि वा ॥
वृत्ताकारं तु वा विप्र कुम्भमण्ड्यादिसंयुतम् । रुद्रकान्तमिदं ख्यातं मूलादग्रं तु वर्तुलम् ॥
कुम्भमण्ड्यादिहीनं यत्तद्वापि रुद्रकान्तकम् ।
cf. *Kāmikāgama* I 53, 15-21a:
पञ्चषड्गुणितो वापि स्तम्भालंकार इष्यते । उच्यते चतुरश्रं च वृत्तं वा तत्प्रकीर्तितम् ॥
सर्वं तच्चतुरश्रं तु कुम्भमण्डीसमन्वितम् । ब्रह्मकान्तं विजानीयाद्व्यासत्रिगुणमानतः ॥
मध्येऽष्टाश्रं पोतिकान्तं मध्याष्टाश्रं प्रकल्पयेत् । सर्वत्राष्टाश्रसंयुक्तं कुम्भमण्ड्यादिसंयुतम् ॥
विष्णुकान्तं स्वयं नाम्ना.................. । समत्रिभागमानेन चतुरश्राष्टाश्रवृत्तकः ॥
कुम्भमण्ड्यादिसहितो रुद्रकान्तस्तु कीर्तितः ।
voir aussi *Ajitāgama* 14, 14-19a.

# PṚTIBANDHA



VĀJANA
PRATI
ANTARI
ĀLINGA
KAPOTA
ŪRDHVAPADMA
KAMPA
KANTHA
KAMPA
PADMA
KUMUDA
ŪRDHVAPADMA
KAMPA
PADMA
MAHĀPADMA
UPĀNA
VĀJANA
ANTARI
KAPOTA
ŪRDHVAPADMA
KAMPA
KAṆṬHA
KAMPA
PADMA
UPĀNA
ADHIṢṬHĀNA
UPAPĪṬHA

PĀDABANDHA


KAMPA
PAṬṬIKĀ
KAMPA
KAṆṬHA
KAMPA
PADMA
KUMUDA
ŪRDHVAPADMA
KAMPA
PADMA
JAGATI
KAMPA
PADMA
UPĀNA
VĀJANA
ANTARI
KAPOTA
ŪRDHVAPADMA
KAMPA
KAṆṬHA
KAMPA
PADMA
UPĀNA
ADHIṢṬHĀNA
UPAPĪṬHA

BRAḤMAKĀNTA RUDRAKĀNTA VIṢṆUKĀNTA.

(CATURAS'RA STAMBHA) (VṚTTA STAMBHA) (AṢṬĀS'RA STAMBA)



[1]शिखरे [2]तु महाशासु कल्पयेद्भद्रनासिकाः[3] । अभद्रनासिकाः[4] कोणे कल्पयेद्वेसरे बुधः ॥२८॥
विना वाप्यल्पनासायास्तस्मिन्निष्टं[5] सभद्रकम् ।[6]नागरे दिशि [7]भद्राः स्युः कोणेषु युगमल्पकम् ॥ २९
[8]तदल्परहितं वापि सभद्रं भद्रनासिकम [9] ।

---

[9] Le mot आकृति se trouve au neutre au lieu du féminin.

[10] A : दण्डादि pour मण्ड्यादि ; C F, G : मध्यादि [11] A : मण्डादि ; F : मध्यादि

[12] Pour बोधिका voir *Sūkṣmāgama* 35, 26-27a·

स्तम्भाग्रतारमानं स्याद्बोधिकोत्सेधमुच्यते । उत्सेधत्रिगुणं वापि चतुःपञ्चगुणं तु वा ॥
षट्सप्ताष्टगुणं वाथ बोधिकादीर्घमिष्यते ।

voir aussi *Ajitāgama* 37, 29-30.

[13] Pour मञ्च voir *Kāmikāgama* I 55, 204b-205a:

प्रस्तरं चैव गोपानं कपोतं मञ्चमेव वा । नीव्रमित्येवमाख्यातं प्रस्तरस्य द्विजोत्तमाः ॥

[14] B : अङ्गप्रत्यङ्गपञ्जरम्

[1] cf *Aṃśumatkāśyapa* 21, 21b-23:

पादं प्रति कपोतेषु कल्पयेत्स्वस्तिकाकृतिम् । मध्ये च कूटशालानां पञ्जरे चाल्पनासिकाः ॥
कल्पयेत्तु विशेषेण शिखरे भद्रनासिकाः । शालाग्रयोस्तु कर्तव्या ललाटाढ्या तु नासिका ॥
कल्पयेत्पञ्जरस्थाने महानास्याख्यनासिका ॥

*ibid*., 26, 43b-45a:

तदेव वेदिकाकण्ठं शिखरं च घटं तथा । वस्वश्रपट्टसंयुक्तं चतुर्दिग्भद्रनासिकाः ॥
अभद्रनासीचत्वारः शिखरे तु विदिक्स्थिताः । पादं प्रत्यल्पनास्याढ्यं स्वस्तिबन्धं तदुच्यते ॥

*ibid*., 24, 8b-12:

"आकृतिं शृणु सुव्रत ॥
कूटकोष्ठादिनिष्क्रान्तिर्मानसूत्रे तु संस्थिता । उन्नतावनतोपेतौ कूटकोष्ठौ यथाक्रमम् ॥
एकाकारतलस्तम्भपत्रतोरणसंयुतम् । क्षुद्रकोष्ठसमायुक्तं महानास्यपरे द्विज ॥
वेदिकाजालकोपेतं कूटं वेदाश्रशीर्षकम् । एकानेकतलं वापि सालिन्दं वा विहीनकम् ॥
वेदाश्रशीर्षकं कण्ठं शालाकारमथापि वा । नागरं भवनं ख्यातं तद्देशे तु प्रकल्पितम् ॥

cf. *ibid*., 29, 26-30:

वेसरे कूटकोष्ठादिनीव्रं स्यात्समसूत्रकम् । वृत्ताकारशिरोपेतं कर्णकूटं प्रकल्पयेत् ॥
वृत्तं गर्भगृहाकारं बाह्ये वृत्ताभमेव वा । वृत्तग्रीवशिरोपेतं यथेष्टशिखरेण वा ॥
सालिन्दं वा सभद्रं वा ह्येकानेकतलं तु वा । समाश्रं सायताश्रं वा वृत्तं वृत्तायतं तु वा ॥
द्व्यश्रवृत्तं तु वा हर्म्यं कूटकोष्ठादिभिर्युतम् । उन्नतावनतोपेतौ कूटकोष्ठौ यथाक्रमम् ॥
समौ वा कूटकोष्ठौ वा बहुभूम्येकमेव वा । वेसरं भवनं ख्यातम्"

[2] B, G : सु pour तु [3] A : नासयः pour नासिकाः [4] A : नासयः pour नासिकाः

[5] A : तस्मिद्राष्टौ ; C : तस्मिन्विष्टौ ; G, F : तस्मिन्नाष्टौ [6] A : नागरो ; C, G : मागरा

[7] A : भाद्रासु pour भद्राः स्युः [8] B . सत्तल्परहितं ; C, G : तदल्पहरितं

[9] C, F, G : नासिका pour सिकम्

[प्रस्तरोपरि वृषभूतादिकल्पनम्[1]]

प्रस्तरे गलमूले तु [2]कोणेषूक्षान् प्रकल्पयेत् ॥३०॥
[3]तत्रोक्षांस्तु [4]विना भूतान् हृदयेऽञ्जलिं विन्यसेत् । कल्पयेद्वाह्यवक्त्रांस्तु[5] नृपतेस्तु जयार्थिभिः[6]॥
[7]पुष्टिकामाद्वृषः कल्प्यस्ताविमौ[8] मोक्षकामिनाम्[9]। करालमुद्गकुलमाषकल्कचिक्कणवर्णकम् ॥ ३२
क्रमशः कल्पयेद्धीमान्''

[दिशामूर्तिकल्पनम्[10]]

दिशामूर्तिरथोच्यते[11] । स्कन्दं हर्म्यमुखे[12] [13]कल्प्य [14]सहजं वा विनायकम् ॥ ३३ ॥

---

[1] cf. *Aṃśumatkāśycpa* 26, 68b-74a;
गलाग्रस्तात्तु मञ्चोर्ध्वे कोणेषु वृषभं कुरु । कोणं प्रति द्वयं वैकं वृषभं शयनं कुरु ॥
भूतं वाथ चतुष्कोणे हृदयाञ्जलिसंयुतम् । कल्पयेत्पद्मपीठोर्ध्वे त्वासीनं तु सुहत्तनु ॥
आमोदमग्निकोणे तु प्रमोदं नैऋते भवेत् । प्रमुखं वायुकोणे तु दुर्मुखं त्वीशकोणके ॥
श्वेतं रक्तं तथा पीतं कृष्णमग्न्यादिषु क्रमात् ।... करालमुद्गकुल्माषकल्कचिक्कणलेपनम् ॥
नानालंकारसंयुक्तं नानालीलासमन्वितम् । नानाक्रीडासमायुक्तं सुधया दारुभिस्तथा ॥
उचितं कल्पयेद्धीमान्''

cf. *Kāraṇāgama* I 7, 88b 89:
प्रस्तरोपरि कोणेषु भूतं वा वृषभं कुरु । भूतं चेदासनं कुर्यात्कृताञ्जलिपुटान्वितम् ॥
वृषभं शयनं कुर्यात्सर्वलक्षणसंयुतम् ॥

cf. *Diptāgama* 6, 22b: उक्षं कुर्याच्चतुष्कोणे प्रस्तरोपरि सुस्थितम् ॥

[2] A : कोणेषूर्ध्वकं प्रकल्पयेत् ; B : कोणेषूल्कं प्रकल्पयेत् ; C, F, G : कोणेषु क्षिप्र कल्पयेत्

[3] A : तन्त्रोक्षास्तु ; B : तत्रोक्षास्तु ; F : तद्रक्षास्तु [4] C, F : पिता pour विना

[5] B : वक्त्रं तु pour वक्त्रांस्तु ; G : वक्त्रस्तु [6] B : दयार्थिभिः

[7] A : पुष्टिकामार्षं कल्प्य ; B : पुष्टिकामो वृषं कल्प्य ; F : इष्टकाम्यार्थसंकल्प्य

[8] A : तौ विना pour ताविमौ [9] C, F : कामिना pour कामिनाम्

[10] cf. *Aṃśumatkāśyapa* 29, 58b-67:
तलं प्रति विमानानां दिङ्मूर्तिरथ वक्ष्यते । स्कन्दं वै पूर्वदिग्भागे दक्षिणामूर्तिं दक्षिणे ॥
पश्चिमे विष्णुमूर्तिं वा लिङ्गोद्भवमथापि वा । धातारमुत्तरे विप्र द्वारस्थाने तु वर्जयेत् ॥
मण्टपे दक्षिणे भद्रे स्थापयेत्तु विनायकम् । पूर्वे च पश्चिमे तस्य नृत्तमूर्तिं प्रकल्पयेत् ॥
दुर्गामुत्तरदिग्भागे क्षेत्रपालं तथैव च । स्थानकं वासनं वाथ दिशामूर्तिं प्रकल्पयेत् ॥
एवं धरातलोर्ध्वे तु कर्तव्यं द्विजसत्तम । स्कन्दं वा पूर्वदिग्भागे शक्रो वा हस्तिरोपितः ॥
दक्षिणे दक्षिणामूर्तिं वीरभद्रमथापि वा । पश्चिमे नारसिंहं तु सौम्यमूर्तिमथापि वा ॥
उत्तरे तु विधातारं धनदं वा द्विजोत्तम । प्रस्तरोपरि कर्तव्यमेकद्वित्रितले तथा ॥
चतुर्भूम्यादिमहाशासु महेशास्तु यथेष्टकम् । उमास्कन्दादिसहिता महेशाः परिकीर्तिताः ॥

दक्षिणामूर्तिनं याम्ये हरिलीलां तु वारुणे ।[1]सौम्यदेशे विधातारं धनदं वा प्रकल्पयेत् ॥ ३४ ॥
[2]सुखासनादिदेवांस्तु सर्वत्र परिकल्पयेत् । प्रासादलक्षणं प्रोक्तं शृणु [3]मण्टपलक्षणम् ॥ ३५ ॥

इति [4]श्रीमद्रौरवतन्त्रे [क्रियापादे] [5]प्रासादलक्षणविधिर्नामैकोनचत्वारिंशः पटलः

---

अन्यामरांश्च गन्धर्वान्सिद्धान्दैत्यमरुद्गणान् । कलान्तं दुगभूम्यादि ग्रीवे च प्रस्तरान्तके ॥
एष्वष्टमूर्तिमष्टासु कल्पयेत्कल्पवित्तमः ॥

cf. *Dīptāgama* 6, 78b-80:
प्रासादपार्श्वे पृष्ठे च दिशामूर्तिं तु विन्यसेत् । सेनापतिर्भवेत्पूर्वे दक्षिणामूर्तिर्दक्षिणे ॥
पश्चिमे नारसिंहं तु उत्तरे च पितामहम् । तन्मण्डपस्य पार्श्वे तु विघ्नमूर्ति प्रकल्पयेत् ॥
सौम्ये कात्यायनीं कुर्यान्महिषस्य शिरःस्थिताम् ॥

cf. *Santānasaṃhitā* 5, 62b-64:
प्रासादपार्श्वे पृष्ठे च दिशामूर्तिं च विन्यसेत् । स्कन्दं तु पूर्वदेशे तु दक्षिणामूर्तिं दक्षिणे ॥
पश्चिमे लिङ्गोद्भवं च उत्तरे तु पितामहम् । मण्डपस्य तु पार्श्वे तु विघ्नमूर्तिं तु दक्षिणे ॥
उत्तरे चैव दुर्गां च कुर्यादेकतलस्य तु ।

[11] B, C, F, G : दिशामूर्तिमथोच्यते [12] B : सुखं pour मुखे [13] C, F, G : कृत्वा
[14] A : सहजा वा विनायकम् ; B : सहजा वापि नायकम् ; C, F, G : सगजं वा विना गजम्

[1] A : सौम्ये देशे [2] C : मुख pour सुख , G : उप [3] A : मण्डप pour मण्टप
[4] A : श्रीरौरवतन्त्रे ; B omet श्रीमद्रौरवतन्त्रे
[5] A : प्रासादलक्षणविधिश्चत्वारिंश. पटलः; B : प्रासादलक्षणं नाम चत्वारिंशः पटलः; C : प्रासादलक्षणविधिर्नाम द्वात्रिंशत्पटलः; F, G : प्रासादलक्षणविधिपटलः द्वात्रिंशत्

# [चत्वारिंशः पटलः]

## [मण्डपलक्षणविधिः[1]]

### [मुखमण्टपः[2]]

प्रवक्ष्यामि [3]समासेन मण्डपानां [4]तु लक्षणम् । प्रासादसदृशं [5]सार्धत्रिपादं मुखमण्डपम् ॥ १ ॥
सर्वेषां विस्तृतं [6]हर्म्यतारतुल्यं विधीयते । एकं वा द्वित्रिदण्डं वा [7]पार्श्ववेशार्धमण्डपम् ॥ २ ॥

### [मण्डपमानम्[8]]

साष्टहस्तं समारभ्य द्विद्विहस्तविवर्धनात् । [9]त्रयोविंशच्छतं यावत्तावन्मण्डप[10]विस्तृतम् ॥ ३ ॥
विस्तारसदृशायामं सपादं सार्धमेव वा । पादोनद्विगुणं वाथ द्विगुणं वा सपादकम् ॥ ४ ॥
[11]सार्धं त्रिपादं त्रिगुणं नवधायामसंमतम् ।

### [अन्तरालम्[12]]

[13]मण्डपाख्यद्वयोरन्तरन्तरालं प्रकल्पयेत् ॥५॥

---

[1] Pour मण्टपलक्षण voir *Aṃśumatkāśyapa* 43, *Ajita* 37, *Kāmika* I 70, *Kāraṇa* **II 6**, *Kiraṇa* III 25, *Dipta* 14, *Santānasaṃhitā* 12 et *Sūkṣma* 45.

[2] cf. *Kāmikāgama* 1 70, 1-9a:

लक्षणं मण्डपानां तु वक्ष्यते विप्रसत्तमाः । उक्तानामपि सर्वेषां धाम्नामग्रेऽग्रमण्डपम् ॥
तन्मानसममानं तु श्रेष्ठमित्यभिधीयते । मण्डपं सममानं चेत्सान्तरालं सवेशकम् ॥
युग्मस्तम्भसमायुक्तं युक्त्या सर्वाङ्गशोभितम् । सार्धहस्तं द्विहस्तं वा प्रासादार्धमथापि वा ॥
अन्तरालस्य दीर्घं स्यादन्यत्संधिगतं तु यत् । तन्मध्यममिति प्रोक्तं त्रिगुणं चोत्तमं भवेत् ॥
एकदण्डं द्विदण्डं वा त्रिदण्डं तस्य वेशनम् । सावकाशान्तरालं चेत्तस्माद्द्वित्रिगुणं भवेत् ॥
पार्श्वसोपानसंयुक्तं मूलसोपानभित्तिकम् । तदर्धं भित्तियुक्तं वा तदष्टांशेन भित्तिकम् ॥
प्रासादमष्टधा कृत्वा ह्रासयेदष्टभागतः । यावद्विभागमानं तु भवेद्दादशमानकम् ॥
मूलधाम्नो भवेच्छुद्धिर्मण्डपं तद्विपार्श्वयोः । अन्तरालप्रदेशोक्तं वेशयुक्तं प्रकीर्तितम् ॥
अग्रममण्डपमीदृक्स्यात्प्रासादसमतुङ्गकम् ॥

voir aussi *Ajitāgama* 37, 39b-41.

[3] F : महासेन pour समासेन [4] C : च pour तु

[5] C : सचः त्रिपादमुपमण्टपम् ; E : साद्यत्रिपादमुपमण्टपम् G : सार्धत्रिपादमुपमण्टपम्

[6] A : हर्म्य तारतुल्यं ; C, G : हर्म्यतारं तुल्यं [7] C : पार्श्वे वेदार्थमण्टपम् ; F, G : पार्श्ववेदार्धमण्डपम्

[8] cf. *Kāmikāgama* I 70, 34-35:

पञ्चहस्तं समारभ्य व्योमहस्तविवृद्धितः । एकत्रिंशत्करान्तं तु विस्तारस्तस्य संमतः ॥
विस्तारपादवृद्ध्या तु यावद्द्विगुणं भवेत् । आयामं कल्पयेत्तस्य विस्तारे भित्तिरुच्यते ॥

Voir aussi *Ajitgama* 37, 1-3.

[9] C : द्वयोविंशशशतं [10] C, G : मण्टप pour मण्डप [11] A : सार्धत्रिपादद्विगुणं

[12] cf. *Ajitāgama* 37, 37-39.

[13] A : मण्डपाद्य pour मण्डपाख्य




MAṆḌAPA

सावकाशान्तरालं वा [1]मण्डपाकारमेव वा । [2]एकद्वित्रिचतुष्पञ्चषट्सप्ताष्टकरं तु वा ॥ ६ ॥
नवहस्तं तु [3]वा तस्य तत्संख्यापङ्क्तिमेव वा । [4]पङ्क्तिश्चेन्मण्डलस्योक्तपङ्क्तिमानवशान्नयेत् ॥७ ॥
पार्श्वयोर्वेश[5]मुक्तं वा [6]जालकं वा विनाथवा[7] ।

[समाश्रमण्डपः[8]]

समाश्रमण्डपं[9] चादौ प्रवक्ष्यामि समासतः ॥ ८ ॥
पङ्क्तित्रय[10]समायुक्तं कलास्तम्भसमन्वितम् । अधिष्ठानाङ्घ्रि[11]मञ्चाख्यवर्गत्रयसमन्वितम् ॥ ९ ॥
पञ्चपङ्क्तिविशालं [12]वा स्यादायामे[13] तथैव च । [14]षट्त्रिंशद्गात्रसंयुक्तं मध्येऽशं कूटमेव वा ॥ १०॥

---

[1] A, C, G : मण्टपाकार एव वा

[2] B : एकद्वित्रिचतुष्कं वा षड्वा सप्ताष्टकं तु वा      [3] B : तत्संख्या pour वा तस्य

[4] C : पठन्ति चेन्मण्डलस्य पङ्क्तिमावसथं नयेत् ; G : पङ्क्तिश्चेन्मण्डलस्योर्ध्वे पङ्क्तिमानवशान्नयेत्

[5] C, F, G : वेद pour वेश

[6] Pour जालक voir *Kāmikāgama* I 35, 158b 163:
ऋजुजालकमाद्यं स्याद्गवाक्षं कुञ्जराक्षकम् । गोमूत्रं गणिका पत्रं नन्द्यावर्तं च सप्तधा ॥
ऋजुकम्पयुतं यत्तु ऋजुजालकमुच्यते । कर्णगत्या यदा श्रोत्रं गवाक्षमिति कीर्तितम् ॥
तदेव चतुरश्रोत्थं कुञ्जराक्षमिति स्मृतम् । विदिग्वक्त्रगता दृष्टिर्गोमूत्रमिति कीर्तितम् ॥
मूलमप्यग्रगुलिकमृदुभित्त्यन्तरार्चितम् । नानाच्छिद्रसमायुक्तं गणिकाजालकं भवेत् ॥
पत्रैर्विचित्रितं रन्ध्रं पत्रजालकमिष्यते । पञ्चसूत्रगतं रन्ध्रं प्रादक्षिण्यक्रमेण तु ॥
नन्द्यावर्तमिति प्रोक्तं वेद्यूर्ध्वे जालकं नयेत् ॥

[7] B : वापि नाथवा

[8] cf. *Amśumatkāśyapa* 43, 44 84a:
उपपीठमधिष्ठानं चरणं प्रस्तरं तथा । नीव्रवेशमलंकारं गण्यं प्रागिव विद्यते ॥
भक्तित्रयसमायुक्तं षोडशस्तम्भसंयुतम् । कलाल्पनासिकोपेतं मध्ये कूटं तु एव वा ॥
मण्डितं वाथ सर्वत्र चतुर्द्वारयुतं तु वा । इष्टदिग्द्वारमेवं वा द्वयजालककोष्ठदिक् ॥
बाह्ये सोपानसंयुक्तं चित्रं तत्तोरणादिभिः । तोरणादिविहीनं वा कल्प्यैवं प्रथमं भवेत् ॥
चतुर्भक्त्या विशालं तु इष्टदिग्द्वारसंयुतम् । पूर्वे परे द्विभक्त्यैकभक्त्या विस्तृतनीव्रकम् ॥
मध्यस्थाङ्घ्रिं परित्यज्य ऊर्ध्वे कूटद्विभक्तिकम् । भानुद्विगुणसंख्याङ्घ्रियुक्तं विंशतिनासिकाः ॥
द्वाराशासु च सोपानं कर्णे लाङ्गलभित्तिकम् । वसुपञ्जरसंयुक्तं द्वितीयं मण्टपं भवेत् ॥
पञ्चभक्त्या युगाश्रं तु मध्ये कूटं त्रिभागया । मण्टपं परितोऽशेन द्वात्रिंशच्चरणान्वितम् ॥
भानुद्विगुणनासाढ्यं पञ्जराष्टकसंयुतम् । इष्टदिग्द्वारसंयुक्तं द्वारान्यत्रैव कुड्यकम् ॥
द्वारस्थाने तु सोपानं सर्वालंकारसंयुतम् । कुड्यं कुम्भलताद्यैस्तु भूषितं तु तृतीयकम् ॥
चतुरश्रं तु षड्भक्त्या मध्ये कूटं द्विभागया । तत्कूटमष्टपादाढ्यं मध्ये रङ्गसमायुतम् ॥
चतुर्द्वारसमायुक्तमिष्टदिग्द्वारमेव वा । द्विभक्तिविस्तृतं चैव भक्त्या नीव्रं समायुतम् ॥
इष्टदिग्भद्रसंयुक्तं चतुर्दिग्भद्रमेव वा । चत्वारिंशति चाष्टाङ्घ्रियुक्तं वा तत्र योजयेत् ॥
चतुर्विंशाल्पनासाढ्यं कुड्यं कुम्भलतान्वितम् । तोरणाष्टकसंयुक्तं चतुर्थं मण्टपान्वितम् ॥
चतुरश्रं तु सप्तांशं षष्ट्यङ्घ्रिकसमायुतम् । नवभागेन तन्मध्ये कूटं वा मण्डिताङ्गणम् ॥
द्वात्रिंशदल्पनासाढ्यं चतुर्दिग्भद्रसंयुतम् । त्रिभागैकांशविस्तारं निर्गमं मुखभद्रकम् ॥

**मध्ये [1]नन्दांशकूटं वा सर्वमण्डितमेव वा । [2]सप्तांशे विस्तृतायामे चतुष्षष्ट्यङ्घ्रिसंयुतम् ॥ ११ ॥**
**[3]मण्डितं स्यात्त्रिवर्गाढ्यं [4]षष्ट्यङ्घ्रिसहितं तु वा । [5]मध्ये वांशं तु कूटं [6]स्यान्नन्दांशे विस्तृतायते ॥**

---

मध्ये रङ्गसमोपेतं इष्टदिक्कुड्यसंयुतम् । सर्वालंकारसंयुक्तं पञ्चमं परिकीर्तितम् ॥
युगाश्रमष्टभक्त्या तु अशीतिचरणान्वितम् । चतुर्भागेन तन्मध्ये ह्यूर्ध्वकूटं प्रकल्पयेत् ॥
चतुर्दिग्द्वारसंयुक्तं मध्यैकांशेन कूटकम् । सर्वालंकारसंयुक्तं षष्ठमं मण्टपं भवेत् ॥
नवभक्त्या युगाश्रं तु शतपादसमन्वितम् । गुणांशकांशविंशं तु नीव्रभद्रं चतुश्चतुः ॥
चतुर्द्वारसमायुक्तमिष्टदिग्द्वारमेव वा । मुखे सोपानमन्यंशैर्व्यासदीर्घसमन्वितम् ॥
मध्यरङ्गसमायुक्तं षडष्टनासिकान्वितम् । सर्वालंकारसंयुक्तं सप्तमं मण्टपं भवेत् ॥
चतुरश्रं दशांशं तु भान्वधिकदशांशकम्[शताङ्घ्रिकम्] । मध्ये चैवाष्टदिशि च नवकूटसमायुतम् ॥
कूटोपरि नीव्रतांशे त्वन्तरालं प्रकल्पयेत् । प्राग्वन्मुखेन सोपानं दिशि भद्रसमन्वितम् ॥
सर्वालंकारसंयुक्तमष्टमं मण्टपं भवेत् । रुद्रभक्त्या युगाश्रं तु मध्येऽन्यंशेन कूटकम् ॥
मुखे सोपानसंयुक्तमिष्टदिग्भद्रसंयुतम् । द्वारान्यत्रैव कुड्यं वा इष्टभागावसानकम् ॥
सर्वालंकारसंयुक्तं नवमं मण्टपं भवेत् । द्वादशांशे युगाश्रं तु मध्ये द्व्यंशेन कूटकम् ॥
मण्टपस्य तु बाह्ये चाप्यंशेनालिन्दमिष्यते । चतुर्द्व्यंशेन विस्तारं निष्क्रान्तं स्याच्चतुर्दिशि ॥
साष्टषष्टिशतं पादान्मध्यरङ्गे तु कल्पयेत् । सर्वालंकारसंयुक्तं दशमं मण्टपं भवेत् ॥
युगाश्रं त्रयोदशांशेन मध्येऽन्यंशेन कूटकम् । इष्टदिक्कुड्यसंयुक्तं चतुर्दिग्भद्रसंयुतम् ॥
प्राङ्मुखे नन्दभागेन मुखभद्रं प्रकल्पयेत् । सद्व्यनवतीयुक्तैरङ्घ्रिभिश्च समन्वितम् ।
तोरणैर्जालकैश्चान्यैरलंकारसमन्वितम् । सर्वालंकारसंयुक्तं रुद्रांशं मण्टपं भवेत् ॥
मनुभागैर्युगाश्रं तु मध्ये द्व्यंशेन कूटकम् । वेदाधिक्यं तु विशांशं द्विशतं चरणान्वितम् ॥
मण्टपं कुड्यसंयुक्तं चतुर्दिग्भद्रसंयुतम् । नन्दादिभद्रसंयुक्तमिष्टभक्त्या विशेषतः ॥
सर्वालंकारसंयुक्तं द्वादशं मण्टपं भवेत् । त्रिपञ्चभित्तिविस्तारमायतं चतुरश्रकम् ॥
मध्ये कूटं गुणांशेन ऊर्ध्वे कूटसमन्वितम् । गुणांशं विस्तरायामं मुखभद्रसमन्वितम् ॥
इष्टदिक्कुड्यसंयुक्तमन्यत्राङ्घ्रिसमन्वितम् । तोरणैर्जालकैश्चान्यैरलंक्रियसमन्वितम् ॥
पञ्चाशद्वयं चाधिक्यं द्विशतं चरणान्वितम् । सर्वालंकारसंयुक्तं मण्टपं तु त्रयोदश ॥
एवं हि मानभेदेन युगाश्रं मण्टपं विदुः । इत ऊर्ध्वं चतुस्त्रिंशद्दशसीमावसानकम् ॥
चतुरश्रं मण्टपं कुर्यात्सर्वालंकारसंयुतम् । भिन्नस्तम्भं च परितः कर्तुरिच्छावशान्नयेत् ॥
समाश्रमण्टपं कुर्यात् "

[9] C, G : मण्टपं pour मण्डपं  [10] F : न्याय pour त्रय ; G : नव
[11] A : पञ्चाढयं वर्गत्रय pour मञ्चाद्ध्यवर्गत्रय ; B : पञ्चाढयं वर्गद्वय ; C, G : पञ्चाढयपङ्क्तित्रय
[12] B omet वा  [13] B ajoute च après स्यादायामे  [14] B : षट्त्रिंशमात्र
[1] B : मन्दांश pour नन्दांश
[2] C : सप्तविंशद्धुदायामे ; F : सप्तविंशद्धतायामे G . सप्तांशविस्तृतायामे
[3] G : मण्डितस्य त्रिवर्गाढ्यं  [4] C : तदङ्घ्रिसहितं तु वा , G : षडङ्घ्रिसहितं तु वा
[5] B : मध्येऽप्यासन्तकूटं  [6] C, F, G : स्यान्नन्दांशविस्तृतायतम्

## CATURAS'RA MAṆṬAPA
## 16 STAMBHA



## CATURAS'RA MAṆṬAPA.

36 STAMBHA



## CATURAS'RA MANṬAPA.

## 64 STAMBHA



CAṬURAS'RA MAṆṬAPA.

100 STAMBHA



ĀYATĀS'RAMAṆṬAPA.

42 STAMBHA



## ĀYATĀS'RAMAṆṬAPA.

### 48 STAMBHA



# ĀYATĀS'RAMAṆṬAPA.

## 80. STAMBHA.



[1]शतपादयुतं [2]मण्डं [3]मध्ये कूटं [4]नवांशकम् । सषण्णवतिपादाढ्यमेतद्युक्ति[5]परश्चरेत् ॥ १३ ॥

[आयताश्रमण्डपः]

पञ्चपङ्क्तिविशाले तु [6]चायामे सप्तपङ्क्तयः । समूर्तिश्चत्वारिंशत्स्यादङ्घ्रिसंख्यास्य[7] कथ्यते ॥ १४ ॥
मध्येऽग्निपञ्च ताराय[8] पङ्क्तयः कूटमाचरेत् । [9]साक्षचत्वारिंशत्यङ्घ्रिप्रयोगस्तु[10] विधीयते ॥ १५ ॥
द्विद्विपङ्क्ति[11]विवृद्ध्यैव त्रिगुणान्तं समाचरेत् । [12]अपरेऽग्निपङ्क्तिरङ्गः स्यादग्र [13]त्वेकाग्रभद्रकम् ।
[14]विस्तारे सप्तपङ्क्तिः स्यादायामे[15] नवपङ्क्तयः । [16]अशीतिचरणाढ्यं [17]स्यात्त्रिवर्गाढ्यं तु मण्डितम् ॥
[18]अन्यथान्यावृतं मण्डपमन्तः पक्षांशकूटकम् । तत्र मूर्त्यङ्घ्रिरहितमपरेऽन्यंशरङ्गकम्[19] ॥ १८ ॥
त्रिगुणान्ताक्षपङ्क्तिः [20]स्याद्वृद्धयानेन सयुक्तिना । [21]बलार्थं बाह्यतः कुड्यमिष्टपङ्क्तिषु कल्पयेत् ॥
[22]एकानेकतलं वापि कर्णकूटादिभिस्तु वा । समाश्रं स्नपनार्थं तु [23]परिवेषार्थमायतम्[24] ॥ २० ॥
उक्तमाने समाश्रांश्च त्वायतांश्चैवमाचरेत् । अधिष्ठानाङ्घ्रिमञ्चं च मूलधाम्नः समं नयेत् ॥ २१ ॥

---

1 B : शतपादैर्युक्तमण्डं    2 C, G : मण्डलं pour मण्डं    3 B : मध्यकूटं    4 C, G : च pour न
5 A : परि pour पर    6 A omet च dans चायामे    7 A : च pour अस्य
8 C : तारायां pour ताराय    9 A : साक्षात् pour साक्ष    10 A, G : प्रयोगस्य pour प्रयोगस्तु
11 B : प्र pour वि    12 A : अपरो pour अपरे ; C : अपरे पङ्क्तिरेवं स्याद्
13 C : त्वेकाग्रभागिकम् ; G : त्वग्राग्रभद्रकम्
14 A : विस्तारं pour विस्तारे    15 B : आयामं pour आयामे    16 A, B : अशीतिश्चरणास्यं
17 A : स्यं तु त्रिवर्गाढ्यमण्डितम् ; B : स्यात्तत्र वर्गाद्यमण्डितम्
18 A : तन्यतन्यावृतं ; C, F, G : अन्यतान्यावृतं    19 C, F : अपरेऽन्या शरांशकम्
20 A : स्याद्धयात्वानेन सयुक्तिना ; B : स्याद्धयात्वाजन सुभक्तिका    21 B : बलार्धबल्यन्तकुड्यं शीर्षपङ्क्तिषु
22 A : एकानेन तलं ; B : एकाजनतलं
23 A : परिवेषाढ्यमुच्यते ; B : परिवेषार्थमन्ततः ; C : परिषेकार्थमायतम्
24 Pour आयताश्रमण्डप voir *Aṃśumatkāśyapa* 43, 88b-125a:

भक्तित्रयविशालं तु पञ्चभक्त्यायतान्वितम् । एकपार्श्वे पुरे वाथ द्वारमंशेन कल्पयेत् ॥
पार्श्वे वारयुतं चेत्तु त्रिंशदङ्घ्रिसमन्वितम् । तदेव परितोंऽशेन मण्टपाभ्यन्तरस्य च ॥
लुपारोहणकं कुर्याद्दष्टाविंशाङ्घ्रिसंयुतम् । पुरे वारयुतं चेत्तु चरणं चाष्टविंशतिः ॥
अथवा वारहीनं तु त्रिरष्टचरणान्वितम् । पादं प्रत्यल्पनासाढ्यं वेदिजालकतोरणम् ॥
नानाकुम्भलताद्यैस्तु कल्पितं प्रथमं भवेत् । चतुर्भक्तिविशालं तु आयामे तु षडंशकम् ॥
मण्टपं परितोंऽशेन कूटमभ्यन्तरेतरम् । द्विभक्तिविस्तृतं चैकभक्त्यायतमुखभद्रकम् ॥
द्वात्रिंशच्चरणोपेतं मण्टपस्य द्वितीयकम् । विशाले पञ्चभक्तिः स्यादायामे सप्तभक्तयः ॥
त्रिपञ्चभक्तिविस्तारं दीर्घमध्ये सभा भवेत् । मण्टपं परितोंऽशेन इष्टदिग्भद्रसंयुतम् ॥
चत्वारिंशतिपादाढ्यं सर्वालंकारसंयुतम् । वेदिकाद्यैः समायुक्तं तृतीयं मण्टपं भवेत् ॥
रसभक्तिविशालं तु वसुभक्त्यायताश्रकम् । द्विचतुर्भक्तिविस्तारं दीर्घमध्ये सभोदयम् ॥

[1]अन्त्यं व्योमाङ्गुलारभ्य यावत्सप्तदशाङ्गुलम् । द्विद्व्यङ्गुलविवृद्ध्या तु नवमानान्तरं [2]हरो ॥ २२ ॥
[3]मूलहर्म्यसमादूर्ध्वे हीनं वाप्यधिकं त्रिषु । [4]सर्वेशं परितः [5]कुड्यमिष्टांशो कुड्यमेव वा ॥ २३ ॥
इति [6]श्रीमद्रौरवतन्त्रे [क्रियापादे] [7]मण्डपलक्षणविधिर्नाम चत्वारिंशः पटलः

---

मण्टपं परितोऽक्षांशमिष्टदिङ्मुखभद्रकम् । षष्टिसंख्याङ्घ्रिसंयुक्तं नासिकादिविभूषितम् ॥
नानालंकारसंयुक्तं चतुर्थं मण्टपं भवेत् । तारे सप्तविभागे तु नवभक्त्यायतान्वितम् ॥
त्रिभक्तिविस्तृतं पञ्चभक्त्यायामं सभाङ्कणम । मण्टपं परितोऽक्षांशमिष्टदिग्भद्रसंयुतम् ॥
त्रिभक्तिविस्तृतं चैकभक्त्यायाममुखभद्रकम् । सप्ततिः स्याद्द्याङ्घ्रिक्यं पादमित्यभिधीयते ॥
सर्वालंकारसंयुक्तं पञ्चमं मण्टपं भवेत् । वसुभक्तिविशालं तु दशभक्त्यायतान्वितम् ॥
द्विचतुर्भागविस्तारं दीर्घमध्ये सभोदयम् । परितो मण्टपोऽग्न्यंशमध्यस्तम्भविवर्जितम् ॥
इष्टदिङ्मुखभद्रांशं चतुर्द्व्यंशे च सुव्रत । षण्णवत्यङ्घ्रिसंयुक्तं सर्वालंकारसंयुतम् ॥
षष्ठमं मण्टपं ह्येवं प्रोच्यते तु शिवार्हकम् । नवभक्त्या विशालं तु रुद्रभक्त्यायतान्वितम् ॥
एकांशं भक्तिविस्तारं दीर्घमध्ये सभा भवेत् । परितो वेदभागं तु मण्टपं परिकल्पयेत् ॥
त्रिचतुर्भागविस्तारदीर्घं स्यान्मुखमण्टपम् । सर्वालंकारसंयुक्तं सप्तमं मण्टपं भवेत् ॥
दशभक्त्या विशालं तु द्विभक्त्यधिकमायतम् । द्विचतुर्भागायतं तारं तयोर्मध्ये सभाङ्कणम् ॥
परितोऽलिन्दमेकांशं मण्टपाद्व्यंशबाह्यतः । तद्बाह्येऽलिन्दमेकांशं युक्त्यान्तस्तम्भसंयुतम् ॥
इष्टदिग्भद्रसंयुक्तमष्टमं मण्टपं भवेत् । तदेव शिवांशाधिकं विस्तृतायामे त्रिपञ्चांशेन सभाङ्कणम् ?॥
परितोऽलिन्दमेकांशं मण्टपं द्व्यंशबाह्यतः । तद्बाह्येऽलिन्दमेकांशं नवमं मण्टपं भवेत् ॥
आदित्यांशविशाले तु द्विभागाधिकमायतम् । चतुष्पडंशमध्ये तु सभायारंकणं[सभाकाराङ्कणं ?] तु वा ॥
बाह्येऽलिन्दमेकांशं मण्टपे द्व्यंशबाह्यके । सान्ततालिन्दमेकांशं दशमं मण्टपं भवेत् ॥
विस्तृते तु जगत्यंशे तद्व्यंशाधिकमायतम् । त्रिपञ्चांशे सभामध्ये तस्यालिन्दांशमावृतम् ॥
मण्टपेऽत्र विमानं तु तद्बाह्येऽलिन्दभागया । आलिन्दं तु विना वापि मण्टपं तु युगांशकम् ॥
भद्र[रुद्र?] मण्टपमाख्यातमिष्टदिग्भद्रसंयुतम् । मन्वंशे तु च विस्तारे द्विभागाधिकमायतम् ॥
द्विचतुर्भागधायामं तारमध्ये सभाङ्कणम् । तद्बाह्येऽलिन्दमेकांशं मण्टपं चतुरश्रकम् ।
मण्टपाद्बाह्यतोऽलिन्दं भागमेवं विधीयते । चतुर्दशं[द्वादशं?] मण्टपं ख्यातमिष्टदिग्भद्रसंयुतम् ।
त्रिपञ्चांशे विशाले तु द्विभागाधिकमायतम् । तिथ्यंशमण्टपं मध्ये सभाङ्कणमिति स्मृतम् ।
अङ्कणावृतमेकांशमलिन्दं तु विधीयते । तद्बाह्ये चतुरश्रं स्यान्मण्टपं प्रविधीयते ।
तस्यावृतांशतोऽलिन्दं त्रयोदशं मण्टपं भवेत् । षोडशांशे विशाले तु द्विभागाधिकमायतम् ।
चतुर्विंशाङ्कणोपेतं बाह्येऽलिन्दांशमानतः । तद्बाह्ये चतुरंशेन मण्टपं स्याद्विशेषतः ॥
तस्यावृतांशतोऽलिन्दं चतुर्दशं मण्टपं भवेत् । जात्यादि आयतं विद्यात्तन्नद्विन्यासमुच्यते ॥
जालकं च कवाटं च ग्राह्यं युक्त्या विशेषतः । इष्टदिक्चरणं कुड्यं कल्पयेत्परितो बुधः ॥
एवं हि मनुभेदं च सायतं मण्टपं विदुः ॥

[1]A : अन्य pour अन्त्यं ; G : अन्यं [2]A : गुरोः pour हरो
[3]A : मूलमन्त्रे समामूर्ध्वे ; C, F, G : मूलहर्म्ये समादूर्ध्वे [4]B : सत्वांशं pour सर्वेशं
[5]A : कुर्यादिष्टांशे [6]A : श्रीरौरवतन्त्रे ; B omet श्रीमद्रौरवतन्त्रे
[7]A : मण्डपलक्षणविधिरेकचत्वारिंशः पटलः ; B : मण्डपलक्षणं नामैकचत्वारिंशः पटलः; C : मण्टपलक्षणविधिर्नाम त्रयस्त्रिंशत्पटलः ; F : मण्टपलक्षणविधिर्नाम पटलस्त्रयस्त्रिंशत् ; G : मण्टपलक्षणविधिः पटलः त्रयस्त्रिंशतिः

# PRĀKĀRA

MAHĀMARYĀDĀ

MARYĀDĀ

MADHYA HĀRA

ANTAR HĀRA

ANTAR MAṆḌALA

GARBHAGṚHA



# [एकचत्वारिंशः पटलः]

## [प्राकारलक्षणविधिः[1]]

### [प्राकारमानम्[2]]

प्रवक्ष्यामि [3]समासेन प्राकाराणां तु लक्षणम् । [4]प्रासादसदृशव्यासं त्रिपादं [5]वार्धमेव वा ॥ १ ॥
अन्तर्मण्डलविस्तारं त्रिविधं [6]पादबाह्यतः । [7]जगतीबाह्यतो वापि होमाद्बाह्यमथापि वा ॥ २ ॥
[8]अन्तर्मण्डलविस्तारद्विगुणोऽन्तरहारकः । त्रिगुणं [9]मध्यहारं स्यान्मर्याद्यपि[10] चतुर्गुणम् ॥ ३ ॥

---

[1] Pour प्राकारलक्षण voir *Aṃśumatkāśyapa* 42, *Ajita* 38, *Kāmika* I 71, *Kāraṇa* I 8, *Dīpta* 12, *Santānasamhitā* 11 et *Suprabheda* I 31.

[2] cf. *Aṃśumatkāśyapa* 42, 2-7a:

प्रासादस्य विशालार्धं गुणभागविभाजिते । चतुर्भागैकभागं वा अन्तर्मण्डलविस्तृतम् ॥
अन्तर्हारविशालं तु तद्बाह्ये द्विगुणं हि तत् । मध्यहाराविशालं तु बाह्ये तन्मण्डलत्रयम् ॥
मर्यादिस्तु विशालं तु बाह्ये त्वादिचतुर्गुणम् । महामर्यादिविस्तारमादेः पञ्चगुणं भवेत् ॥
प्रासादचरणान्नीत्रं होमाद्वा प्रथमस्य तु । नीवं द्वितीये प्रथमाद्द्वितीयात्तृतीयनीत्रकम् ॥
तृतीयाच्चतुर्निष्क्रान्तं तस्मान्नी तु पञ्चके । प्राकारं प्रति निष्क्रान्तान्युक्तानि कुड्यसीमकम् ॥
कुड्यमध्यावसानं वा कुड्यबाह्यमथापि वा ।

cf. *Kāmikāgama* I 71, 1-10 et 63-64a

अथ वक्ष्ये विशेषेण प्राकाराणां तु लक्षणम् । प्रासादस्य विशालार्धं दण्डमित्यभिधीयते ।
एकद्वित्रिचतुष्पञ्चदण्डैर्मध्यात्समन्ततः । एकप्राकारकल्पनिस्तु पञ्चधा परिकीर्तितम् ॥
मूलालयविशाले तु त्रिधाभक्ते पदं भवेत् । तेन भागेन तद्बाह्ये द्विगुणत्रिगुणं तु वा ।
त्रिचतुर्गुणकं चापि चतुष्पञ्चगुणं तु वा । पञ्चषड्गुणमिष्टं च प्राकारद्वयकल्पनम् ॥
एवं चतुर्विधं प्रोक्तं त्रिप्राकारस्तु कथ्यते । प्रासादस्य चतुर्भागो यस्तु दण्डः प्रोच्यते ॥
तस्य द्वित्रिचतुर्भागैस्त्रिचतुष्पञ्चभिस्तथा । चतुष्पञ्चषडंशैस्तु पञ्चषट्सप्तभिस्तथा ।
षट्सप्ताष्टभिरुद्दिष्टं त्रिप्राकारप्रकारकम् । पञ्चधा कथितं वेदप्राकारं शृणुत द्विजाः ॥
त्रिप्राकारस्य बाह्ये तु एकैकाङ्गुलवर्धनात् । नवभागावसानं तु समन्तात्परिवर्धयेत् ॥
एवं पञ्चविधं प्रोक्तं चतुष्प्राकारमानकम् । एवं चतुष्प्राकारेऽपि प्रासादस्य विशालकम् ॥
समन्ताद्वर्धमानं च त्रिचतुर्भागमानकम् । दण्डार्धं योजयेद्धीमान्... ............... ॥
अन्तर्मण्डलमाद्यं स्यादन्तर्हारा द्वितीयिका । तृतीया मध्यहरा स्याद् मर्यादाख्या चतुर्थिका ॥
महामर्यादिकाख्या च पञ्चमी परिकीर्तिता ॥

voir aussi *Ajitāgama* 38, 1-7.

[3] F : महासेन pour समासेन

[4] A : प्रासादसदृशं वाथ ; B : प्रासादसदृशस्यार्धं

[5] A : सार्धमेव वा ; C, G : वार्ध एव वा

[6] A : पात pour पाद

[7] A : जडतो pour जगती ; B : जडंता ; G : जगते

[8] A : अन्तर्मण्डपविस्तारं त्रिगुणान्तरुहारका ; B : अन्तर्मण्डलविस्तारं त्रिगुणान्तरुदाहृतम

[9] A : मध्यहारस्यामयाश्चापि ; B : मध्यहारस्यायामश्चापि

[10] C : मर्यादापि pour मर्याद्यपि ; G : मर्यादावपि

पञ्चषट्सप्तगुणितं [1]महामर्यादिकं तथा । [2]सकुड्यमुक्तमानं तु [3]कुड्याद्यन्तरमेव वा ॥ ४ ॥
प्राकाराद्बाह्यतो [4]व्यासं प्रत्येकं परिकल्पयेत् ।

[प्राकाराणां हस्तमानम्[5]]

त्रिपञ्चसप्तहस्तेन विस्तारः प्रथमस्य तु ॥ ५ ॥
[6]नवैकादशहस्तं च त्रयोदशं [7]द्वितीयके । पञ्चसप्तदशं हस्तं [8]तृतीयकोनविंशतिः ॥ ६ ॥
[9]पञ्चहस्तसमाधिक्यहस्तं स्यात्तु चतुर्थके । एकोनत्रिंशतिहस्तमेकत्रिंशतिहस्तकम् ॥ ७ ॥
[10]त्रयस्त्रिंशतिहस्तं च [11]पञ्चमस्य विशालकम् ।

[कुड्यविस्तारः[12]]

एकहस्तं समारभ्य गुणाङ्गुलविवर्धनात् ॥८॥

---

1 B : महामायादिकं

2 cf. *Kāmikāgama* I 71, 28:
भित्त्यन्तरालमानं वा भित्तिबाह्यमथापि वा । भित्तिमध्यं तु वा कुर्यात्प्राकाराणां प्रमाणकम् ॥

3 A : कुड्याड्यन्तरमेव वा ; G : कुड्याढयन्तरमेव वा

4 A : वासं pour व्यासं

5 cf. *Kāmikāgama* I 71, 10b-16a:
हस्तमानेन चोच्यते ॥
द्विहस्तादेकवृद्ध्या तु नवहस्तावसानकम् । एषु प्राकारमानं तु क्षुद्राणामष्टधा मतम् ॥
द्विहस्तं च त्रिहस्तं च त्रिचतुर्हस्तमेव च । चतुष्पञ्चकरं चैव पञ्चषट्करमेव च ॥
षट्सप्ताष्टकरं चैव अष्टनन्दं तथैव च । नन्ददीर्घाष्टकं चैव द्विप्राकारप्रमाणकम् ॥
अस्मादेककरवृद्ध्या तु रुद्रहस्तान्तमेव च । त्रिप्राकारप्रमाणं तु वेदप्राकारकं तथा ॥
एकैकहस्तवृद्ध्या तु रविहस्तावसानकम् । चतुष्प्राकारमानं तु क्षुद्रादीनां प्रकीर्तितम ॥
जातिच्छन्दविकल्पाभासादीनां तु समीरितम् ॥
voir aussi *Ajitāgama* 38, 8-12.

6 G : तथा pour नव    7 B : तृतीयके

8 B : तृतीयेकोनविंशतिः ; la forme grammaticale correcte est तृतीय एकोनविंशतिः

9 A : पञ्चहस्तसमाधिक्यं ; C, G : पञ्चहस्तं समाधिक्यं    10 A भूयस् pour त्रयस्

11 C : पञ्चमध्य pour पञ्चमस्य

12 cf. *Kāmikāgama* I 71, 36-39a:
एकहस्तं समारभ्य चैकाङ्गुलविवर्धनात् । द्विहस्तान्तः समुद्दिष्टः सालानां चैव विस्तरः ॥
तद्विस्तारप्रमाणेन यावत्त्रिशद्गुणं भवेत् । त्रिगुणं तु समारभ्य क्षुद्रे महति मन्दिरे ॥
प्राकारोत्सेध उद्दिष्टो मूलादूनं तदग्रतः । षडंशं तु समारभ्य यावत्षोडशभागिकम् ॥
तावत्कृत्वा समूलं तु चैकांशेन तदग्रकम् ॥
voir aussi *Ajitāgama* 38, 18-22.

[1]हस्तद्वयावधिर्यावन्नवधा कुडयविस्तरम् । [2]कुडयव्यासत्रयारभ्य [3]यावत्तद्द्विगुणावधि ॥ ९ ॥
नवधा सालतुङ्गं तु ;

[प्राकारविधिः[4]]

[5]मालिका ह्यन्तरे विदुः । त्रिचतुष्पञ्चहस्तं वा मालिकाव्यासमीरितम् ॥ १० ॥
मूलहर्म्य[6]तलोत्तुङ्गत्रिपदाधारमस्य तु । चरणं प्रस्तरं चैव [7]मूलहर्म्यसमं नयेत् ॥ ११ ॥
[8]ओज ख्या तु पङ्क्तिः स्यात्कुर्यात्सर्वत्र [9]पङ्क्तिकाः । [10]मूलप्रकृतितुल्यं स्यात्प्रकृतिः[11] प्रथमस्य तु ॥
गुणमात्रं तु वा षट्कं प्रत्येकं [12]बाह्यतोन्नतम् । [13]एकद्वयत्रिसालं वा कल्पयेदनुपूर्वशः ॥ १३ ॥
[14]छत्राभं बुद्बुदाकार[15]मर्धचन्द्राकृतिः शिरः । [16]ओजस्संख्यावृतं वापि भूतं वा परिकल्पयेत् ॥ १४ ॥

इति [17]श्रीमद्रौरवतन्त्रे [क्रियापादे][18]प्राकारलक्षणविधिर्नामैकचत्वारिंशः पटलः

---

[1] A : हस्तद्वयविधि pour हस्तद्वयावधि [2] A : कुडयावास pour कुडयव्यास

[3] B : यावदादि pour यावत्तद्दि

[4] cf. *Kāmikāgama* I 45, 1-5:
अथ वक्ष्ये विशेषेण मालिकालक्षणं द्विजाः । चतुर्धा मालिका शाला सभा मुण्डजसौधजे ॥
शालायामपि शालाङ्गा निष्कान्ता नतशोभिता । सा शाला मालिका ज्ञेया शास्त्रेऽस्मिन्कामिकाह्वये ॥
सभावद्विहिता बाह्ये प्रासादवदलंकृता । ऊहप्रत्यूहसंयुक्ता या सभा सा च मालिका ॥
यथेष्टदिशि संयुक्ता भोगभूमिसमन्विता । प्रासादव्यासदीर्घोच्चा प्रोक्ता प्रासादमालिका ॥
मण्डपस्योक्तविस्तारायामतुङ्गविभूषिणी । सर्वत्र मुण्डाकारत्वात्कथिता मुण्डमालिका ॥
voir aussi *Ajitāgama* 38, 23-29a.

[5] A : मालिकाभ्यन्तरे विदुः [6] C : तलोत्तुङ्गात् pour तलोत्तुङ्ग

[7] A : मूलहस्त्यसमुन्नयेत् ; B : मूलहस्तसमं नयेत्

[8] A : ओजसंख्यानुपङ्क्तिः ; G : दशसंख्यानुपङ्क्तिः [9] A : पङ्क्तयः [10] A : मूलं pour मल

[11] B : प्रकृति pour प्रकृतिः

[12] C : बाह्यतोन्नतिः ; la forme grammaticale correcte est बाह्यत उन्नतम्

[13] A : एकद्वित्रितलासं वा ; B : एकद्वित्रितसालं वा

[14] cf. *Aṃśumatkāśyapa* 42, 55-61a:
" ऊर्ध्वभूमिं वदाम्यहम् ।
मलाग्रस्तम्भतुङ्गं तु धर्मनन्दाष्टधा भजेत् । एकांशहीनमङ्घ्र्युच्चं तथैवोर्ध्वे तु भूमयः ॥
प्रस्तरं च तथा कार्यमेकानेकतलेऽपि वा । प्रस्तरोपरि कर्तव्यं भित्तिमेककरोदयम् ॥
छत्राकारशिरोपेतं सभाकारमथापि वा । गोपानं वाथ वारं वा संकल्प्याभ्यन्तरे द्विज ॥
मृल्लोष्टैर्लोहलोष्टैर्वा सारदारुमयैस्तु वा । गोपानाच्छादनं कुर्याल्लुपोपरि शिरोऽन्वितम् ॥
सभाकारमिदं ख्यातं लुपावारविहीनकम् । मण्टपाकृतिरित्युक्तं प्रस्तरोर्ध्वे विशेषतः ॥
बाह्यकुडयविहीनं तु मण्टपाकारमण्डितम् । छत्राकारमिदं ख्यातं यथेष्टं तेषु कल्पयेत् ॥
cf *Kāmikāgama* I. 71, 39b-41:
अधिष्ठानादिवर्गाढयं खण्डहर्म्यादिमण्डितम् । ऋजुभक्तियुतं वापि प्राकारं तु प्रकल्पयेत् ॥
छत्रादिशिखरोपेतमूर्ध्वस्थवृषभान्वितम् ॥

[15] C : चित्राभं बुद्बुदाकार ; G : छत्रचित्राम्बुदाकार

[16] B : द्रव्यसंख्यावृतं वापि ; G : दशसंख्यावृतं वापि [17] A : श्रीरौरवतन्त्रे ; B omet श्रीमद्रौरवतन्त्रे

[18] A : प्राकारविधिः द्विचत्वारिंशः पटलः ; B : प्राकारविधिर्नाम द्विचत्वारिंशः पटलः; C : प्राकारलक्षणविधिर्नाम चतुस्त्रिंशत्पटलः; F : प्राकारलक्षणविधिपटलश्चतुस्त्रिंशत् ; G : प्राकारलक्षणविधिः पटलः चतुस्त्रिंशत्

# [द्विचत्वारिंशः पटलः]

## [गोपुरलक्षणविधिः[1]]

### [गोपुरमानम्[2]]

**प्रवक्ष्यामि समासेन गोपुराणां तु लक्षणम् । मूलप्रासादसदृशं गोपुराणां तु [3]विस्तृतम् ॥ १ ॥**

**[4]सपादं सार्धं पादोनद्विगुणं [5]द्विगुणं तु वा । आयामं गोपुराणां तु पञ्चसाले तु संमतम् ॥ २ ॥**

**एको वानेकभूमिर्वा [6]गण्यादीन्सदनोक्तवत् । आयामसदृशं तुङ्गं [7]सदृशं तारद्वयं तु वा ॥ ३ ॥**

---

[1] Pour गोपुरलक्षण voir *Aṃśumatkāśyapa* 44, *Aṃśumdāgama* 45, *Kāmika* I 75, *Kāraṇa* I 8 et II 5 et 94, *Dīpta* 12, *Suprabheda* I 31 et *Sūkṣma* 34.

[2] cf *Aṃśumatkāśyapa* 44, 1-6:

अथ वक्ष्ये विशेषेण गोपुराणां तु लक्षणम् । अन्तर्मण्डलसालादिष्वधुना प्रोच्यते क्रमात् ॥
द्वारशोभा द्वारशाला द्वारप्रासादहर्म्यके । द्वारगोपुर इत्येते क्रमान्नाम्ना प्रकीर्तिताः ।
एकद्वित्रितलं वापि द्वारशोभां तु कल्पयेत् । द्विभूमिर्वा त्रिभूमिर्वा चतुर्भूमिरथापि वा ॥
द्वारशाला तु कर्तव्या साले स्यात्तु द्वितीयके । त्रिचतुष्पञ्चभूमिं वा द्वारप्रासादमारभेत् ॥
चतुष्पञ्चतलं वाथ षट्तलं वाथ हर्म्यकम् । पञ्चषट्सप्तभूमिर्वा द्वारगोपुर इष्यते ॥
अथवा सर्वसालेषु एकद्वित्रितलं तु वा । सोपपीठमधिष्ठानं विना वा उपपीठकम् ॥

cf. *Aṃśumadāgama* 45, 9b-10 et 14-19a:

विस्तारायाममुत्सेधं प्रोच्यते रविसत्तम । मूलप्रासादविस्तारं द्विगुणं त्रिगुणं तु वा ॥
चतुष्पञ्चगुणं वाथ शोभादीनां च विस्तृतम् ।......

आयामं च ततः शृणु ॥

सपादं सार्धपादोस्ति[पादोन?]द्विगुणं त्रिगुणं तु वा । द्विगुणं तु सपादांशमेवमायं प्रगृह्यताम् ॥...

उत्सेधमधुनोच्यते ॥

विस्तारं सप्तधा भज्य शोभोच्चं रुद्रभागया । विस्तारमष्टधा कृत्वा सार्धांशांशसमन्वितम् ॥
द्वारशालोदयं स्यात्तं त्रिपादं त्रिगुणं तु वा । द्विगुणं साष्टभागं तु प्रासादस्य तदुच्छ्रयम् ॥
उत्तरादि शिखान्तं च मात्रोच्चं तु प्रगृह्यताम् ।

cf. *Aṃśumatkāśyapa* 44, 30-33a:

"तेषां तुङ्गमथोच्यते ॥

विस्तारं सप्तधा भज्य शोभोच्चं रुद्रभागया । तारादर्धाधिकं तुङ्गं द्वारशालोच्छ्रयं भवेत् ॥
सप्तभागे तु रुद्रांशं भान्वंशं वा तृतीयके । विस्तारे तु नवांशे तु मन्वंशोच्चं चतुर्थके ॥
विस्तारद्विगुणोत्सेधं महागोपुरमिष्यते । होमादिस्थूपिपर्यन्तं प्रोक्तोच्चं तु प्रगृह्यताम् ॥

voir aussi *Ajitāgama* 38, 31-42

[3] B : विश्रुतम्

[4] A : सपादं सार्धपादोनं ; B : सवादसार्धपादोनं ; C : सपादं सार्धपादेन [5] A : त्रिगुणं pour द्विगुणं

[6] A : गण pour गण्य [7] B : सदृशाम्तारद्वयं तु वा ; C : सदृशान्तरयन्तु वा ; G : सदृशाम्तारयन्तु वा

## SĀLĀKĀRAS'IRO GOPURA





MAṆḌAPĀKĀRAŚIRO GOPURA



LUPĀKĀRAŚIRO GOPURA



CHATRĀKĀRAŚIRO GOPURA

[अलंकारः[1]]

[2]शालाकारं शिरः कार्यं हर्म्याकारमथापि वा । [3]लुपारोहशिरो वापि [4]मण्डपं वा सहारकम् ॥ ४ ॥
[5]छत्राकारं तु वा मूर्ध्नि कल्पयेत्कल्पवित्तमः ॥ ५ ॥

इति [6]श्रीमद्रौरवतन्त्रे [क्रियापादे] [7]गोपुरलक्षणविधिर्नाम द्विचत्वारिंशः पटलः

---

[1] cf. *Aṃśumadāgama* 45, 193b-202a:

मण्टपं वा यथा द्वारशोभां चैव प्रकल्पयेत् । दण्डवद्द्वारशालां च प्रासादं रथवत्कुरु ॥
मालिकाकृतिः कर्तव्या द्वारहर्म्यमिति स्मृतम् । शालाकारं प्रकर्तव्यं महागोपुरमिष्यते ॥
सर्वांश्च गोपुराकारं कल्पयेद्द्विप्रपुङ्गव । अथवा द्वारशालादि शृणु वक्ष्ये विशेषतः ॥
एकद्वित्रिर्लं वापि सर्वालंकारसंयुतम् । मुखे मुखे महानासी पार्श्वयोर्वंशनासिका ॥
पादं प्रत्यल्पनासाढ्यं युग्मस्थूपिसमन्वितम् । लुपारोहशिखायुक्तं मण्टपाकृतिकं तु वा ॥
श्रीकरं त्विति विख्यातं सर्वकामफलप्रदम् । शालाकारशिरोयुक्तं षण्णासि मुखपृष्ठयोः ॥
पार्श्वयोर्वंशनासाढ्यं युग्मस्थूपिकयान्वितम् । अन्तः पादोत्तरैर्युक्तं सर्वालंकारसंयुतम् ॥
अतिक्रान्तमिदं नाम सर्वदेशेषु योग्यकम् । मुखे मुखे च षण्णासी पार्श्वयोर्वंशनासिका ॥
सभाकारं शिरः स्कन्दकान्तं विजयमेव च । एवं त्रिविधमाख्यातं द्वारशोभादि कल्पयेत् ॥

cf. *Aṃśumatkāśyapa* 44, 112-120:

" अलंकारमथोच्यते ॥
मण्टपाभां यथा द्वारशोभां कुर्याद्द्विजोत्तम । दण्डं वा द्वारशाला स्यात्प्रासादं सदनाकृतिः ॥
मालिकाकृति कर्तव्यं द्वारहर्म्यं द्विजोत्तम । शालाकारं प्रकर्तव्यं द्वारगोपुरमुच्यते ॥
सर्वं वै गोपुराभं वा कल्पयेत्कल्पवित्तमः । तेष्वादौ द्वारशोभां तु वक्ष्येऽहं द्विजसत्तम ॥
एकद्वित्रितलं वापि सर्वालंकारसंयुतम् । मुखे मुखे महानासी पार्श्वयोर्वंशनासिका ॥
स्वस्त्याकृत्यल्पनासाढ्यं प्रागुक्तविधिना द्विज । युग्मस्थूपिसमायुक्तं लुपारोहशिरस्तु वा ॥
मण्टपाकृतिकं वापि श्रीकान्तं तदुदाहृतम् । शालाकारशिरस्तस्मिन् षण्णासी मुखपृष्ठयोः ॥
पार्श्वयोर्वंशनासाढ्यं युग्मस्थूपिसमन्वितम् । अन्तः पादोत्तरैर्युक्तमतिक्रान्तमिदं परम् ॥
मुखे मुखे च षण्णासी पार्श्वयोर्वंशनसिका । सभाकारं शिरः स्कन्दकान्तं विजयमेव हि ॥
एवं त्रिविधनीत्या तु द्वारशोभाः प्रकल्पयेत् ॥

[2] G : शालाकारमलंकार्यं [3] A, B : लुपारुह्यशिरो [4] G : मण्डं वापि pour मण्डपं वा

[5] A: चित्राकारं [6] A : श्रीरौरवतन्त्रे ; B omet श्रीमद्रौरवतन्त्रे

[7] A : गोपुरविधिः त्रिचत्वारिंशः पटलः ; B : गोपुरलक्षणं नाम त्रिचत्वारिंशः पटलः ; C : गोपुरलक्षणविधिर्नाम पञ्चत्रिंशत्पटलः ; F : गोपुरलक्षणविधिपटलः पञ्चत्रिंशत् ; G : गोपुरलक्षणविधिः पटलः पञ्चत्रिंशत्

# [त्रिचत्वारिंशः पटलः]

## [मुकुटादिविभूषणविधिः[1]]

### [मकुटलक्षणम्[2]]

अथ संक्षेपतो वक्ष्ये [3]मकुटादिविभूषणम् । [4]शुद्धजाम्बूनदं वापि सौवर्णं [5]राजतं तु वा ॥ १ ॥

ताम्रं वापि प्रकर्तव्यं यथावित्तानुसारतः । स्वायम्भुवादिलिङ्गानां [6]शुद्धजाम्बूनदेन तु ॥ २ ॥

---

[1] Pour मकुटादिविभूषणविधि voir *Aṃśumatkāśyapa* 64, *Ajita* 22, *Kāraṇa* I 18, *Dīpta* 98, *Vimalāgama* 40, *Suprabheda* I 22 et *Sūkṣma* 51, 52 et 55.

[2] cf. *Sūkṣmāgama* 51, 1-2 et 12-24:

मकुटस्य विधिं वक्ष्ये शृणु त्वं तत्प्रभञ्जन । तल्लक्षणं त्रिधा प्रोक्तं किरीटं च करण्डकम् ॥
जटामकुटमेतेषु जटामकुटलक्षणम् । वक्ष्यते निष्कलस्यापि सकलस्य च साम्प्रतम् ॥
देहबन्धा[लब्धा?]ङ्गुलं गृह्य सकले तत्प्रमाणतः । चतुर्विंशाङ्गुलं वापि त्रिःसप्ताङ्गुलमेव वा ।
अष्टादशाङ्गुलं वाथ मकुटोत्सेधकं कुरु । सकलेऽप्येवमेव स्यान्निष्कले तु विधीयते ॥
शिरोवर्तनतस्तारं नाहं तत्समुच्यते । विस्तारसमतुङ्गं स्यात्सप्ताष्टनवकांशके ॥
एकांशेनाधिकं वापि कुर्यादायादिसंयुतम् । तुङ्गतारवशेनैव आयादीनपि कारयेत् ॥
ललाटमुकुलान्तं च मानयेन्मानसूत्रकम् । युग्मसंख्याजटायुक्तं तज्जटापरितोवृतम् ॥
अथवा तिर्यगूर्ध्वस्थजटाभिः परिमण्डितम् । अर्कांशे तु तदुत्सेधे एकांशेन जटोदयम् ॥
कनिष्ठानामिकामध्याङ्गुलीनाहमथापि वा । ललाटपट्टसंयुक्तं शिरसो वर्तनोर्ध्वतः ॥
चतुष्पूरितसंयुक्तं तदुत्सेधवशेन च । अथवा पूरितोत्सेधं तदर्धेन विराजितम् ॥
मौलिमूलविशालं च तत्त्रिभागैकमेव वा । तदग्रविस्तरं चैव क्रमेण तु शतं[कृशं?]नयेत् ॥
तज्जटोदयमानेन द्विगुणं मुकुलोदयम् । तद्रूपं मुकुलं वाथ यथावत्तु समाचरेत् ॥
वामे तु शिवगङ्गां च तदर्धद्वयमानतः । वामेऽर्धशशिसंयुक्तं सव्ये नागार्कपुष्पकैः ॥
नागार्कपुष्पसंयुक्तं नानारत्नोपशोभितम् । नानाचित्रक्रियोपेतं मकुटं कारयेद्बुधः ॥
अत्रानुक्तं तु यत्सर्वं युक्त्यालंकारमाचरेत् । मकुटस्य विधिः प्रोक्तः"

cf. *Kāraṇāgama* I 18, 333-336a:

मकुटस्य विधिं शृणु ॥
कपर्दमकुटं चैव किरीटमकुटं तथा । करण्डमकुटं चैव.......................... ॥
नानारत्नसमायुक्तं सर्वं हैमेन कारयेत् ॥

cf. *Kāmikāgama* II 43, 20b-25a:

उष्णीषभूषणं कुर्यात्त्रिमात्रेण विशेषतः । पार्श्वयोः पुरतः पृष्ठे चतुष्पूरिसमन्वितम् ॥
मध्ये मकरकूटं स्यात्सप्तकोटरसंयुतम् । पार्श्वयोः पत्रकूटं स्यात्पृष्ठे स्याद्रत्नकूटकम् ॥
अग्रे दशाङ्गुलं तस्य मूले तु मुखविस्तरम् । तत्तत्त्रिगुणनाहं तु वामेऽवामेऽर्धचन्द्रकम् ॥
वामे महाफणिं तस्य सर्वालंकारभूषितम् । जटाभिः पञ्चभिर्ग्रन्थि त्रिमात्रेण विशेषतः ॥
एकधा तु त्रिधावृत्या शेषाभिः पार्श्वलम्बनम् । जटामकुटमेतद्धि सर्वालंकारमीरितम् ॥

voir aussi *Ajitāgama* 22, 68b-69.

[3] **C, F, G :** मकुटस्य तु लक्षणम्

[4] **Les manuscrits C et F omettent les demi-*śloka* 1b et 2a.**

[5] **B ;** रजतं pour राजतं [6] **C, G :** मानुषाणां तथैव च

सौवर्णं वा प्रकर्तव्यमन्यद्वै[1] मानुषस्य [2]तु । [3]पूजांशोच्चे त्वथाष्टांशे ह्येकांशं[4] मकुटोदयम् ॥ ३ ॥
[5]द्वियंशं वा त्रियंशं वा चतुरंशमथापि वा । [6]अथवा मानमात्राभ्यां देहमात्रमथापि वा ॥ ४ ॥
चतुरङ्गुलमारभ्य [7]त्रियङ्गुलविवर्धनात् । अष्टाविंशाङ्गुलं यावन्नवभेदमिति स्मृतम् ॥ ५ ॥
शिरोनाहपरीणाहं सर्वलिङ्गेषु योग्यकम् । उष्णीषांशं[8] प्रकर्तव्यमेकद्वित्रिचतुष्वपि ॥ ६ ॥
पञ्चषट्[9]सप्तमात्रं वा योजयेत्तु सुखावहम् । [10]तदूर्ध्वं मकुटोत्सेधं मुकुलान्तं विचक्षणः ॥ ७ ॥
अथवा तत्समोपेतमायादिशुभसंयुतम् । [11]चतुष्पूरसमायुक्तं[12] पत्रचित्राद्यलंकृतम् [13] ॥ ८ ॥
शम्भोर्जटाभिषेकं [14]तु जटाबन्धनमण्डितम् । गङ्गाचन्द्रसमायुक्तं कर्ण[15]पुष्पसमन्वितम् ॥ ९ ॥
[16]मूलादष्टांशहीनं वा षोडशांशमथापि वा । तन्मध्यमांशे वा कुर्यान्नवभेदमुदीरितम् [17]॥ १० ॥
अग्रात्कलांशहीनं तु पञ्चतारमिति स्मृतम् । [18]पञ्चतारत्रिभागैकचतुष्पञ्चषडंशकैः ॥ ११ ॥
उत्सेधं [19]मुकुले तद्वत्सर्वरत्नविचित्रितम् । नृपाणामेवं[20] कर्तव्यं जटाबन्धं विनाचरेत् ॥ १२ ॥

[स्वर्णपुष्पम्[21]]

अथवा मूर्ध्नि पुष्पं वा दलाष्टकसमन्वितम् । कर्णिकाकेसरैर्युक्तं दलैर्वा षोडशैर्युतम् ॥ १३ ॥
[22]सर्वरत्नविचित्रैस्तु लिङ्गमूर्ध्नि[23] सुयोजयेत् ।

---

[1] B : अन्ये द्वे pour अन्यद्वै

[2] B : च pour तु [3] A : पूजांशोच्चमथाष्टांशमेकांशं

[4] Les mots tels que अंश, उदय, उत्सेध etc se trouvent au neutre au lieu du masculin ; voir *Rauravāgama* vol. I, p. 69 note 6.

[5] A: : द्विधांशं वा त्र्यांशं वा [6] Les manuscrits A et B omettent le demi-*śloka* 4b.

[7] B : द्वित्र्यङ्गुल pour त्रियङ्गुल [8] B : अन्तं pour अंशं [9] G : हस्त pour सप्त

[10] A : तन्मूर्धं pour तदूर्ध्वं ; B : तन्मूर्ध्नि

[11] B : चतुष्पुरी pour चतुष्पूर ; C : चतुष्पूरि ; F, G : चतुष्पुरिम [12] F, G : संयुक्तं pour समायुक्तं

[13] C : पवित्राद्यैरलंकृतम् [14] B : च pour तु [15] F : पूर pour पुष्प

[16] Les manuscrits C, E, F et G omettent les *śloka* 10a à 13a

[17] B : उदाहृतम् pour उदीरितम् [18] B : पञ्चतारं त्रिभागैकं [19] A, B : मुकुलं pour मुकुले

[20] A : एव pour एवं

[21] cf. *Kāraṇāgama* I 18, 331b-333a:

पुष्पलक्षणमुच्यते ॥
अग्न्यङ्गुलं तु विस्तारं मध्यमे कर्णिकायुतम् । दलाष्टकसमायुक्तं सरत्नं काञ्चनेन तु ॥
सुवर्णकुसुमं ह्येवम् ''

cf. *Suprabhedāgama*, I 22, 203-204:

'' सुवर्णकुसुमं शृणु ॥
द्वादशाङ्गुलविस्तारं वसुभागार्धमेव वा । मध्यमे कर्णिकायुक्तं दलाष्टकसमन्वितम् ॥
पुष्पमेवं समाख्यातम् ''

voir aussi *Ajitāgama* 22, 65-67.

[22] B : कार्यं सर्वविचित्रैस्त [23] E, G : मूर्ध्ना pour मूर्ध्नि

[गोलका[1]]

[[2]स्वर्णपुष्पविधिः प्रोक्तो गोलकालक्षणं शृणु ॥ १४ ॥
यावल्लिङ्गस्य विस्तारं पूजाभागोच्छ्रयं तथा ।] [3]अर्धाङ्गुलप्रवृद्धया तु ह्युत्सेधं सप्तधा भवेत् ॥१५॥
[4]ऊर्ध्वं सुषिरसंयुक्तमङ्गुलस्य [5]प्रमाणतः । [6]मानुषस्यैव लिङ्गस्य सूत्राग्रे सुषिरत्रयम् ॥ १६ ॥
अर्धं गोलकया वाथ त्रिष्वेकं चतुरंशकम् । पञ्चांशं वाथ कर्तव्यं सुषिरत्रयसंयुतम् ॥ १७ ॥
लिङ्गोत्सेधसमं कृत्वा [7]शेषं सूत्रेण योजयेत् । पिण्डिकागोलकां कुर्याच्चतुर्भागैव सा त्रिधा ॥ १८ ॥
[8]त्रिभागा वैकभागा वा यथा पीठाकृतिर्भवेत् । [9]वृत्ता वा चतुरश्रा वा यथापीठं समावृता ॥ १९ ॥
अधस्तात्पादुकां कृत्वा द्वित्र्यङ्गुलप्रमाणतः । गोलकालक्षणं प्रोक्तं पट्टलक्षणमुच्यते ॥ २० ॥

[पट्टम्[10]]

[11]एकाङ्गुलात्तु[12] विस्तारं यावदेकादशान्तकम् । लिङ्गनाहं तु दैर्घ्यं स्याच्चतुष्पञ्चांश[13]मेव वा ॥२१॥
[14]षट्सप्ताष्टांशकं वाथ शेषं सूत्रेण योजयेत् ।

[कर्णवृत्तम्[15]]

कर्णवृत्तं तथा कुर्याद्द्व्यङ्गुलस्य प्रमाणतः ॥ २२ ॥
अङ्गुलाङ्गुलवृद्ध्या तु [16]विंशत्यङ्गुलकान्तकम् । [17]भेद एकोनविंशः स्यात्तन्मध्ये [18]रत्नबन्धनम् ॥ २३ ॥

---

[1] cf. *Kāraṇāgama* I 18, 327b-330a:

गोलकालक्षणं शृणु ॥
अर्धाङ्गुलसमायामं पूजाभागसमायुतम् । नाहं चैव परिग्राह्यं कुर्याद्धेमेन गोलकाम् ॥
प्राग्वल्लक्षणमुद्धृत्य सूत्राग्रे सुषिरत्रयम् । नानारत्नसमायुक्तं लिङ्गवरकारयेत्ततः ॥
गोलकालक्षणं प्रोक्तम्"

voir aussi *Ajitāgama* 22, 88b-93.

[2] Dans tous les manuscrits utilisés pour cette édition il semble qu'il y a une lacune après *śloka* 14a. Le *śloka* proposé entre crochets à titre de reconstruction hypothétique, est pour seul objet de suggérer le contenu de cette lacune, et s'appuyer pour cela sur l'autorité du *Dīptāgama* 98, 371.

[3] Les manuscrits C, F, F et G omettent les *śloka* 15b à 16.

[4] Le manuscrit B omet le demi-*śloka* 16a

[5] A : प्रमाणकम्   [6] A : मानुष्य pour मानुष

[7] A : शेषसूत्रेण   [8] A : त्रिभागमेकभागं वा   [9] A : वृत्तं वा चतुरश्रं वा

[10] cf. *Kāraṇāgama* I 18, 330-331:

"पट्टलक्षणमुच्यते ॥
रुद्राक्षाङ्गुलमानेन पट्टतारं प्रकीर्तितम् । लिङ्गनाहं तु नाहं स्यात्पट्टं हैमेन कारयेत् ॥
पट्टलक्षणमेवं स्यात्"

रत्नैर्मुक्ताफलैश्चापि भूषयेत्तु[1] मनोहरम् । कर्णकुण्डलमाख्यातं चन्द्रखण्डविधिं शृणु ॥ २४ ॥

[चन्द्रखण्डः]

चतुरङ्गुलदैर्घ्यं [2]तु विस्तारश्चाङ्गुली भवेत् । [3]विस्ताराद‌ङ्गुलीवृद्ध्या दैर्घ्यात्त्र्यङ्गुलवृद्धितः[4] ॥ २५ ॥
मध्यविस्तार एवं तु मध्यादग्रं क्रमात्कृशम् ।

[जाह्नवी[5]]

अर्धं तु जाह्नवीपीठं तदर्धं योषिदाकृतिः ॥ २६ ॥
ऊर्ध्वकाया प्रकर्तव्या हस्ताभ्यां [6]वन्दिनी यथा । सर्वाभरणसंयुक्ता करण्डमकुटान्विता ॥ २७ ॥
एवं तु जाह्नवीं कल्प्य यथास्थानं तु योजयेत् ।

[उत्तरीयम्[7], हारो[8] यज्ञोपवीतं च[9]]

अर्धाङ्गुलप्रविस्तारमुत्तरीयं विशेषतः ॥ २८ ॥

---

cf. *Dīptāgama* 98, 375a: पट्टे पञ्चाङ्गुलं तारं लिङ्गनाहं च दैर्घ्यकम् ॥

cf. *Suprabhedāgama* I 22, 205a: पट्टं च भागविस्तारं लिङ्गनाहं च दैर्घ्यकम् ।

voir aussi *Ajitāgama* 22, 73-77a.

[11] à la place des *śloka* 21 et 22a, on a en A et B:
एकाङ्गुलात्तु विस्तारो यावदेकोनविंशतिः । अष्टाङ्गुलविवृद्ध्या तु लिङ्गनाहस्तु दैर्घ्यकम् ॥
तदर्धं वा तदर्धं वा पञ्चांशं वा षडंशकम् । सप्ताष्टनन्दभागं वा शेषं सूत्रेण योजयेत् ॥

[12] C : एकाङ्गुलं तु [13] C : अङ्ग pour अंश [14] C : षट्सप्तांशकं वाथ

[15] cf. *Aṃśumatkāśyapa* 64, 26-28:
कुण्डलव्यासतुङ्गं तु त्रिचतुष्पञ्चमात्रकम् । युक्तं वै कुण्डलं कृत्वा कर्णे स्कन्धोपरि न्यसेत् ॥
अथवा कर्णयोर्विप्र वृत्तकुण्डलकं न्यसेत् । वृत्तकुण्डलविस्तारमष्टादशयवं भवेत् ॥
वेदाङ्गुलं तु तत्तुङ्गं कुम्भाब्जमुकुलोत्पलम् । अन्यं वा सुन्दरोपेतं कल्पयेद्वृत्तकुण्डलम् ॥

[16] A, B : विंशत्यङ्गुलमन्तकम् [17] A : भेद एकोनलिङ्गः स्यात् ; C : भेद एकोनविंशत्या

[18] A : रक्तबन्धकम्

[1] C : तत् pour तु [2] B : स्यात् pour तु [3] A : विस्तारादि pour विस्तार

[4] B : वृद्धिदः pour वृद्धितः

[5] cf. *Kāmikāgama* II 46, 45-46:
देवस्य वक्त्रमानेन जाह्नव्यायाम उच्यते । द्विभुजा च त्रिणेत्रा च करण्डमकुटान्विता ॥
सर्वाभरणसंयुक्ता कृताञ्जलिपुटान्विता । ऊर्ध्वभागादधोभागं तोयाकारेण कारयेत् ॥

[6] B : वन्दनीयया ; E, F, G : वन्दनीयकम्

[7] cf. *Kāraṇāgama* I 18, 209b-211a:
"उत्तरीयविधिं शृणु ॥
बाणहस्तायतं वापि वेदहस्तायतं तु वा । तालमात्रप्रविस्तारं बन्धयेत्तु द्विपुच्छकौ ॥
यज्ञोपवीतवद्धार्यमुत्तरीयं विशेषतः ॥

voir aussi *Ajitāgama* 22, 70-72,

अङ्गुलाङ्गुलवृद्ध्या तु नवधाष्टाङ्गुलान्तकम्[1] । हारं यज्ञोपवीतं च लिङ्गायामसमन्वितम् ॥ २९ ॥
रत्नैर्मुक्ताफलैश्चापि बन्धयेत्तु मनोहरम् । एवमाभरणं प्रोक्तं प्रभालक्षणमुच्यते ॥ ३० ॥

[प्रभा[2]]

प्रभां वा तोरणैर्वापि योजयेत्तु [3]मनोहरम् । स्वर्णराजतताम्रैर्वा यथावित्तानुसारतः ॥ ३१ ॥
[4]त्रियङ्गुलं समारभ्य षट्षडङ्गुलवर्धनात् । सप्तविंशतिमात्रान्तं विस्तारं पञ्चधा भवेत् ॥ ३२ ॥
एवं लिङ्गोर्ध्वविस्तारं पार्श्वविस्तारमुच्यते । [5]त्रियङ्गुलं समारभ्य द्वियङ्गुलविवर्धनात् ॥ ३३ ॥

---

[a] cf. *Aṃśumatkāśyapa* 64, 57-61a:

ग्रीवे हारं विजानीयाद्धिक्काधस्तात्षडङ्गुलम् । लम्ब्यं वेदाङ्गुलं तारं यवत्रयघनान्वितम ॥
नानारत्नैर्हिरण्यैश्च हारं कृत्वातिसुन्दरम् । हिक्कासूत्रोपरिष्टात्तु उपग्रीवं तु बन्धयेत् ॥
रुद्राक्षं वाथ रत्नं वा हेमवृत्तमणिं तु वा । उपग्रीवमिदं ख्यातं हृन्माला त्वधुनोच्यते ॥
कण्ठादुदरबन्धान्तमक्षमालां तु बन्धयेत् । एतद्धृदयमाला स्यात्स्कन्धमाला तथोच्यते ॥
स्कन्धे तु स्कन्धमाला स्यान्नानापुष्पैर्विराजिता ॥

[b] cf. *Aṃśumatkāśyapa* 64, 52-55:

यज्ञोपवीतं संयुक्तं यवाष्टांशघनान्वितम् । उपवीतं त्रित्रिसूत्रमुदरसूत्रसमन्वितम् ॥
एवमेवोरुसूत्रं स्यादुपवीतघनं समम् । वामस्कन्धोपरि न्यस्त्वा नाभ्यधस्त्वङ्गुलान्तरम् ॥
यज्ञोपवीतदीर्घं स्यान्नाभेर्दक्षिणपार्श्वके । अपरे वंशमाश्रित्य यज्ञसूत्रं निधापयेत् ॥
उरःसूत्रं समालम्ब्य स्तनादष्टाङ्गुलान्तरम् । यज्ञोपवीतमेवं स्यात् ''

[1] B : अन्ततः pour अन्तकम्

[2] cf. *Vimalāgama* 40, 2-9;

ईश्वर उवाच—पुरा ताण्डवकाले तु मया वीर विजृम्भितम् । ऊर्ध्वलोकान्तरे देशे महातिमिरसंकुले ॥
तस्मिन्काले महावीर सूर्यकोटिसमप्रभः । मूलाग्निरुदितो ज्वालामालाजालसमन्वितः ॥
मदीये मौलिदेशे तु प्रभारूपमधारयत् । किं तु प्रणव एवाद्ये षट्त्रिंशत्तत्त्वदीप्तिभिः ॥
प्रभाकारेण संप्राप्तो मां मुदा सेवते सदा । आकर्णय महावीर देव दारुवने पुरा ॥
संक्रीडितं मया तत्र येन केनापि हेतुना । एते महर्षयः सर्वे मत्कृतौ क्रोधनिर्भराः ॥
आभिचारकहोमाग्निमनल्पं मय्यवाकिरन् । तदग्निर्दीप्तिजालैश्च प्रभाकारेण सेवते ॥
इत्येतेन प्रकारेण प्रभायाः कथ्यते विधिः । वीर तस्मादलंकारः सदा मे मौलिभागतः ॥
स्वर्णेन रजतेनापि ताम्रेणापि च दारुणा । दीप्तिभिश्च प्रभां कुर्यादथवा मकरतोरणम् ॥

cf. *Sūkṣmāgama* 55, 1-22:

वक्ष्यामि सकलादीनां प्रभामण्डललक्षणम् । स्वर्णरजतलोहेन कारयेत्तु प्रभञ्जन ॥
बिम्बस्य शोभनार्थाय मण्डलं त्रिविधं कुरु । वह्निमण्डलमादौ तु द्वितीयं भानुमण्डलम् ॥
तृतीयं चन्द्रवृत्तं च त्रिविधं मण्डलं भवेत् । एकं वापि द्वयं वापि त्रयं वापि प्रकल्पयेत् ॥
बिम्बोदरार्धं संगृह्य भ्रामयेच्चन्द्रबिम्बवत् । जानुभ्यामावसानं च जङ्घामध्यावसानकम् ॥
सिंहांश्च मकरांश्चैव अधोभागे प्रकल्पयेत् । मण्डलस्य तु विस्तारमग्निबाणाग्निनन्दतः ॥

[1]नवत्रिंशच्चैव यावत्तावदेकोनविंशतिः । पार्श्वविस्तारमेवं हि चोर्ध्वविस्तार उच्यते ॥ ३४ ॥
चतुरङ्गुलमारभ्य द्विद्व्यङ्गुलविवर्धनात् । [2]चत्वारिंशतिमात्रान्तं भेद एकोनविंशतिः ॥ ३५ ॥
[3]द्विवङ्गुलं समारभ्य ह्येकैकाङ्गुलवर्धनात् । षडङ्गुलावसानं तु विवरं पञ्चधा भवेत् ॥ ३६ ॥
नाना[4]वल्लिसमायुक्तं सर्वरत्नविचित्रितम् । चित्र[5]पत्रसमायुक्तं मकराद्यैर्विभूषितम् ॥ ३७ ॥
लिङ्गायामं त्रिधा कृत्वा व्योमांशं [6]चरणोदयम् । प्रमादीर्वो द्विभागः स्यादथवा पञ्चभागतः ॥ ३८ ॥
द्विभागं[7] पाददैर्घ्यं तु त्रिभागं प्रभया कुरु । [8]लिङ्गोदयार्धं पादः स्यात्तत्समं प्रभया कुरु[9] ॥ ३९ ॥

---

मध्यविस्तारमेवोक्तं पञ्चभागांशहीनकम् । मूलग्रन्थिविशालं तु क्रमेण परिकल्पयेत् ॥
मकरास्ये तु संयोज्यं मकारं वृत्तमेव वा । त्रयोदशाङ्गुलं ख्यातं मकरास्ये तु वीक्षितम् ॥
विस्तारं रुद्रधा भज्य मुक्तादामं द्व्यांशकम् । वेत्रमर्धांशकं प्रोक्तमिन्दूत्सेधं द्व्यांशकम् ॥
अर्धांशं वेत्रतुङ्गं तु महावेत्रं त्रियंशकम् । तद्वेत्रतुङ्गमर्धांशमिन्दूत्सेधं द्व्यांशकम् ॥
वेत्रमर्धांशमित्युक्तं तस्योर्ध्वेऽग्निं प्रकल्पयेत् । पञ्चाङ्गुलसमुत्सेधं विस्तारं च त्रियङ्गुलम् ॥
सप्तजिह्वासमायुक्तमथवा पञ्चजिह्वकम् । पार्श्वेष्वग्निं त्रिजिह्वं तु क्रमात्क्षीर्णं प्रकल्पयेत् ॥
सर्वाङ्गानां प्रकर्तव्यं शोभाबलसमन्वितम् । वह्निमण्डलमेवोक्तं भानुमण्डलकं शृणु ॥
वह्निमण्डलबाह्ये तु कल्पयेद्भानुमण्डलम् । विस्तारायाममानं तु पूर्वोक्तविधिना कुरु ॥
विस्तारं सप्तधा भज्य वेत्रमंशेन कल्पयेत् । पुष्पोच्चं पञ्चभागं च वेत्रं भागेन कल्पयेत् ॥
पुष्पमष्टदलोपेतं पञ्चभागं सकर्णिकम् । रत्नानि विन्यसेन्मध्ये वृत्ताकारं प्रकल्पयेत् ॥
नक्षत्रसंख्यया पुष्पे तत्संख्यं पद्मकुड्मलम् । पद्मस्य मुकुलाकारं तस्योर्ध्वे तु प्रकल्पयेत् ॥
भानुमण्डलमेवोक्तं चन्द्रमण्डलकं शृणु । भानुमण्डलबाह्ये तु कल्पयेच्चन्द्रमण्डलम् ॥
तस्य विस्तारतुङ्गं च पूर्वोक्तविधिना कुरु । वेत्रद्वयसमायुक्तं मध्येष्वब्जं प्रकल्पयेत् ॥
दलैः षोडशभिर्युक्तं कल्पयेत्पूर्ववत्सुधीः । कुमुदं कुड्मलाकारं तस्योर्ध्वे तु प्रकल्पयेत् ॥
नक्षत्रसंख्यया पुष्पे कुर्यात्कुमुदकुड्मलम् । पुष्पस्याभ्यन्तरे चैव रज्जुबन्धं प्रकल्पयेत् ॥
चन्द्रमण्डलमेवोक्तं कल्पयेदतिसुन्दरम् । अत्र किंचिद्विशेषोऽस्ति वह्निमण्डलकस्य च ॥
महावेत्रस्य मध्ये तु कल्पयेद्रत्नपुष्पकम् । प्रभामण्डलमेवोक्तम् ''

voir aussi *Ajitāgama* 22, 84b-88a.

[3] B : मनोहरः [4] Les manuscrits A et B omettent les *śloka* 32 et 33a.

[5] A : त्रयाङ्गुलं

[1] A : त्रिंशापिं चैव तत्तावद् ; B : त्रिंशोर्विंशचैव तत्तावद्द्देनैकोनविंशतिः

[2] La forme grammaticale correcte est चत्वारिंशद्

[3] Les manuscrits A et B omettent les *śloka* 36 et 37

[4] C : पल्लव pour वल्लि [5] F : वस्त्र pour पत्र [6] A : शरण pour चरण

[7] A : पादं pour भागं [8] A : लिङ्गोदयार्धपादोनतत्समं [9] B : वद pour कुरु

लिङ्गोदयप्रभा वापि [1]यन्त्रनाराचसंयुता । सप्ताष्टनवभागे[2] तु लिङ्गायामे[3] विभाजिते ॥ ४० ॥
द्व्यंशेन तोरणं कल्प्य शेषं पादोच्चमेव हि । प्रासादचरणाकारं पट्टाकारमथापि वा ॥ ४१ ॥
सर्वालंकारसंयुक्तं शेषं [4]तु सकलोक्तवत् । स्थलोर्ध्वे यन्त्रिकोर्ध्वे तु यो[जय]ेत्तु दृढीकृतम्[5] ॥ ४२ ॥

[यन्त्रिका[6]]

यन्त्रिका पीठिकोत्सेधा यन्त्रनाराचसंयुता ।

[भूषणयोजनविधिः[7]]

एवमेवं समापाद्य शुद्धिं कृत्वा विचक्षणः ॥ ४३ ॥
[8]पुण्याहप्रोक्षणं कृत्वा मृत्तोयैः [9]पत्रतोयकैः । पञ्चगव्यामृतैश्चैव क्षालयेच्छुद्धवारिणा ॥ ४४ ॥
तत्तद्देवान्समभ्यर्च्य कुम्भे वा करकेऽपि वा । शान्तिहोमं [10]ततः कृत्वा कुम्भोदैः [11]स्नापयेत्पुनः ॥ ४५ ॥
नैवेद्यान्तं [12]समभ्यर्च्य सुमुहूर्ते तु योजयेत् । आचार्यं पूजयेत्पश्चाद्यथावित्तानुसारतः ॥ ४६ ॥

इति [13]श्रीमद्रौरवतन्त्रे [क्रियापादे] [14]मकुटादिविभूषणविधिर्नाम त्रिचत्वारिंशः पटलः

---

1 B : यत्र pour यन्त्र    2 : A : भागं pour भागे
3 A : आयाम pour आयामे    4 B : तो pour तु    5 A : कृतिम् pour कृतम्
6 cf. *Diptāgama* 98, 379-381a:

"…यन्त्रिकालक्षणं शृणु ॥
आयसीं कल्पयेद्यन्त्रीं द्विवक्त्रां वलयान्विताम् । मध्याङ्गुलपरीणाहमर्गलस्यार्धकं तथा ॥
यन्त्रिकालक्षणं प्रोक्तम्"

cf. *Suprabhedāgama* I 22, 66-68:

"यन्त्रिकां च ततः शृणु ॥
आयसेन प्रकर्तव्यं नालं वै मध्यमाङ्गुलम् । कवाटार्गलसंबन्धं यथायुक्तं भवेदिह ॥
द्विवक्त्रं च ततः कृत्वा पूर्वपश्चिमसंयुतम् । मूले वलयसंयुक्तं सुस्निग्धं च भवेदिह ॥
यन्त्रिका च तथा प्रोक्ता"

7 cf. *Vimalāgama* 40, 10-18:

कृत्वा स्थिरे मुहूर्ते च प्रतिष्ठातन्त्रमार्गतः । अङ्कुरार्प्यर्पयित्वाथ पुण्याहं वाचयेत्सुधीः ॥
सिंहस्य मकरस्यापि नेत्रोन्मीलनमक्षिषु । कृत्वा शास्त्रविधानेन शिल्पिनं च विसर्जयेत् ॥
पुण्याहं वाचयेत्तत्र मध्वाज्यं प्रोक्षयेद्दशोः । ग्रामप्रदक्षिणं कृत्वा सर्वालंकारसंयुतम् ॥
जलाधिवासनं कृत्वा वेदिमध्ये विनिक्षिपेत् । पूर्वोक्तमण्टपं कृत्वा प्रच्छादनपटेन च ॥
बिम्बमावेष्ट्य सर्वाङ्गं गन्धपुष्पैः समर्चयेत् । तेजोरूपमथावाह्य प्रधानकुम्भमर्चयेत् ॥
वर्धन्यामादिशक्तिं च कुम्भेऽष्टदिशि दिक्पतीन् । समिदाज्यचरूँल्लाजतिलसर्षपतण्डुलान् ॥
प्राणप्रतिष्ठां कुर्याच्च प्रभाज्वालासु तन्त्रवित् । परमान्नं च नैवेद्यं ताम्बूलं च समर्पयेत् ॥
नीराजनविधिं कृत्वा सर्वालंकारसंयुतम् । आचार्यमर्चयेत्तत्र वस्त्रहेमाङ्गुलीयकैः ॥
भूषणानां च सर्वेषामेवं कुर्याद्विशेषतः । यः करोत्येवमीशस्य ज्योतिर्लोकमवाप्नुयात् ॥

8 A : पुण्याहं प्रोक्षणं    9 A : पितृ pour पत्र    10 A : तथा pour ततः
11 A : स्थापयेत् pour स्नापयेत्    12 B : समुद्धृत्य    13 B omet श्रीमद्रौरवतन्त्रे
14 A : मकुटादिविभूषाविधिश्चतुश्चत्वारिंशः पटलः ; B : मकुटादिविधिर्नाम चतुश्चत्वारिंशः पटलः ; C : मकुटादिभूषणविधिर्नाम पञ्चचत्वारिंशः पटलः ; E : मकुटादिभूषणविधिः पञ्चत्रिंशत्पटलः ; F : मकुटादिभूषणविधिपटलः पञ्चचत्वारिंशत्

# [चतुश्चत्वारिंशः पटलः]

## [प्रायश्चित्तविधिः[1]]

### [प्रासादपतने[2]]

अतः परं प्रवक्ष्यामि प्रायश्चित्तविधिक्रमम् । प्रासादे पतिते चैव द्वितीयं तरुणालयम् ॥ १॥
कल्पयित्वा तु [3]पूजांशमानेनैव तु लिङ्गकम् । कृत्वा संस्थाप्य विधिना [4]नित्यार्चनादि कारयेत् ॥ २
प्रासादं पूर्ववत्कृत्वा पुनः स्थापनमाचरेत् । जलसंप्रोक्षणं कृत्वा शान्तिहोमं समाचरेत् ॥ ३ ॥

### [सुधाकर्महीने[5]]

सुधाकर्मविहीने तु सुधां कृत्वा तु पूर्ववत् । स्नपनं कारयेत्पश्चाद्दिशाहोमं समाचरेत् ॥ ४ ॥

### [प्रासादाङ्गविच्छेदे[6]]

[7]प्रासादाङ्गे तु कूटादौ विच्छिन्ने [8]संभवे सति । तदङ्गानि पुनः कृत्वा दिशाहोमं समाचरेत् ॥ ५ ॥

---

[1] Pour प्रायश्चित्तविधि voir *Aṃśumadāgama* 37, *Acintyaviśvasādākhya* 72, *Kāmika* II 30 et 31, *Kāraṇa* I 144, *Kālottara* 38, *Makuṭa* 6, *Vira* 52 et 87, *Santānasaṃhitā* 56 et 66, *Sahasra* 7, *Suprabheda* I 55 et *Sūkṣma* 60 et 62.

[2] cf. *Aṃśumadāgama* 37,332b-333:
प्रासादे पतिते चैव राजराष्ट्रस्य दोषकृत् । बालस्थानं तु संकल्प्य स्थापयेद्विधिपूर्वकम् ॥
सदनं पूर्ववत्कृत्वा संप्रोक्षणमथाचरेत् ॥

cf. *Kāraṇāgama* I 144, 20-21a:
मन्दिरे पतिते यत्र राजराष्ट्रक्षयो भवेत् । बालस्थानं ततः कृत्वा स्थापयेद्विधिपूर्वकम् ॥
पूर्ववद्भवनं कृत्वा संप्रोक्षणमथाचरेत् ॥

cf. *Virāgama* 52, 5:
प्रासादे पतिते भिन्ने बालस्थानं तु कारयेत् । प्रासादं पूर्ववत्कृत्वा जलसंप्रोक्षणं कुरु ॥

cf. *Santānasaṃhitā* 56, 18b-19:
प्रासादे पतिते चैव पूर्वोक्तलक्षणैर्युतम् । प्रासादं कारयेद्देवि स्थापनं पूर्ववत्क्रमात् ॥
जलसंप्रोक्षणं कुर्याल्लिङ्गस्य तु विशेषतः ॥

cf. *Suprabhedāgama* I 55, 43b-44:
प्रासादे पतिते भिन्ने छिन्ने नष्टे तथैव च । बालालये शिवं नीत्वा विमाने पूर्ववत्कृते ॥
विधिवत्प्रोक्षणं कृत्वा पश्चादुत्सवमाचरेत् ॥

[3] B : पूजांशमनेनैव    [4] B : नित्यार्चनादिकं चरेत्

[5] cf. *Virāgama* 52, 19:
गर्भगेहे सुधाहीने सुधाकर्म समाचरेत् । शान्तिहोमं ततः कुर्यात्स्नपनं तत्र कारयेत् ॥

[6] cf. *Aṃśumadāgama* 37, 334-340a:
हर्म्ये तु स्फोटने भिन्ने कूटे वाथ विहीनके । अनावृष्टिर्भवेत्पश्चात्पुनः संधानमाचरेत् ॥
शान्तिहोमं ततः कृत्वा संप्रोक्षणमथाचरेत् । महानास्यल्पनास्योश्च उपानादेर्विहीनके ॥
विमानस्थानदेवानामङ्गोपाङ्गविहीनके । तद्राष्ट्रे वर्षवर्ज्यं वा महामारी प्रवर्तते ॥

[प्रासाददाहे दिङ्मूर्तिवृषमादिछेदादौ च]

[1]प्रासादे त्वग्निदग्धे चेद्दिङ्मूर्ति[2]वृषभादिके। [3]भिन्ने छिन्ने च चलिते पुनः कृत्वा तु पूर्ववत् ॥ ६ ॥
क्षीराभिषेचनं चैव दिशाहोमं तु कारयेत् । शान्तिहोमं [4]प्रकुर्वीत पुण्याहप्रोक्षणं ततः ॥ ७ ॥
व्योमव्यापि समुच्चार्य प्रोक्षयेत्पञ्चगव्यकैः ।

[लिङ्गप्रतिमादीनां चलनादौ[5]]

लिङ्गं वा प्रतिमा वापि पिण्डिका वा विशेषतः ॥ ८ ॥
चलिते स्फुटिते भिन्ने [6]दग्धे वा त्वनलेन तु । [7]प्राग्द्रव्यैः [8]प्रागिव कुर्यात्प्रतिष्ठां सम्यगाचरेत् ॥ ९ ॥
स्नपनं शान्तिहोमं च कर्तव्यं हि रुरो विदुः ।

[आवरणपीठादिहीने[9]]

आलयावृतपीठादिहीने [10]तु कल्पयेद्बुधः ॥ १० ॥
[11]स्नपनं चोक्तवत्कुर्यात्क्षेमार्थं [12]स्थाप्य देशिकः ।

---

सद्यः संधानकं कृत्वा संप्रोक्षणमथाचरेत् । स्थूपिदण्डस्य विच्छिन्ने पतिते त्वेकभिन्नके ॥
तद्राष्ट्रे रोगसंभूतिर्भूपतिस्त्वन्यथा भवेत् । तद्दोषशमनार्थाय स्थापयेत्तु विचक्षणः ॥
स्थूपिवर्गविहीने च महामारी प्रवर्तते । पूर्वप्रमाणं कर्तव्यं योजयेत्तु विचक्षणः ॥
तद्दोषशमनार्थाय सम्यक्संप्रोक्षणं कुरु ॥

cf. *Kāraṇāgama* I 144, 21b-23:
भवने स्फुटिते भिन्ने कूटशालाविहीनके । सिंहकूटमहानासीकपोते च विहीनके ॥
ग्रीवाप्रस्तरहीने चाप्यनुनासीविहीनके । अनावृष्टिर्भवेत्पश्चात्पुनः संधानमाचरेत् ॥
स्नपनं कारयेच्छम्भोः शान्तिहोमं समाचरेत् ॥

[7] A : प्रासादाङ्गं तु कूटानि विच्छिन्नम्
[8] B : संभवेद्यदि

[1] A : प्रासादान्यग्निदग्धं
[2] B : इन्दुमूर्ति pour दिङ्मूर्ति
[3] B : छिन्ने भिन्ने

[4] A, B : तु पुण्याहं pour प्रकुर्वीत

[5] cf. *Aṃśumadāgama* 37, 340b-343a et 471-472a:
पिण्डिकाचलिते भिन्ने विश्लिष्टे बन्धनादिके । स्त्रीनाशः स्याद्ध्रुवं नाशः सुस्थितं कारयेद्बुधः ॥
विधिना बन्धनं कृत्वा संप्रोक्षणमथाचरेत् । लिङ्गे बेरे च चलिते भिन्ने च स्फुटिते तथा ॥
नृपस्य मरणं शीघ्रं दुर्भिक्षं जायते भुवि । अनुकर्मविधानोक्तमार्गेण स्थापयेन्नवम् ॥
लिङ्गे वा प्रतिमायां वा अग्निना दूषिते सति । तद्ग्रामेऽग्निभयं चैव राजा दुर्जयमाप्नुयात् ॥
गव्येन स्नापयेच्छम्भुं स्नपनं पञ्चविंशतिः ॥

cf. *Kāraṇāgama* 144, 24-26:
पिण्डिकाचलिते चैव[विश्लिष्टे ब]न्धनादिभिः । जायानां नाशनं प्रोक्तं सुस्थितां पिण्डिकां कुरु ॥
विधिना कारयेदष्टबन्धनं देशिकोत्तमः । लिङ्गे च चलिते वक्रे स्फुटिते च प्रजापते ॥
नृपस्य मरणं शीघ्रं दुर्भिक्षं जायते भुवि । जीर्णोद्धारणमार्गेणाप्युद्धृत्य स्थापयेन्नवम् ॥

cf. *Makuṭāgama* 6, 95b-97a:
लिङ्गं तु स्फुटितं भिन्नं भग्नं छिन्नं तथैव हि । दग्धं जीर्णं परित्यज्य स्थापयेत्तु नवीकृतम् ॥
स्नपनं तत्र कुर्वीत यथाविभवविस्तृतम् । सर्वदोषप्रशान्त्यर्थं नाममन्त्रं शतं जपेत् ॥

cf. *Virāgama* 52, 12b-13:
लिङ्गं वा पीठमेवं वा स्फुटितं दग्धमेव वा । बालस्थानं प्रकर्तव्यं पूजां कुर्वीत देशिकः ॥
व्यपोह्यैव तु तल्लिङ्गं स्थापयेन्नवलिङ्गकम् ॥

[चण्डालार्तवादिस्पर्शे[1]]

[2]चण्डालैर्वार्तवैर्वापि [3]स्पृष्टं लिङ्गादि सद्म वा ॥ ११ ॥
[4]विसृज्याशेष[5]मृत्पात्रं शकृदालेपनं[6] कुरु । [7]कुशाद्भिश्चैव गव्यैश्च प्रोक्ष्य पुण्याहमाचरेत् ॥१२ ॥

---

[6] A : दहित्वे न तु लेपि तु    [7] A : प्राग्द्रवैः ; B : प्राग्द्रव्यं

[8] A : प्रागिवै pour प्रागिव : C, F : प्रागिवत्

[9] cf. *Kāmikāgama* II 30, 392b-397a:

परिवारविहीने तु भृत्यवर्गस्य नाशनम् । परिवारं समापाद्य प्रतिष्ठां कारयेत्ततः ॥
बलिपीठविहीने तु सर्वदोषावहो भवेत् । संकल्प्य पूर्ववत्पीठं ततस्तत्स्थापनं नयेत् ॥
तज्जीर्णे स्फोटिते दाहे पतनादौ सति द्विजाः । शान्तिहोमं तदा कृत्वा संप्रोक्षणमथाचरेत् ॥
प्राकारे गोपुरे जीर्णे पतिते स्फोटनादिके । राज्ञो भयंकरं प्रोक्तं शान्तिहोमं तदा नयेत् ॥
ततः संप्रोक्षणं कुर्यात्संधानं स्फोटनादिषु । कृत्वा गव्येन संप्रोक्ष्य शान्तिमेकाहमाचरेत् ॥

cf. *Kāraṇāgama* I 144, 54b-55:

बलिपीठविहीने च गोनाशो भवति ध्रुवम् । पूर्ववत्कल्पयेत्पीठं स्थापयेद्विधिना ततः ॥
स्नपनं कारयेच्छम्भोः पूजयेत्तु विशेषतः ॥

cf. *Virāgama* 52, 66:

बाह्यपीठविहीने तु स्नपनं तत्र कारयेत् । शिल्पिना कारयेत्पीठं स्थापयेल्लक्षणैर्युतम् ॥

cf. *Santānasaṃhitā* 56, 72:

बाह्यपीठविहीने तु शिल्पिना कारयेत्ततः । स्नपनं च तथा कार्यं पूर्वोक्तविधिना सह ॥

[10] B : सं pour तु    [11] A : स्नापनं    [12] C : स्नाप्य pour स्थाप्य

[1] cf. *Kāmikāgama* II 30, 401-411a:

शिल्पिभिः पाणचण्डालरजकाद्यैरथापि वा । स्पृष्टे पीठेऽथ लिङ्गे वा बेरादौ तत्र वासिनः ।
राष्ट्रे शत्रुजनैर्मर्त्याः पीड्यन्ते सर्व एव ते । मृद्भाण्डांस्तु त्यजेदेतैः स्पृष्टानासन्नकानपि ॥
गोमयालेपनं कृत्वा पुण्याहं च गुरूत्तमः । गव्येन स्नपनं कृत्वा संप्रोक्षणमथाचरेत् ॥
ऋतुस्त्रीपातकाशौचकारुकैः स्पर्शिते सति । शान्तिहोमादिकं कार्यं प्रागुक्तं रजकैरपि ॥
चण्डालपाणकाद्यैश्चेच्छान्तिकर्माधिकं नयेत् । गर्भगेहे प्रविष्टे तु स्नपनं शान्तिहोमयुक् ॥
संप्रोक्षणं विना कुर्यात्कपिकुक्कुटकादिभिः । ऋतुस्त्रीपातकाद्यैश्चेत्प्रविष्टं गर्भगेहकम् ॥
तदा संप्रोक्षणं कुर्यात्केवलं प्राक् प्रचोदितम् । चण्डालरजकाद्यैश्चेच्छान्तिहोमसमायुतम् ॥
संप्रोक्षणं विधातव्यं क्रमादेवं त्रिधा मतम् । शान्तिकर्म दिशाहोमं क्रमात्संप्रोक्षणं नयेत् ॥
त्रिःप्रकारैः क्रमादर्धमण्टपस्य प्रवेशने । प्रथमेन द्वितीये च चण्डालविहितं तु यत् ॥
प्रायश्चित्तमृतुस्त्रीणां स्पर्शनादौ विधीयताम् । प्रतिमामण्टपावेशे त्रिप्रकारैः क्रमेण वै ॥
शान्तिहोमं च मूर्त्याख्यं दिशाहोमं क्रमान्नयेत् ॥

cf. *Kāraṇāgama* I 144, 59-62 et 80-83a:

लिङ्गे वा प्रतिमे स्पृष्टे ऋतुस्त्रीभेक्तस्करैः । गर्भगेहप्रविष्टे वा जनानां नाशनं भवेत् ॥
मृद्भाण्डानि विसृज्याथ गोमयेनोपलेपयेत । पर्यग्निकरणं कृत्वा पुण्याहं वाचयेत्ततः ॥
स्नपनं कारयेत्पश्चाद्बिल्वपत्रेण घर्षयेत् । मूर्तिहोमं ततः कृत्वा ब्राह्मणान्भोजयेत्ततः ॥

मूर्तिहोमं ततः कृत्वा ततः स्नपनमाचरेत् ।

[अर्चनादिहीने[1]]

एकमासार्चने हीने नैवेद्याङ्गविहीनके ॥ १३ ॥

---

अन्तर्मण्डलशालादिरभिस्पृष्टो विशेषतः । संप्रोक्ष्य पञ्चगव्येन पुण्याहं वाचयेत्ततः ॥
विलोमैः संकरैरन्यैः स्पृष्टे लिङ्गे च पीठके । प्रविष्टे गर्भगेहे वा महामारीप्रकोपनम् ॥
धावत्येव नृपोऽन्यत्र राष्ट्रं चापि विनश्यति । मृद्भाण्डानि विसृज्याथ पञ्चशुद्धिक्रमाचरेत् ॥
गोमयेनोपलिप्याथ पुण्याहं वाचयेत्क्रमात् । स्नपनं कारयेत्तत्र मूर्तिहोमं ततः कुरु ॥
प्रागुदीरितमार्गेण संप्रोक्षणमथाचरेत् ॥

cf. *Makuṭāgama* 6, 16-17a:
स्त्रीशूद्रस्पर्शने चैव चण्डालस्पर्शनेऽपि च । स्नपनं पञ्चविंशत्तु शिवमन्त्रं शतं हुनेत् ॥
पुण्याहं वाचयेत्तत्र भक्त्या चैव प्रपूजयेत् ॥

cf. *Virāgama* 52, 81-83a:
लिङ्गे वा कौतुके वापि समीपे ऋतुसंभवे । प्राकारे गोपुरे चैव पञ्चगव्येन शुध्यति ॥
पुण्याहं वाचयेत्तत्र शान्तिहोमं तु कारयेत् । स्नपनं तत्र कर्तव्यं तद्दोषशमनाय च ॥
स्पृशेद्वापि तु विपेन्द्र जलसंप्रोक्षणं कुरु ॥

cf. *Santānasaṃhitā* 56, 32a: चण्डालस्पर्शने लिङ्गे जलसंप्रोक्षणं भवेत् ।

[2] A : चण्डालैर्वाक्रिपैर्वापि ; B : चण्डालैर्वार्तिपैर्वापि

[3] A : स्पृष्टे pour स्पृष्टं ; B : स्पृष्ट C : स्पृशेत्

[4] A : प्र pour वि [5] B : शेष pour अशेष [6] B : आप्लावनं pour आलेपनं

[7] E : कुशमृद्भिश्च

[1] pour अर्चनाहीने voir *Kāmika* II 30, 203b-205a:
दिनानि यानि हीनानि पूजया नित्यसंज्ञया । तदहःसंख्यया कुर्यात्प्रायश्चित्तं पुरोदितम् ॥
एकमासावधिर्यावत्ततः संप्रोक्षणं नयेत् । नान्यथा देवदेवस्य संनिधिं द्विजसत्तमाः ॥

cf. *Kāraṇāgama* I 144, 93a et 96:
स्थानभ्रंशो भवेद्राज्ञो नित्यपूजाविहीनके ।......अहोरात्रविहीने तु स्नपनं शान्तिहोमयुक् ॥
मासादूर्ध्वविहीने तु जलसंप्रोक्षणं कुरु ॥

cf. *Makuṭāgama* 6, 9b-10a:
पूजाहानौ तु मासान्तं कलशानां शतत्रयम् । हृन्मन्त्रेण शतं हुत्वा क्षीरान्नं च निवेदयेत् ॥

cf. *Virāgama* 52, 35b et 38b-39a:
नित्यार्चनाविहीने तु शान्तिहोमं तु कारयेत् । ......दिशाहोमं चार्धमासे स्नपनं चैव कारयेत् ॥
इत ऊर्ध्वं तु मासे स्याज्जलसंप्रोक्षणं कुरु ॥

cf. *Santānasaṃhitā* 56, 47b-49:
नित्यार्चनविहीने तु प्रायश्चित्तं शृणु प्रिये । स्थिरलिङ्गार्चनाहीने स्नपनं तत्र कारयेत् ॥
सप्तरात्रात्परं देवि जलसंप्रोक्षणं भवेत् । चललिङ्गेऽर्चनाहीने द्विगुणं पूजयेत्ततः ॥
मासादुपरि हीने तु स्नपनं तत्र कारयेत् ॥

गन्धद्रव्यादिहीने च द्विगुण प्रतिसन्धिकम् । सन्धिदीपविहीने तु द्विगुणं दीपमाचरेत् ॥ १४

---

cf. *Suprabhedāgama* I 55, 6a: पूजाहीने तु मासान्तं त्रिशतैः कलशैः पुनः ।

pour नैवेद्याङ्गहीने vior *Kāraṇa* I 144, 160b- 163a:

नैवेद्ये च विहीने तु मूकत्वं च प्रवर्तते । वर्षहीनं भवेल्लोके पञ्चाशत्कलशैर्यजेत् ॥
मूलेन शट्शतं जप्त्वा प्रभूतहविषं ददेत् । उपदंशघृतापूपसूपहीनं निवेदिते ॥
तद्ग्रामस्य क्षयः प्रोक्तः षोडशैः कलशैर्यजेत् । अघोरं द्विशतं जप्त्वा सोपदंशं निवेदयेत् ॥

cf. *Makuṭāgama* 6, 38:

नैवेद्यादिविहीने च दुर्भिक्षं जायते ध्रुवम् । मूर्तिहोमं ततः कृत्वा मूलमन्त्रं शतं हुनेत् ॥

cf. *Virāgama* 52, 42a et 84b-85a:

नैवेद्ये च विहीने तु द्विगुणं च निवेदयेत् ।......उपदंशादिविच्छिन्ने पुण्याहं वाचयेत्ततः ।
उपदंशं पुनर्दद्याद्''

cf. *Santānasaṃhitā* 56, 5 b: नैवेद्ये च विहीने तु द्विगुणं दापयेच्छिवे ॥

cf. *Suprabhedāgama* I 55, 16b-17a:

नैवेद्ये च विहीने तु द्विगुणं तु निवेदयेत् । हविर्द्रव्यविहीने तु द्विगुणेन तु बुद्धिमान् ॥

cf. *Sūkṣmagama* 62, 27-28a:

नैवेद्ये चोपदंशे च हीने दुर्भिक्षसंभवः । तद्दोषशमनार्थाय स्नापयेत्पञ्चगव्यकैः ॥
ईशमन्त्रं शतं जप्त्वा तद्द्रव्यं द्विगुणं ददेत् ॥

pour गन्धादिद्रव्यहीने voir *Aṃśumadāgama* 37, 185b-186a:

गन्धपुष्पविहीने च अनावृष्टिर्न संशयः । मूललिङ्गे विशेषेण नवकैरभिषेचयेत् ॥

cf. *Kāraṇāgama* I 144, 128b-130a et 138b-139a:

गन्धद्रव्यविहीने च द्रोणं क्षीराभिषेचनम् । संधित्रयविहीने च शान्तिहोमं च कारयेत् ॥
अहोरात्रविहीने च शान्तिहोमं समाचरेत् । स्नपनं कारयेच्छम्भोः पूजयेत् विशेषतः ॥......
पुष्पार्घ्यधूपहीने चाप्यनावृष्टिर्भविष्यति । मूलमन्त्रं शतं जप्त्वा तद्द्रव्यं द्विगुणं ददेत् ॥ ॥

cf. *Virāgama* 52, 62b-63a:

गन्धपुष्पविहीने तु धूपहीने तथैव च । पुण्याहं कारयेत्तत्र द्विगुणं दापयेत्ततः ॥

cf *Suprabhedāgama* I 55, 17b: नित्यद्रव्यविहीने तु तदान्ये द्विगुणं चरेत् ॥

Pour सन्धिदीपहीने voir *Kāraṇa* I 144, 148-149a:

संध्यादीपविहीने तु द्विगुणं रोपयेत्ततः । फलं प्रोक्तं तु मन्त्राणां तत्सर्वं निष्फलं भवेत् ॥
शान्तिहोमं ततः कृत्वा मूलमन्त्रं शतं जपेत ॥

Pour नित्यादिदीपहीने voir *Aṃśumadāgama* 37, 319-321:

निर्वाणदीपहीने तु धामश्रीस्त्वन्यथा भवेत् । तद्दोषशमनार्थाय पुनः स्नानं समाचरेत् ॥
एकाहस्य विहीने तु महामारी प्रवर्तते । पुनर्दीपं समारोप्य नवकैरभिषेचयेत् ॥
क्रियादीपविहीने तु तत्क्रिया निष्फला भवेत् । तद्दोषशमनार्थाय बहुरूपं शतं जपेत् ॥

नित्यादिदीपहीने तु त्रिगुणं दीपमाचरेत् । गव्याभिषेचनं कुर्याच्छान्तिहोमं समाचरेत् ॥ १५ ॥

---

cf. *Kāmikāgama* II 30, 243-244a et 298b:

दीपानामथ वैकल्ये जपेदघोरशतत्रयम् । दीपानि द्विगुणं पश्चाद्देवदेवे प्रदापयेत् ॥
रक्षादीपस्य विच्छेदेऽप्येवं द्विगुणजापयुक् ।... सौख्यदीपस्य विच्छेदे घोरेणैकशतं जपेत् ॥

cf. *Kāraṇāgama* I 144, 130b-131a:

सौख्यदीपविहीने च क्षुद्भयं ग्रामवासिनाम् । आरोप्य द्विगुणं दीपमघोरेण शतं जपेत् ॥

*ibid.* 143b-147:

हीने निर्वाणदीपे तु लोकोन्मत्तं समाचरेत् । एकाहे तु विहीनं स्याद्द्विगुणं रोपयेत्ततः ॥
पश्चाहे शान्तिहोमं च दशाहे स्नपनं कुरु । अर्धमासे विहीने च स्नपनं शान्तिहोमयुक् ॥
एकमासे विहीने च दुर्भिक्षं जायते ध्रुवम् । स्नपनं मूर्तिहोमं च कारयेत्तु विशेषतः ॥
मासादूर्ध्वविहीने च शान्तिहोमं तु कारयेत् । पवमानं जपित्वाथ मूलेन त्रिशतं जपेत् ॥
स्नपनं कारयित्वाथ विधिना पूजयेच्छिवम् ।

*ibid.* 149b–154a:

नैवेद्ये दीपहीने च दुर्भिक्षं जायते ध्रुवम् । एकसंध्याविहीने च तद्दीपं द्विगुणं भवेत् ॥
सन्धिद्वयविहीने च कुर्याद्गव्याभिषेचनम् । सन्धित्रयविहीने च शान्तिहोम च कारयेत् ॥
अहोरात्रविहीने च स्नपनं कारयेत्ततः । पश्चाहे स्नपनं कुर्यात्कारयेच्छान्तिहोमकम् ॥
दशाहे स्नपनं गव्यं मूर्तिहोमं तु कारयेत् । एकमासविहीने तु दिशाहोमं तु कारयेत् ॥
स्नपनं कारयेच्छम्भोः पूजयेत्तु विशेषतः । मासादूर्ध्वविहीने तु जलसंप्रोक्षणं कुरु ॥

*ibid.* 76-77a:

बलिदीपविहीने च लक्ष्मीर्ग्रामाद्गता भवेत् । क्षुरिकाबीजमुख्यैश्च प्रत्येकं तु शतं जपेत् ॥
द्विगुणं दीपमारोप्य बलिशेषं समाचरेत् ॥

cf. *Makuṭāgama* 6, 39:

यागप्रदीपहीने च उन्मादो जायते ध्रुवम् । घोरमन्त्रं शतं जप्त्वा दीपमारोपयेद्ध्रुवम् ॥

*ibid.* 58-59:

बलिदीपविहीने च लक्ष्मीनाशो भवेद्ध्रुवम् । पञ्चब्रह्मषडङ्गानि प्रत्येकं तु शतं जपेत् ॥
द्विगुणं दीपमारोप्य बलिशेषं समाचरेत् ॥

cf. *Virāgama* 52, 43b 45a:

गर्भगेहे दीपहीने पुण्याहं तत्र कारयेत् । दीपं संयोजयेत्तत्र प्रासादेन तु मन्त्रतः ॥
नित्योत्सवे दीपहीने पुण्याहं तत्र कारयेत् । पुनर्दीपं समायोज्य पुनर्नित्योत्सवं कुरु ॥

cf. *Santānasamhitā* 56, 58b-59a:

नित्योत्सवे दीपहीने पुण्याहं वाचयेत्ततः । पुनर्दीपं समायोज्यमेवं भूतबलौ प्रिये ॥

[मङ्गलास्त्रादिहीने[1]]

मङ्गलास्त्रादिहीने तु कृत्वा तान्स्थापयेद्बुधः[2] । शान्तिहोमं ततः कृत्वा [3]स्नापयेद्दोषशान्तये ॥ १६ ॥

[मङ्गलास्त्रादिपतने[4]]

पतिते मङ्गलास्त्रादौ[5] क्षालयेत्पञ्चगव्यकैः । तन्मन्त्रेण शतं हुत्वा प्रोक्षयेद्धृदयेन तु ॥ १७ ॥

---

[1] cf. *Kāraṇāgama* I 144, 48b-51a:

आयुधानां विहीने च तस्करात्तु भयं भवेत् । दशाक्षरेण मन्त्रेण होमयेच्छतसंख्यया ॥
कृत्वा च लक्षणेनैव प्रोक्षयेत्तु शिवाम्भसा । अष्टमङ्गलहीने च जायानां चैव नाशनम् ॥
शान्तिहोमं ततः कृत्वा कारयेल्लक्षणान्वितम् । पञ्चगव्येन संप्रोक्ष्य स्नापयेद्विधिपूर्वकम् ॥

cf. *Virāgama* 52, 56b-57:

अष्टमङ्गलरूपे वा आयुधे वा विहीनके । तत्तन्मन्त्रेण होतव्यमष्टोत्तरशतं पृथक् ॥
तत्स्वरूपं पुनः कृत्वा प्रोक्षयेत्पूर्ववत्क्रमात् ॥

cf. *Santānasaṃhitā* 56, 62b-63a:

आयुधे च विहीने तु शान्तिहोमं तु कारयेत् । आयुधं शिल्पिना कृत्वा पुण्याहं वाचयेत्ततः ॥

[2] B : ततः pour बुधः [3] A, B : स्थापयेद् pour स्नापयेद्

[4] cf. *Kāmikāgama* II 30, 806:

दशायुधानि वा भूमौ संभूता न पतन्ति चेत् । निर्वाणानि तदा कुर्याच्छान्तिहोमं जरापहम् ॥

*ibid.*, 809:

शूलास्त्रे पतिते राज्ञो भयं भवति तत्र च । धामादौ वा दिशाद्ो दस्त्रार्चनान्वितम् ॥

*ibid.*, 825b-826a:

आयुधास्त्रानलिङ्गेशवाहने पतिते भुवि । गुरुः शतं जपेद् घोरं द्विगुणं शंकरालयोः ॥

cf. *Kāraṇāgama* I 144, 67-69 :

शूलास्त्रे पतिते चैव भिन्ने नष्टे तथैव च । तद्ग्रामस्य च राष्ट्रस्य शत्रुभिर्भयमादिशेत् ॥
पतितेऽभिषेचनं कुर्याच्छान्तिहोमं तु कारयेत् । अस्त्रमन्त्रेण मतिमाञ्जुहुयाच्छतसंख्यया ॥
शेषस्थाने बलिं दद्यात्प्रविशेद्यागमण्टपम् ।

*ibid.*, 72b 74a:

आयुधेषु प्रणष्टेषु भिन्नेषु पतितेषु वा । प्रवर्तते महामारी गावो नश्यन्त्यसंशयः ॥
बिन्दूर्ध्वेन तु मन्त्रेण जपेदष्टशतं सुधीः । नष्टे भिन्ने च कर्तव्यं पूर्ववल्लक्षणान्वितम् ॥

cf. *Makuṭāgama* 6, 48-50a:

शूलास्त्रे पतिते चैव छिन्ने नष्टे तथैव च । तद्ग्रामस्य च राष्ट्रस्य शत्रुभिः पीडनं भवेत् ॥
कृत्वाभिषेकं पतिते शान्तिहोमं तु कारयेत् । अस्त्रमन्त्रेण जुहुयाज्जपेत्तु शिवमन्त्रतः ॥
शेषस्थानबलिं दत्त्वा प्रविशेद्यागमण्टपम् ॥

cf. *Santānasaṃhitā* 56, 63b-64a:

प्रमादात्पतितेऽप्यस्त्रे शान्तिहोमं समाचरेत् । स्नपनं तत्र कुर्वीत पूर्वोक्तविधिना सह ॥

cf. *Suprabhedāgama* I 55, 23:

शूलास्त्रं पतितं वापि आयुधं चाष्टमङ्गलम् । शूलस्य स्नपनं तत्र अन्येषां च शताहुतिः ॥

[5] A : आदि pour आदौ

[नित्यकर्मविहीने नित्योत्सवविहीने च[1]]

नित्यकर्मविहीने तु चान्याहे द्विगुणं चरेत् । नित्योत्सवविहीने तु[2] स्नपनं शान्तिहोमकम् ॥ १८ ॥
कृत्वा नित्योत्सवं कुर्यात्सर्वदोषोपशान्तये ।

[स्थलकर्म सुधाकर्म-अष्टबन्धहीने[3]]

स्थलकर्मविहीने तु सुधाकर्मविहीनके[4] ॥ १९ ॥

---

[1] cf. *Kāmikāgama* II 30, 272–277
नित्योत्सवो विहीनश्चेत्सर्वदोषकरो नृणाम् । तदा देवं समभ्यर्च्याघोरेणैव शतं हुनेत् ॥
संधित्रयेऽपि हीने तु शान्तिहोमं समाचरेत् । अहोरात्रे विहीने तु स्नपन कारयेच्छिवे ॥
पञ्चाहात्तु तदेव स्यादघोरशतहोमयुक् । दशाहे स्नपनं शान्तिहोमसंयुक्तमाचरेत् ॥
तस्य पक्षकविच्छेदे शान्तिः स्यात्स्नपनेन तु । एकमासान्तरे हीने स्नपनं च दशाहुतिः ॥
शान्तिस्तदूर्ध्वं स्यात्किं तु त्रिदिनं ब्राह्मणोत्तमाः । पक्षान्तरे ततोऽप्यूर्ध्वं यदि निष्कृतिर्ऋक्षकम् ॥
वर्धयेद्युगमसख्यातपक्षपक्षावसानकम् । नित्योत्सवश्च कर्तव्यो निष्कृतेरनु देशिकैः ॥
cf. *Kāraṇāgama* I 144, 13 122a:
नित्योत्सवविहीने तु धान्यनाशो भवेद्ध्रुवम् । संध्यैकेन विहीने तु स्नापयेत्पञ्चगव्यकैः ॥
मूलमन्त्रं शतं जप्त्वा चोत्सवं पूर्ववत्कुरु । संधिद्वयविहीने तु शान्तिद्वयं जपेद्गुरुः ॥
एकाहोत्सवहीने च स्नपनं कारयेत्प्रभोः । पञ्चाहे चोत्सवे हीने मूलेनैव शतं हुनेत् ॥
स्नपनं कारयेच्छम्भोः पूजयेद्विधिपूर्वकम् । दशाहे स्नपनं कुर्याच्छान्तिहोमं तु कारयेत् ।
पक्षाहे चोत्सवे हीने मूर्तिहोमं तु कारयेत् । स्नपनं कारयेच्छम्भोः पूजयित्वा विधानतः ॥
मासे नित्योत्सवे हीने विद्याङ्गैर्ब्रह्मपञ्चकैः । मासादूर्ध्वविहीने तु दिशाहोमं तु कारयेत् ।
कृत्वा संपूज्य देवेशं मूलेनैव शतं जपेत् । षण्मासाद्वत्सरान्तं वा नित्योत्सवविहीनकम् ॥
चोरबाधा भवेल्लोके दुर्भिक्षं स्यात्प्रजापते । षडङ्गैर्बीजमुख्यैश्च शिवार्णैश्च दशाक्षरैः ॥
प्रत्येकं त्रिशतं हुत्वा मूलेनैव शतं हुनेत् । तत्संख्यातैर्जपं कुर्यात्स्नपनं कारयेद्विभोः ॥
अष्टोत्तरशतैः कुम्भैः सहस्रकलशैर्यजेत् ॥
cf. *Santānasaṃhitā* 56, 55
नित्योत्सवे विहीने तु स्नपनं तत्र कारयेत् । पुनर्नित्योत्सवं कुर्यात् ''
cf. *Sūkṣmāgama* 62, 33-34:
नित्योत्सवविहीने च परचक्राद्भयं भवेत् । शान्तिहोमं ततः कृत्वा स्नपनैरभिषेचयेत् ॥
त्रियम्बकमनुं जप्त्वा पश्चान्मन्त्रं शतं जपेत् । नित्योत्सवं ततः कृत्वा''

[2] B : च pour तु

[3] cf. *Kāraṇāgama* I 144, 39b-40:
सुधाकर्मविहीने च स्थलकर्मविहीनके । प्रवर्तते महामारी पुनः संधानमाचरेत् ॥
पुण्याहं वाचयेत्पश्चाद्द्रव्यैरेवाभिषेचयेत् ॥
cf. *Kāmikāgama* II 30, 359b 361a:
अष्टबन्धे तु विश्लिष्टे राष्ट्रे शैथिल्यमादिशेत् । अष्टबन्धं त्रिबन्धं वा कृत्वान्ते स्नपनं नयेत् ॥
पुरातनं परित्यज्य शास्त्रेणाष्टं समुच्चरन् । अघोरेण शतं होमं समिदाज्यतिलौदनैः ॥
cf. *Santānasaṃhitā* 56, 28b et 30:
बन्धहीने तु देवेशि कारयेदष्टबन्धनम् ।......अष्टबन्धं प्रकर्तव्यं जलसंप्रोक्षणं ततः ॥
शिवेन लिङ्गं स्पृष्ट्वा च जलसंप्रोक्षणं कुरु ॥

[4] A : विहीनकम् pour विहीनके

[1]अष्टबन्धविहीने च [2]विश्लिष्टे [3]बन्धनादिके । [4]सुश्लिष्टं शीघ्रतः कुर्यात्संप्रोक्षणमथाचरेत् ॥ २० ॥

[संवत्सरोत्सवहीने[5]]

संवत्सरोत्सवे[6] हीने मूर्तिहोमं समाचरेत् । [7]ततस्त्वपरमासे [8]तु प्राग्दिने चोत्सवं कुरु ॥ २१ ॥
[9]अपरपक्षं च वर्ज्येत्तु पूर्ववत्सर्वमाचरेत् ।

[ध्वजदण्डस्य पीठस्य वा छेदादौ[10]]

ध्वजदण्डे तु पीठे वा छिन्ने भिन्नादिसंभवे ॥ २२ ॥
शीघ्रं पूर्ववदापाद्य [11]स्थापनं तु समाचरेत् । [12]पुण्याहप्रोक्षणं कृत्वा स्नपनं शान्तिहोमकम् ॥ २३ ॥

[बलिदान-परिवेष-नीराजन-तीर्थसंग्रह-तीर्थकार्य-हीनेषु[13]]

[14]बलिदानविहीने तु परिवेषविहीनके । [15]नीराजनविहीने तु तीर्थसंग्रहहीनके ॥ २४ ॥
स्नपनं शान्तिहोमं च कृत्वा सर्वं समाचरेत् । तीर्थर्क्षे तीर्थकार्ये[16] तु हीने निष्फलमादिशेत्[17]॥ २५ ॥
[18]ततस्त्वपरमासे तु [19]पुनरुत्सवमाचरेत् । [20]अत्रानुक्तं तु यत्सर्वं शान्तिहोमेन शाम्यति ॥ २६ ॥

[अद्भुतशान्तिः[21]]

[22]लिङ्गे वा प्रतिमायां वा स्वेदे वा रोदने सति । [23]वल्मीकमृदि सत्यां चेद्रक्तकन्याप्रदर्शने ॥ २७ ॥
[24]प्रासादे च मरुद्भिन्ने [25]पीठे सरीसृपोद्भवे । [26]उलूकपिङ्गलकापोतगर्भगेहप्रवेशने ॥ २८ ॥

---

[1] A : अष्टबन्धनहीने च [2] C : विस्पष्टे [3] A, C : बन्धनादयः [4] A : सुश्लिष्टा pour सुश्लिष्टं

[5] cf. *Aṃśumadāgama* 37, 352-353a:
अब्दोत्सवविहीने च राष्ट्रे कल्याणनाशनम् । तद्दोषशमनार्थाय स्नपनं कारयेद्बुधः॥
तत्संख्यातदिनान्तं तु लब्धमासे तु कारयेत् ॥

[6] B : उत्सव pour उत्सवे [7] A : ततः स्वपर pour ततस्त्वपर ; C, F : ततः संभव

[8] B : च pour तु [9] A : अपरपक्षात् पश्चात् ; B : अपरे पश्चात् पक्षात् ; C : अपरपक्षं च वर्ज्येद्धं

[10] cf. *Kāraṇāgama* I 144, 26b-29a:
ध्वजदण्डादिके हीने ध्वजवेदिविहीनके । परचक्राद्भयं भूमौ शिल्पिनं हन्ति देशिकम् ॥
पुनः सलक्षणं दण्डं स्थाप्य शान्तिद्वयं जपेत् । सर्वलक्षणसंयुक्तां वेदिं संकल्प्य पूजयेत् ॥
ध्वजदण्डे तु विच्छिन्ने परनृपाद्भयं भवेत् । शान्तिहोमं ततः कृत्वा पुनः संधानमाचरेत् ॥

cf. *Suprabhedāgama* I 55, 19-20:
ध्वजस्य ध्वजदण्डस्य घण्टायास्तु विशेषतः । भिन्ने छिन्ने च पतिते चोरग्रस्तादिसंभवे ॥
कृत्वा तत्पूर्ववत्सर्वं पुनरुत्थापनं कुरु । हृदयेन शतं हुत्वा स्नापयेत्पञ्चगव्यकैः ॥

[11] A : स्नापनं pour स्थापनं [12] A : पुण्याहं प्रोक्षणं

[13] Pour बलिदानविहीने voir *Kāmika* II 30, 798-800:
बलिदाने विहीने च क्षुद्बाधा जायते नृणाम् । मूर्तिहोमं ततः कृत्वा यानान्ते वा बलिं नयेत् ॥
देवालये बलिर्हीनो यदाघोरशतं जपेत् । यस्यां दिशि बलिर्हीनो ग्रामादौ संहिताहुतिम् ॥

तत्तद्दिशापतेर्मन्त्रशतैर्जपसमन्वितम् । विधाय यामकाले वा तदन्ते वा बलिं नयेत् ॥

cf. *Kāraṇāgama* I 144, 63b-64:

बलिदानविहीने च क्षुद्बाधा जायते नृणाम् । मूर्तिहोमं ततः कृत्वा प्रभूतहविषा हुनेत् ॥
बलिद्रव्यं समापाद्य बलिदानं समाचरेत् ॥

cf. *Makuṭāgama* 6, 11b-15:

बलिहानौ तु संध्यायामन्यत्र द्विगुणं चरेत् । द्विसंध्यं बलिहानौ तु द्विगुणं चान्यसंधिषु ॥
त्रिसंध्यं बलिहानौ तु कर्ता स्नपनमाचरेत् । द्व्यहादारभ्य मासान्तं बलिविच्छेदनं यदि ॥
शिवाग्निं पूर्ववत्कृत्वा स्नपनं तु शताष्टकम् । मासोर्ध्वं बलिहानौ तु शिवाग्निं पूजयेत्क्रमात् ॥
सहस्राज्याहुतिं हुत्वा शिवमन्त्रेण देशिकः । अष्टोत्तरशतैरेव कलशैः स्नपनं चरेत् ॥
भारद्वयं तु नैवेद्यमेकाहोत्सवमाचरेत् ॥

cf. *Virāgama* 52, 52-53:

बलिकर्मविहीने तु स्नपनं दिवसे तथा । पश्चाहे बलिहीने तु दिशाहोमं तु कारयेत् ॥
पुनर्बलिक्रमं कुर्यात्पूर्वोक्तविधिना सह । बलिद्रव्यविहीने तु द्विगुणं च प्रयोजयेत् ॥

cf. *Santānasamhitā* 56, 60b-61:

बलिहीने तु देविशि शान्तिहोमं तु कारयेत् । पुनर्बलिभ्रमं कुर्यात्पूर्वोक्तविधिना सह ॥
बलिद्रव्यविहीने तु द्विगुणं योजयेत्ततः ॥

cf. *Suprabhedāgama* I 55, 7b-11:

संध्यायां बलिहीने तु रुद्रमन्त्रं शतं जपेत् । द्विसंध्यं बलिहीने तु शताध्यर्धं जपेद्गुरुः ॥
त्रिसंध्यं बलिहीने च स्नपनं कारयेत्ततः । द्वियहादि च मासान्तं बलिविच्छेदकर्मणि ॥
शिवाग्निं पूर्ववद्धयात्वा स्नपनं तु शताष्टकम् । बलौ मासोर्ध्वहीने तु शिवाग्नौ तत्र बुद्धिमान् ॥
सहस्राज्याहुतिं चाग्नैः शिवेनैव तु देशिकः । अष्टोत्तरशतैः कुम्भैः स्नपनं कारयेद्गुरुः ॥
नित्योत्सवं पुनः कुर्यात्पूर्ववच्च विशेषतः ॥

Pour परिवेषविहीने voir *Kāraṇa* I 144, 92:

परिवेषविहीने च लोकोन्मत्तं समादिशेत् । शिवमन्त्रं शतं जप्त्वा व्योमव्यापि तथैव च ॥

cf *Makuṭāgama* 6, 73:

परिवेषक्रमे हीने लोकस्याज्ञानमादिशेत् । शिवमन्त्रं शतं हुत्वा व्योमव्यापिशतं जपेत् ॥

Pour नीराजनविहीने voir *Kāmikāgama* II 30, 301-302:

नीराजने तदङ्गे वा हीनेऽग्निभयमादिशेत् । देवं संस्नाप्य गव्येन समभ्यर्च्यादराद्गुरुः ॥
द्विगुणं तु नयेत्पश्चाद्यानि हीनानि तानि च । शान्तिहोमस्तु वा कार्यो मूर्तिहोमोऽथवा मतः ॥

cf. *Kāraṇāgama* I 144, 93-94a:

नीराजनविहीने तु वह्निना तु भयं भवेत् । महेश्वरस्य बीजेन शतं जप्त्वा विशेषतः ॥
नीराजनं ततः कुर्यात्पूर्वोक्तविधिना सह ॥

cf. *Makuṭāgama* 6, 74-75a:

नीराजनविहीने तु पावकेन भयं भवेत् । मूलप्रकृतिबीजं तु शतं जप्त्वा विशेषतः ॥
नीराजनं ततः कुर्यात्पूर्वोक्तविधिना सह ॥

Pour तीर्थहीने voir *Sakalāgamaprāyaścitta* ,p. 85:

तीर्थाङ्कुरविहीने च तीर्थसंग्रहहीनके । अनावृष्टिर्भवेल्लोके मूर्तिहोमं समाचरेत् ।।
महातीर्थदिने गौरि सद्यः सर्वं समाचरेत् ॥

*ibid.*, p. 134:

प्रतिसंवत्सरं मासं तिथिं निश्चित्य ऋक्षकम् । प्रारब्धेऽप्युत्सवे हीने तदन्यत्र कृते सति ।।
तद्ग्रामस्य क्षयः प्रोक्तस्तद्दोषशमनाय च । मूर्तिहोमं ततः कृत्वा स्नपनं कारयेत्प्रभोः ।।
पुनरुत्सवमारभ्य पूर्ववत्सर्वमाचरेत् । यथेष्टमासेऽप्यथ वा प्रारभेदुत्सवं ततः ॥........
अनुक्तं यद्भवेत्किंचिच्छान्तिहोमेन शाम्यति ॥

cf. *Kāmikāgama* II 30 347:

महातीर्थे विलुप्ते स्यात्स यागो निष्फलो द्विजाः । शान्तिं कृत्वा तदर्थं तु तीर्थकार्यं ततो नयेत् ॥

[14] A : चलितेऽथ विहीने तु ; C : बलिधानविहीने तु ; E : चलिधानविहीने तु ; F : बलिनैवेद्यहीने तु

[15] C : नीराञ्जन pour नीराजन [16] A : कार्यं pour कार्ये [17] C, F : आविशेत् pour आदिशेत्

[18] C : ततः स्वपर pour ततस्त्वपर [19] C : पूर्ववत्सर्वमाचरेत

[20] A : कर्तानुकं pour अत्रानुक्तं ; B : कत्र्नुगं ; C, F : कर्तानुक्तं

[21] cf. *Suprabhedāgama* I 55, 48b.63a:

अथाद्भुतानां शान्तिं तु वक्ष्ये दोषविनाशिनीम् । सर्वं विवर्णं संप्राप्ते प्रतिमारोदनेऽपि च ॥
ज्वरमारिसमुत्पन्ने रोगस्फोटादिसंभवे । नवप्रासादपतने चैत्यवृक्षस्य पातने ॥
एवमादिसमुत्पन्ने ग्रामादीनां च दोषकम् । तद्दोषशमनार्थं तु त्रिसप्ताहं तु शान्तिकम् ।।
भूमिकम्पे दिशां दाहे प्रतिसूर्यप्रदर्शने । दिवा नक्षत्र उत्पन्ने रात्राविन्द्रधनुस्थिते ।।
दुर्भिक्षं शत्रुवर्धनं राजराष्ट्रभयंकरः । मासपूर्णं तथा शान्तिं कुर्याद्दोषनिवृत्तये ॥
प्रासादमण्टपाद्येषु वल्मीकं यत्र दृश्यते । रक्तकन्यासमुत्पन्ने प्रासादे मधुसंश्रिते ॥
प्रविष्टे पिपीलिकोलूके प्रासादाभ्यन्तरे तथा । तत्प्रदेशं खनित्वा तु पूरयेच्छुद्धपांसुभिः ॥
पञ्चगव्येन संप्रोक्ष्य पुनः शान्तिं तु कारयेत् । शान्तिं संक्षेपतो वक्ष्ये शृणु त्वं गजानन ।
हविषं द्विगुणं कृत्वा दीपैः पुष्पैर्विशेषतः । शीतकुम्भं तु विधिना शिवस्योर्ध्वं निधापयेत् ॥
दिशाहोमं ततः कृत्वा मूर्तिहोमं विशेषतः । चतुर्दिक्षु चतुर्वेदैः पूर्वमध्यापनं तथा ॥
यथावत्स्नपनं नित्यं तथा वित्तानुसारतः । घृतं क्षीरं यथाशक्ति अभिषिञ्चेत्तु नित्यशः ॥
नालिकेरस्य सलिलैरभिषेकं समाचरेत् । तदन्ते रात्रिचूर्णं तु लिङ्गमुद्वर्त्य शोधयेत् ॥
प्रभूतहविषं नित्यं तदन्ते द्विगुणं स्मृतम् । एवं शान्तिस्तु तत्प्रोक्तं सर्वारिष्टविनाशनम् ॥
शान्तिरेवं कृतं यत्र धनधान्याभिवर्धनम् । अनुक्तानां तु सर्वेषां विदित्वा गुरुलाघवम् ॥
उक्तैरेवं प्रकारैस्तु प्रायश्चित्तानि कारयेत् । शान्तिहोमं गुरुः कुर्याच्छेषाणां तु यथोक्ततः ॥

Pour प्रतिमारोदने स्वेदे voir *Kāmika* II 31, 9b-11:

प्रतिमारोदने स्वेदे नृपस्य मृतिमादिशेत् । सर्वेषां प्राणिनां नाशं सद्यः कुर्यात्प्रतिक्रियाम् ॥
कृत्वा तु प्रतिमाशुद्धिं श्रेष्ठां शान्तिं समाचरेत् । शान्तिहोमं च विप्राणां भोजनं नित्यमाचरेत् ॥
तदन्ते चोत्सवं कुर्याद्यथावित्तं मुनीश्वराः ॥

cf. *Sūkṣmāgama* 60, 38b-41a:

प्रतिमारोदने चैव गोनाशः सस्यनाशनम् । तन्मण्डलाधिपो राजा ग्रामराष्ट्रं विनश्यति ॥

कृत्वा तु प्रतिमाशुद्धिं संप्रोक्षणमथाचरेत् । पक्षं पक्षद्वयं वापि समिद्भिः शान्तिहोमकम् ॥
स्नपनं कारयेन्नित्यं दिशाहोमसमन्वितम् । ब्राह्मणान्भोजयेन्नित्यं प्रदीनांश्चैव भोजयेत् ॥

Pour वल्मीकसंभवे voir *Aṃśumadāgama* 37, 442b-446:

अन्तर्मण्डलसालादौ मालिकामण्टपे ततः । परिवारालये चैव केवलं गोपुरालये ॥
आस्थानमण्टपे चास्मिन्गृहे वा नृपवेश्मनि । पचनालयेऽथ चुल्ल्यां वा वल्मीके समुपस्थिते ॥
परचक्राद्भयं राज्ये तद्ग्रामश्च विनश्यति । मूर्तिहोमं ततः कृत्वा नवकैरभिषेचयेत् ॥
गर्भार्धमण्टपे चैव महामण्टप एव च । वल्मीकं यदि संदृष्टं तद्राष्ट्रे कलहो भवेत् ॥

तद्दोषशमनार्थाय स्नपनं पञ्चविंशतिः ॥

cf. *Virāgama* 87, 45:

वल्मीके तु समुत्पन्ने प्रासादे मधुकृद्भवे । व्यपोह्य सकलं तत्र दिशाहोमं तु कारयेत् ॥

Pour उलूकादिप्रवेशे voir *Aṃśumad* 37, 602b-606a:

उलूकगृध्रकाकादिगर्भगेहप्रवेशने । तद्ग्रामवासिनां चैव भूपतीनां तु नाशनम् ॥
लिङ्गशुद्धिक्रमेणैव कुर्याद्द्रव्याभिषेचनम् । स्नपनं कारयित्वा तु शान्तिहोमं तु कारयेत् ।
कपोतैः पिङ्गलैश्चैव गर्भगेहप्रवेशने । तद्राष्ट्रनाशनं चैव भूपतीनां तु नाशनम् ॥
लिङ्गशुद्धिक्रमेणैव कुर्याद्द्रव्याभिषेचनम् । स्नपनं कारयित्वा तु मूर्तिहोमं तु कारयेत् ॥

cf. *Sūkṣmāgama* 60, 147-149a:

गोमायुः पिङ्गलो गृध्र उलूकश्चैव वायसः । आलयान्तः प्रविष्टश्चेन्नृपवेश्मान्तरेऽपि वा ॥
बालानां स्त्रीगणानां च नाशमेव समादिशेत् । शीतकुम्भं ततः कृत्वा शान्तिहोमं समाचरेत् ॥
ब्राह्मणान्भोजयित्वा तु तदन्ते स्नपनं कुरु ॥

Pour दिवा तारकदृष्टौ voir *Virāgama* 87, 46:

दिवा नक्षत्रदर्शे तु सहस्रकलशं ततः । स्नापयेद्देवदेवेशं महाहविर्निवेदयेत् ॥

Pour प्रतिसूर्यप्रदर्शने voir *Kāmika* II 31, 74b-75:

प्रतिसूर्योदये वापि प्रतिचन्द्रप्रदर्शने । जायते भूपतस्त्वन्यो यत्र राष्ट्रे भवेदिदम् ॥
नवाहाद्येकरात्रान्तं शान्तिमिष्टां समाचरेत् ॥

cf. *Sūkṣmāgama* 60, 101b-103:

आदित्योदयकाले तु प्रतिसूर्यस्य दर्शने । परचक्राद्भयं भूमौ ज्वरग्रस्ता नरास्तथा ॥
अश्वत्थसमिधा चैव शान्तिहोमं तु कारयेत् । तदन्ते स्नपनं कुर्यात्पूजयेत्तु विशेषतः ॥
प्रभूतहविषं दत्त्वा एवं सप्ताहमाचरेत् ॥

Pour अनावृष्टौ voir *Sūkṣma* 60, 128-129:

अनावृष्टिसमुत्पन्ने गोनाशः सस्यनाशनम् । समिधा खादिरेणैव शान्तिहोमं तु कारयेत् ॥
क्षीराभिषेचनं कृत्वा तदन्ते स्नपनं कुरु । कुर्यादेवं तु सप्ताहं शीतकुम्भं ततः कुरु ॥

Pour रात्राविन्द्रधनुर्दृष्टौ voir *Kāmika* II 31, 76-78a;

रात्राविन्द्रधनुर्दृष्टे परचक्राद्भयं भवेत् । शुक्रादिकग्रहं त्यक्त्वा दिवा तारकदर्शने ॥
अनावृष्टिर्ध्रुवं लोके ग्रहनक्षत्रपातने । वाहनानां भयं विद्यात्तदर्थं शान्तिमाचरेत् ॥
नवाहाद्येकरात्रान्तं विभवस्यानुरूपतः ॥

दिवा तारकदृष्टौ च प्रतिसूर्यप्रदर्शने । ज्वरे जनपदव्याधौ [1]त्वनावृष्टौ स्वकालके ॥ २९ ॥
रात्राविन्द्रधनुर्दृष्टौ [2]पाषाणपांसुवर्षके । घृतासृगादिवर्षे च वृक्षादन्यफलोद्भवे ॥ ३० ॥
वृक्षाज्जलादिस्रावे [3]च प्रासादेऽशनिपातने । [4]पुण्याहप्रोक्षणं कृत्वा [5]विशेषात्तु हरं यजेत् ॥ ३१ ॥
पञ्चब्रह्मशिवाङ्गैश्च गव्यैः कृत्वाभिषेचनम् । दिशाहोमस्तु कर्तव्य एकमासमतन्द्रितः ॥ ३२ ॥
मूर्तिहोमं ततः कृत्वा शान्तिहोममनन्तरम्[6] । [7]अत्रानुक्ताद्भुतानां तु शान्त्यर्थं मूर्तिहोमकः ॥ ३३ ॥
अनुक्ते [8]नित्यकार्ये तु स्नपनं शान्तिहोमकः ।

---

cf. *Virāgama* 87, 30:

पुच्छनक्षत्रसंदर्शे रात्राविन्द्रधनुर्युते । महामारीप्रवृत्ते तु स्नपनं तु सहस्रकम् ॥

cf. *Sūkṣmāgama* 63, 104-106:

रात्राविन्द्रधनुर्दृष्टावह्नि नक्षत्रदर्शने । ग्रहनक्षत्रपाते च अनावृष्टिर्न संशयः ॥
ज्वरग्रस्ता नराः सर्वे वाहनानां क्षयो भवेत् । पूजयित्वा शिवं तत्र महास्नपनमाचरेत् ॥
शान्तिहोमं ततः कुर्यादश्वत्थसमिधा ततः । एवं कृत्वा तु सप्ताहं तदन्ते चोत्सवं कुरु ॥

Pour घृतासृगादिवर्षे voir *Kāmika* II 31, 15-17a:

मधुक्षीराज्यवृष्ट्यादौ राष्ट्रक्षोभं समादिशेत् । मृत्तैलाश्मासृगाद्यैर्वा वर्षा चेत्तु तदेव हि ॥
तद्द्रव्यैः स्नपनं कुर्याद्भूमिकम्पोक्तमार्गतः । विशेषाच्छिवमभ्यर्च्य भूरिनैवेद्यसंयुतम् ॥
शैवान्संभोजयेत्पश्चादेवं सप्ताहमाचरेत् ॥

Pour वृक्षादन्यफलोद्भवे voir *Sūkṣmāgama* 60, 55b-59:

वृक्षे स्थानान्तरं प्राप्ते वृक्षे वान्यफलोद्भवे । तदन्यकुसुमोत्पन्ने रसगन्धाद्यसंभवे ॥
मर्त्यानां चैव सर्वेषां दुःखं तद्राष्ट्रवासिनाम् । तज्जातिवृक्षं संस्थाप्य पूर्वस्थाने विशेषतः ॥
शान्तिहोमं ततः कुर्यान्मयूरसमिधा सह । शिवं संपूज्य विधिवत्सप्ताहं स्नपनं कुरु ॥
क्षीराभिषेचनं कृत्वा वास्तुदेवं प्रपूजयेत् । तत्तत्फलानि सर्वाणि पुष्पैः सर्वैर्यजेच्छिवम् ॥
सर्वगन्धसमायुक्तं पूजयेत्तु विशेषतः ।

Pour प्रासादेऽशनिपातने voir *Kāmika* II 31, 52b-59:

लिङ्गे वेरे विमाने वा मण्टपे गोपुरादिषु । परिवारालये साले देवेशास्थानमण्टपे ॥
सभास्वशनिपाते च राज्ञो व्याधिं समादिशेत् । नवप्रकारे मार्गेण क्रमाच्छान्तिं समाचरेत् ॥
तत्र लिङ्गे च पीठे च बेरे वार्यं विधिर्भवेत् । दिशाहोमं ततः कृत्वा महास्नपनसंयुतम् ॥
अष्टोत्तरशतस्नानयुतं पञ्चामृतान्वितम् । पञ्चगव्यसमोपेतं मधुक्षीरघृतैरपि ॥
सहस्रादिचतुष्प्रान्तैः प्रस्थमानैर्महेश्वरम् । स्नापयित्वार्चयेद्विद्वान्भोजयेच्छान्तिहोमयुक् ॥
एवं कृते तु सप्ताहमन्ते चोत्सवमाचरेत् । प्रासादे सर्वथा भिन्ने प्राग्वदेव मुनीश्वराः ॥
अकस्मात्पतिते धाम्नि यदुक्तं तद्वदाचरेत् । प्रायश्चित्तं तथैव स्यान्मण्टपादौ शिवाग्रजाः ॥
शैवान्संभोजयेन्नित्यं शिवशास्त्रविशारदान् ॥

[22] A : लिङ्गं वा प्रतिमां वापि स्वेदं वा   [23] A : वल्मीकसदसति ; C : वल्मीकं सदसद्
[24] A et B omettent les *śloka* 28 et 29a   [25] F : रथे pour पीठे   [26] E, F : pour उलूक

[1] A : स्वनावृष्टौ   [2] B : पाषाणे pour पाषाण   [3] B : तु pour च   [4] A : पुण्याहं प्रोक्षणं
[5] C, F : विशेषं तु   [6] A : अनन्तरे pour अनन्तरम्   [7] A : मन्त्रानुक्तं हितानां तु
[8] A : नित्यकार्येषु

[मूर्तिहोमः[1]]

शिवालये चतुर्दिक्षु [2]चान्यतस्त्वविशेषतः ॥ ३४ ॥
कुण्डं वेदाश्रकं कृत्वा शोधनादींश्च कारयेत् । अग्न्याधानादिकं [3]कुर्यादग्निकार्योक्तमार्गतः ॥ ३५ ॥
[4]समिदाज्यचरुक्षीरं दधिमधुतिलं तथा । सर्षपं लाजसक्तू[5] च यवश्चैकादश स्मृताः ॥ ३६ ॥
हृदादीशानमन्त्रैस्तु प्रत्येकं तु शताहुतिः । स्विष्टमग्नेतिमन्त्रेण [6]पूर्णाहुतिमथाचरेत् ॥ ३७ ॥
[7]मूर्तिहोम इति ख्यातः सर्वदोषनिवारकः[8] ।

[शान्तिहोमः[9]]

आज्यापूपपयो[10]धानाश्चरुश्चैव तु पञ्च च ॥ ३८ ॥

---

[1] cf. *Yogajāgama* 17, 3-7:

" मूर्तिहोममथ शृणु ॥
प्रासादस्य चतुर्दिक्षु अन्तर्मण्टपके बुधः । चतुरश्रं स्थण्डिलं कृत्वा ईशाने वृत्तस्थण्डिलम् ॥
अग्निकार्यक्रमेणैव अग्निमुखं च कल्पयेत् । ईशाने सदाशिवं मन्त्रं पूर्वे तु ईशमन्त्रकम् ॥
दक्षिणे रुद्रमन्त्रं तु पश्चिमे विष्णुमन्त्रकम् । उत्तरे ब्रह्ममन्त्रं तु यथाशक्त्या तु होमयेत् ॥
हविर्निवेदयेत्पश्चात्स्नपनं कारयेच्छिवम् । द्विगुणं पूजयेत्तत्र महाहविर्निवेदयेत् ॥
मूर्तिहोममिति प्रोक्तम् "

cf. *Virāgama* 56, 9-16a:

" मूर्तिहोमं ततः शृणु ॥
शिवाग्रे मण्टपं कृत्वा स्थण्डिलं शालिभिः कुरु । मध्यमे स्थापयेत्कुम्भं ससूत्रं सापिधानकम् ॥
सवस्त्रं सहिरण्यं च सकूर्चं वारिपूरितम् । अभितः कलशानष्टौ अष्टमूर्तिं च विन्यसेत् ॥
आदित्यश्च तथा चाग्निः सोमो धरणिरेव च । आकाशश्चैव वायुश्च वरुणो यजमानकः ॥
पूर्वादीशानपर्यन्तं पूजयेद्गन्धपुष्पकैः । पञ्चब्रह्मेण संपूज्य गन्धपुष्पादिना ततः ॥
कलशाद्बाह्यतो विप्र अष्टदिक्ष्वष्ट होमयेत् । समिदाज्यचरुक्षीरं यवेन सह देशिकः ॥
एकैकाष्टशतं चैव ईशानादीनि होमयेत् । पश्चात्तु स्नापयेत्तत्र मूलबेरे विशेषतः ॥
हविर्निवेदयेत्पश्चाच्छिवस्य परमेष्ठिनः । मूर्तिहोममिति ख्यातम् "

[2] A : चैतन्यं च विशेषतः ; B : चैतन्यं तु विशेषतः [3] C, E, F : कुर्यात् pour कृत्वा
[4] A, F : समिदाज्यचरुं क्षीरं ; C : समिदाज्यं चरुक्षीरं [5] A : सक्थुं pour सक्तू
[6] C : पूर्णाहुतिं समाचरेत् [7] A : मूर्तिहोममिति ख्यातं [8] A : निराकरम् pour निवारकः

[9] cf. *Kāraṇāgama* I 144, 1-9:

अथातः संप्रवक्ष्यामि शान्तिहोमविधिक्रमम् । सर्वदोषविनाशार्थं सर्वसंपत्सुखावहम् ॥
भवनस्याग्रतः कुर्यान्मण्टपं चतुरश्रकम् । भूमिशुद्धिं पुरा कृत्वा गोमयेनोपलेपयेत् ॥
प्रोक्षयेच्छिवमन्त्रेण शालिपिष्टैर्विचित्रयेत् । तन्मध्ये स्थण्डिलं कुर्याच्छुद्धतोयेन पांसुना ॥
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् । पलाशसमिधं सद्योजातमन्त्रेण होमयेत् ॥
आज्यं हुत्वा तु वामेन चरुं वै घोरमन्त्रतः । पुरुषेण हुनेल्लाजं श्रीपत्रं शिखया हुनेत् ॥
सहस्रं वा तदर्धं वा तदर्धार्धमथापि वा । अष्टोत्तरशतं वापि प्रत्येकं जुहुयात्क्रमात् ॥

क्षुरिकाबीजमुख्येन [1]व्योमव्याप्याख्यमन्त्रत । [2]रुरो मूलेन मन्त्रेण प्रत्येकाष्टशताहुतिः ॥ ३९ ॥
बीजमुख्येन मन्त्रेण पूर्णाहुतिमथाचरेत् । [3]शान्तिहोम इति ख्यातः सर्वदोषप्रशान्तये ॥ ४० ॥

[दिशाहोमः[4]]

आलयस्य चतुर्दिक्षु पद्मं वा वृत्तकुण्डकम् । कृत्वा शिवाग्निं संकल्प्य समिदाज्यौदनैस्तथा ॥ ४१ ॥
लाज[5]सक्तुतिलैर्दर्भैः सर्षपैर्यववेणुभिः । गुलकन्दफलैश्चैव मधुक्षीरैस्त्रिपञ्चकैः ॥ ४२ ॥

---

द्रव्यान्ते व्याहृतिं हुत्वा यदस्येति ततो हुनेत् । जयादिरभ्याधानं च राष्ट्रभृच्च क्रमाद्धुनेत् ॥
पूर्णाहुतिं ततो दत्वा शिवमन्त्रेण देशिकः । सद्योजातेन मन्त्रेण पावकं तु विसर्जयेत् ॥
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः । शान्तिहोम इति ख्यातः सर्वदोषनिकृन्तनः ॥

cf. *Virāgama* 55, 2-10:

शान्तिहोममहं वक्ष्ये शृणुष्व कमलासन । पूर्वोक्तमण्टपं वापि अग्निशालामथापि वा ॥
अग्निकुण्डेषु होतव्यं स्थण्डिले वापि कारयेत् । चतुरश्रं वाथ वृत्तं वा अग्निकुण्डं तु कारयेत् ॥
त्रिमेखलासमायुक्तमथवा एकमेखलम् । एवं तत्रैव संकल्प्य दर्पणोदरवत्कृतम् ॥
शोधनं क्षालनं चैव शोषणं पाचनं तथा । मथित्वा तु गृहीत्वा तु हृदयेन प्रतिष्ठितम् ॥
काष्ठं तु शिरसा दद्याज्ज्वालयेदस्त्रमन्त्रतः । उपस्थानं शिरसा कृत्वा परिस्तरणमेव च ॥
दशदर्भैः समायुक्तं पूर्वे चैव परिस्तरेत् । दक्षिणे पश्चिमे चैव उत्तरे च परिस्तरेत् ॥
परिधीन्दक्षिणे न्यस्य पश्चिमे चोत्तरे न्यसेत् । पात्राणां साधनं चैव होमयेत्क्रमशस्ततः ॥
समिधा पञ्चब्रह्मेण आज्यं चैव षडङ्गकैः । अघोरेण चरुं हुत्वा जुहुयात्तु शताहुतीः ॥
द्रव्यं प्रति विशेषेण व्याहृतिं जुहुयात्ततः । शान्तिहोममिति ख्यातम्"

[10] A : दध्ना pour धाना:

[1] A : व्योमव्याप्यान्यमन्यकम् ; C, F : पूर्णाहुतिं समाचरेत्

[2] C et F omettent les demi-*śloka* 39b et 40a [3] A : शान्तिहोममिति ख्यातं

[4] cf. *Kāraṇāgama* I 144. 1-13a:

अथ वक्ष्ये विशेषेण दिशाहोमविधिक्रमम् । सर्वदोषहरं पुण्यं सर्वोपद्रवनाशनम् ॥
मन्दिरस्य चतुर्दिक्षु मण्टपं कारयेत्ततः । प्रोक्षयेत्पुरुषेणैव गोमयेनोपलेपयेत् ॥
पुण्याहं वाचयेत्तत्र पिष्टचूर्णैर्विचित्रयेत् । प्रोक्षयेच्छिवतोयेन स्थण्डिलं वालुकैः कुरु ॥
आदावन्ते च कर्तव्यमग्निकार्योक्तिमार्गतः । अश्वत्थं पूर्वदिग्भागे याम्ये चोदुम्बरं हुनेत् ॥
वटहोमं तु वारुण्यां ब्रह्मशाखां तु चोत्तरे । समिदाज्यचरूँल्लाजान्सर्षपं च यवं तिलम् ॥
वैणवं माषमुद्गं च श्रीपत्रं कदलीफलम् । समिधं सद्यमन्त्रेण वामेनाज्यं च होमयेत् ॥
अघोरेण चरुं हुत्वा लाजं हुत्वा नरेण तु । सर्षपं बहुरूपेण हृदयेन यवं हुनेत् ॥
तिलं हुत्वा तु शिरसा वैणवं शिखया हुनेत् । माषं कवचमन्त्रेण मुद्गं नेत्रेण होमयेत् ॥
श्रीपत्रमस्त्रमन्त्रेण मूलेन कदलीफलम् । शतमर्धं तदर्धं वा प्रत्येकं जुहुयात्क्रमात् ॥
द्रव्यान्ते व्याहृतिं हुत्वा यदस्येति ततो हुनेत् । जयादिरभ्याधानं च राष्ट्रभृच्च क्रमाद्धुनेत् ॥
पूर्णाहुतिं ततो दद्यात्सद्योजातेन देशिकः । प्रायश्चित्तादिकं सर्वं जुहुयाद्घोरमन्त्रतः ॥
तत्पुरुषेण मन्त्रेण पावकं तु विसर्जयेत् । आचार्यं पूजयेत्तत्रहेमाङ्गुलीयकैः ॥
दिशाहोम इति ख्यातः सर्वकृत्रिमनाशनः ।

पञ्चब्रह्मशिवाङ्गैश्च क्षुरिकामूलमन्त्रतः । त्रियम्बकेति मन्त्रेण गौरीगायत्रिमन्त्रतः ॥ ४३ ॥
द्रव्यं प्रतिशतं होमः पञ्चाशद्वा तदर्धकम् । कृत्वा मूलेन मन्त्रेण पूर्णाहुतिं समाचरेत् ॥ ४४ ॥
[1]दिशाहोम इति ख्यातो ह्यस्पृश्य[2]स्पृश्यदोषहा ॥ ४५ ॥

इति [3]श्रीमद्रौरवतन्त्रे [क्रियापादे]प्रायश्चित्तविधिर्नाम[4] चतुश्चत्वारिंशः पटलः[5]

---

cf. *Virāgama* 56, 1b-9a:

दिशाहोमं प्रवक्ष्यामि शृणुष्व चतुरानन । प्रासादस्य चतुर्दिक्षु दिशाहोमं तु कारयेत् ॥
अग्निमुखं च संकल्प्य पूर्वोक्तेन विधानतः । हस्तमात्रेण विप्रेन्द्र स्थण्डिलं कारयेत्ततः ॥
प्रासादस्य चतुर्दिक्षु पूर्वे तु चतुरश्रकम् । दक्षिणे चार्धचन्द्राभं वृत्तं चैव तु वारुणे ॥
पद्मं चैव तु सौम्यायां कुण्डं वा स्थण्डिलं तु वा । प्लक्षं चैव तु पूर्वायामुदुम्बरं च दक्षिणे ॥
अश्वत्थं वारुणे चैव वटं चैवोत्तरे दिशि । एवंविधैः समिद्भिश्च होमयेद्देशिकस्तथा ॥
सहस्रं वा तदर्धं वा अष्टोत्तरशतं तु वा । सद्यादीशानपर्यन्तं जुहुयात्तु शताहुतीः ॥
आज्येन चरुणा चैव जुहुयात्तु शताहुतीः । तण्डुलैस्तिलमिश्रैश्च ईशानेन शताहुतीः ॥
द्रव्यान्ते चैव द्रव्यान्ते व्याहृतिं जुहुयात्ततः । दिशाहोममिदं प्रोक्तम्''

[6] A : सक्थु pour सक्तु

[1] A : दिशाहोममिति ख्यातम्  [2] B : अस्पृश्य pour स्पृश्य

[3] A : श्री pour श्रीमद् ; B omet श्रीमद्रौरवतन्त्रे  [4] A, E et F omettent नाम

[5] A, B : पञ्चचत्वारिंशः पटलः ; C, E : पञ्चविंशतिः पटलः; F : पटलः पञ्चविंशतिः

## [पञ्चचत्वारिंशः पटलः]

### [पवित्रारोपणविधिः][1]

### [पवित्रारोपणकालः[2]]

अतः परं प्रवक्ष्यामि पवित्रस्य तु लक्षणम् । [3]ज्येष्ठमध्यकनिष्ठेन पवित्रस्य वरं दिनम् ॥ १ ॥
आषाढे श्रावणे मासि शुक्लपक्षे विधीयते । [4]प्रोष्ठमासेऽश्विने मासे [5]कृष्णपक्षे त्वथाचरेत् ॥ २ ॥
[6]अधिवासानन्तरं चैव पवित्रं तु समाचरेत् ।

### [यागमण्डपः[7]]

[8]पूर्ववन्मण्डपं कृत्वा कुण्डवेदीः[9] प्रकल्पयेत् ॥ ३ ॥

---

[1] Pour पवित्रारोपणविधि voir *Rauravāgama* vol I, p. 147 note 1 ; voir aussi *Acintyaviśva-sādākhya paṭala* 61 et *Santānasaṃhitā*, *paṭala* 70.

[2] cf. *Aṃśumadāgama* 14, 4b-12:

आषाढे श्रावणे मासे प्रोष्ठमासे तथैव च । अश्विनीकृत्तिकामासे पवित्रारोपणं कुरु ॥
पूर्वपक्षे चतुर्दश्यामाषाढे च पवित्रकम् । अन्येषु सर्वमासेषु पक्षयोः सितकृष्णयोः ॥
चतुर्दश्यामथाष्टम्यां पवित्रं विधिवत्कुरु । कृत्तिकादीपतः पश्चान्नाचरेत्तु पवित्रकम् ॥
मेषादिमिथुनार्केषु यदा दर्शद्वयं भवेत् । अब्दान्तरे यावदावश्यं मिथुनार्के हरिः स्वपेत् ॥
कर्कटाख्यादिके चापि यदा दर्शद्वयं भवेत् । शेते विष्णुः सदाषाढे भाद्रे च परिवर्तते ॥
कार्तिके स प्रबुध्येत शुक्लपक्षे हरेर्दिने । ते मैत्रश्रवणोपेते पावने परिकीर्तिते ॥......
आषाढपक्षे द्वादश्यां पौर्णमास्यामथापि वा । सुप्ते तदा तु कर्तव्यं पवित्रारोहणं शिवे ॥

cf. *Kāraṇāgama* I 122, 4b-5:

आषाढादिचतुर्मासाः शस्ता अन्यांस्तु वर्जयेत् । कर्तव्यं पक्षयोः शुक्लकृष्णयोरुभयोरपि ॥
चतुर्दश्यामथाष्टम्यामारोहेत्तु पवित्रकम् ॥

voir aussi *Rauravāgama* vol I, *kriyāpāda*, *paṭala* 25, *śloka* 4b-6a

[3] A : ज्येष्ठमासेन दत्तेन [4] A : प्रोष्ठमासे च मासे च [5] A : कृष्णपक्षमथाचरेत्

[6] A : अभिषेकानन्तरं चैव

[7] cf. *Kāraṇāgama* I 122, 22-28a:

निर्दिष्टदिवसात्पूर्वरात्रे कुर्वधिवासनम् । हर्म्याग्रे मण्टपं कुर्याद्दशहस्ताष्टहस्तकम् ॥
विकारस्तम्भसंयुक्तं चतुर्द्वारसमायुतम् । तन्मध्ये वेदिकां कुर्यात्त्रिभागैकभागतः ॥
विस्तारस्य चतुर्भागमुत्सेधं तु विधीयते । वेद्या मूले तु परितश्चोपवेदिं प्रकल्पयेत् ॥
युगाङ्गुलप्रविस्तारं तदर्धं चोच्छ्रयं भवेत् । चतुर्दिक्षु च कुण्डानि तुर्याश्रं पद्ममेव वा ॥
वृत्तकुण्डं तथैशान्ये कारयेद्विधिपूर्वकम् । तोरणैश्च ध्वजैश्चैव दर्भमालाङ्कुरैस्तथा ॥
मङ्गलाष्टकसंयुक्तं स्तम्भवेष्टनसंयुतम् । गोमयालेपनं कृत्वा शालिपिष्टेन चित्रयेत् ॥
प्रोक्षयेत्पञ्चगव्येन मण्टपं कुशवारिणा ॥

गोमयेन तु [1]शुद्धिं च [2]द्वारतोरणमङ्गलम् । [3]दर्भमाल्यैश्च पुष्पेण [4]तलस्यान्तरलंकृतम् ॥ ४ ॥
पुण्याहं वाचयित्वा तु [5]पञ्चगव्येन प्रोक्षयेत् । [6]वास्तुदेवांस्तु संपूज्य [7]दर्पणादि ततः परम् ॥ ५ ॥
अष्टमङ्गलद्वाराणां[8] [9]तत्तद्देवांस्तु पूजयेत् ।

[अङ्कुरार्पणम्[10]]

[11]प्रासादे मण्डपे चैव बलिपीठे स्नानमाचरेत् ॥ ६ ॥
स्नपनादिविशेषेण [12]देवदेवं च पूजयेत् । सन्तोष्य च नमस्कृत्य विज्ञाप्य च ततः परम् ॥ ७ ॥
यागगृहमुपागम्य चाङ्कुरानर्पयेद्बुधः ।

[पवित्रसूत्राणि[13]]

ब्रह्मक्षत्रियविट्[14]शूद्रसूत्रितैस्तन्तुकैर्युतम् ॥ ८ ।

---

cf. *Sūkṣmāgama* 11, 23-26:

प्रासादस्याग्रदेशे वा उत्तरे दक्षिणेऽपि वा । रुद्रहस्तं समारभ्य द्विद्विहस्तविवर्धनात् ॥
त्रयीविंशत्करान्तं च समं च चतुरश्रकम् । तत्त्रिभागैकभागेन वेदिकां संप्रकल्पयेत् ॥
हस्तमात्रं तदुत्सेधं दर्पणोदरसंनिभम् । वेदिकायां पुरो भागे कुण्डं कुर्यात्सलक्षणम् ॥
सर्वालंकारसंयुक्तं मण्टपं भूषयेत्सुधीः । गोमयालेपनं कृत्वा पुण्याहप्रोक्षणं कुरु ॥

voir aussi *Rauravāgama* vol. I, *kriyāpāda, paṭala* 25, *śloka* 32-35.

[8] B : पूर्वं तु pour पूर्ववत्   [9] A : वेदीं pour वेदी:

[1] A : शुद्धेन pour शुद्धिं च   [2] B : द्विद्वि pour द्वार   [3] A : दर्भमाला च
[4] A : न इत्येन्तरलंकृतम् ; B : नलस्थन्तरलंकृतम्   [5] B : पञ्चगव्यमथाचरेत्   [6] B : वास्तुदेवांश्च
[7] A : तर्पणानान्ततः परम्   [8] A : द्वारं च pour द्वाराणां   [9] A : तत्र देवांस्तु pour तत्तद्देवांस्तु

[10] cf. *Yogajāgama* 13, 11-12:

अङ्कुरानर्पयेत्तत्र पूर्वोक्तविधिना सह । द्वादशं षोडशं चैव पञ्चविंशतिमेव वा ॥
पञ्चदशाधिकं चैव अष्टोत्तरशतं तु वा । स्नपनं द्रव्यसहितं स्नापयेद्विधिपूर्वकम् ॥

cf. *Suprabhedāgama* II 7, 8-10:

कृत्वाङ्कुरार्पणं पूर्वं कर्तव्यमधिवासनम् । स्नपनं तु यथाशक्ति शिवाग्निं तु विशेषतः ॥
विशेषपूजनं कृत्वा नमस्कृत्वा विशेषतः । मया कृतानि दानानि द्रव्याणीह व्रतानि च ॥
अनया पूजया सर्वाः संपूर्णास्तु प्रसीदत । एवं विज्ञाप्य तं शम्भुं नमस्कृत्वा तु भक्तितः ॥

cf. *Sūkṣmāgama* 11, 29b-30:

पञ्चगव्यामृतेनैव स्नपनैरभिषेचयेत् । नैवेद्यं दापयेच्छम्भोर्धूपदीपादिकं ददेत् ।
देवदेवं नमस्कृत्वा ज्ञापयेत्तु पवित्रकम् ।

[11] A : प्रासादं मण्टपं चैव बलिपीठं   [12] A : देवदेवेन

[13] cf. *Aṃśumad* 43, 9b-10a:

दर्भजं वल्कलोत्थं वा क्षौमं कार्पासजं तु वा । यथासंस्कारमार्गेण संग्रहेद्देशिकोत्तमः ॥

[1]श्रेष्ठमध्याधमं चैव मूलागैः सर्वतन्तुकम् । [2]विक्रयं तु च वा क्षौमं वृक्षोत्थं चैव तद्बुधः ॥ ९ ॥
[3]तत्पूर्वोक्तैस्तु कृत्वा च यथाविभवसंग्रहम् । पश्चाद् धूमं च कृष्णं च स्पर्शनेन [4]प्रवेशितम् ॥ १० ॥
[5]संकुलं सूक्ष्मदोषं च प्रथमं [6]वल्मीकशुद्धितम् [7] । अस्त्रमन्त्रेण प्रक्षाल्य पुनर्भस्मनि[8] निक्षिपेत् ॥ ११ ॥
कुङ्कुमं चन्दनं चैव कर्पूरं चागरुं तथा । [9]सद्योजातेन प्रक्षाल्य वलयं हस्तमात्रकम् ॥ १२ ॥

[गन्धपवित्रम् [10]]

[11]त्रिगुणं त्रिगुणीकृत्य [12]क्लृप्तं कुर्याद्विधिक्रमम् । साष्टोत्तरशतं वापि ह्येकग्रन्थि तु रक्तकम् ॥ १३ ॥

---

cf. *Acintyaviśvasādākhya* 61, 9-11 et 17-18:

हैमजं राजतं ताम्रं कृतादिषु यथाक्रमम् । कलौ युगे च कार्पासतन्तुना च पवित्रकम् ॥
त्रिगुणं त्रिगुणीकुर्या द्विजकन्यादिकैः कृतम् । सूत्रं शुभं च धौतं च शोषितं तन्तु कल्पयेत् ॥
क्षौमपद्मजवल्कोत्थपट्टदर्भशणोद्भवम् । सूत्रं मौञ्ज्यादिसंभूतं योग्यं तत्र पवित्रके ॥
सूत्रशुद्धिरजातेन गुह्यकेन सुरञ्जितम् । अघोरेण तु शुद्धिर्वै वक्त्रमन्त्रेण पूजयेत् ॥
हरिचन्दनकर्पूरकस्तूरीकुङ्कुमैस्तथा । निशागैरिकराजैश्च रञ्जयेत्तु पवित्रकम् ॥

cf. *Suprabheda* II 7, 15-16a:

सूत्रं प्रागेव संग्राह्यं निर्मितं द्विजकन्यया । यथासंभवसूत्रं वा शोधयेत्तोयभस्मना ॥

voir aussi *Rauravāgama* vol I, *kriyāpāda, paṭala* 25, 6b-11a:

[14] A : शूद्रा कृत्वा तु pour शूद्रसूत्रितैः; ce demi *śloka* est cité dans le *Pavitrotsavavidhi* p. 123.

[1] B : श्रेष्ठमध्यापर्यंश्चैव [2] B : विक्रये तु [3] B : तत्पूर्वार्धकं [4] A : प्रवेशकम्

[5] B : सकलं [6] B : बल्याङ्क pour वल्मीक [7] A : शुद्धिदम् pour शुद्धितम्

[8] A : भस्मेन pour भस्मनि [9] Ce demi-*śloka* est cité dans le *Pavitrotsavavidhi*, p. 124.

[10] cf. *Suprabheda* II 7, 16b-24a:

तत्सूत्रं द्विगुणं प्रोक्तं तदेव द्विगुणं भवेत् । नवसंख्यं तु यत्सूत्रं पवित्रं कनकसिद्धिदम् ॥
वामाद्याः शक्तयस्तत्र नवसूत्राधिदेवताः । लिङ्गोत्सेधसमायामं प्रासादे तु पवित्रकम् ॥
हस्तमात्रसमायामं पवित्रमिह शोभनम् । सूत्रैर्विवर्धयेद्विद्वान्नवधा तु पवित्रकम् ॥
नवषोडशविंशद्भिरधमत्रयमेव च । पञ्चविंशच्च द्वात्रिंशत् षट्त्रिंशन्मध्यमत्रयम् ॥
पञ्चाशत्सप्ततिश्चैव नवतिश्चोत्तमत्रयम् । एतेषां तु यथाशक्त्या पवित्रं लक्षणान्वितम् ॥
प्रशान्तायेति मन्त्रेण ग्रन्थयित्वा पवित्रकम् । तस्य मध्ये दशग्रन्थिं बध्वा सूत्रेण देशिकः ॥
नवसप्ताष्टसूत्रैर्वा ग्रन्थिं कृत्वा विचक्षणः । इन्द्रादिलोकपालाश्च ग्रन्थीनामधिदेवताः ॥
आत्मार्थेऽप्येवमाख्यातं सूत्रसंग्रहणं क्रमात् । सकलानां तु बिम्बानां तदुत्सेधं प्रकीर्तितम् ॥

cf. *Sūkṣma* 11, 10-22a:

तन्तुना त्रिगुणीकृत्य दशवृद्धया ततः क्रमात् । शतमष्टोत्तरं चैव तन्तूनामुत्तमं भवेत् ॥
तन्तूनां द्वादशेनैव द्वादशादित्यदैवतम् । पञ्चाशत्तन्तुसंख्याता तन्तूनां मध्यमा मता ॥
तन्तूनां तिस्रिसंख्याता तु त्रिमूर्त्यधिदेवता । पञ्चविंशतिसंख्याता तन्तूनां कन्यसा स्मृता ॥
अथवान्यप्रकारेण तन्तुसंख्यां शृणु त्वथ । एकाद्येकैकवृद्धया तु तन्तूनां त्विष्टसंख्यया ॥
ग्रन्थयस्तन्तुसंख्याता यथेष्टग्रन्थिसंयुताः । एकद्वित्र्यङ्गुलं वापि ग्रन्थिमानं प्रकल्पयेत् ॥
ग्रन्थयस्त्विष्टदेशे वा कल्पयेत्कल्पवित्तमः । एभिर्लक्षणसंयुक्तं कुर्याद्गन्धपवित्रकम् ॥

पञ्चदशचतुर्ग्रन्थि श्वेतं रक्तं तु कृष्णकम् । सप्तविंशतिश्वेतं च ह्यष्टग्रन्थि तु [1]कृष्णकम् ॥ १४ ॥
[2]पञ्चाशत्तु संख्यया च कुङ्कुममिति कल्पयेत् । [3]इत्येतद्ग्रन्थिसूत्रेण कृत्वा [4]तु देशिकोत्तमः १५॥
उत्तमं हस्तमात्रेण नवसूत्रेण कल्पयेत् । [5]गन्धपवित्रकं कृत्वा लिङ्गपीठप्रमाणकम् ॥ १६ ॥
दशग्रन्थि नवग्रन्थि बन्धयित्वा तु तद्गुरुः[6]। लिङ्गनाहप्रमाणेन [7]तत्त्वत्रयं समुच्चरन् ॥ १७ ॥
एकाङ्गुलप्रमाणेन कृत्वा पवित्रं देशिकः । गौरीगणेशस्कन्दे च माहेश्वरे च चान्यके ॥ १८ ॥
अन्येषां परिवाराणां [8]सौरे नाहप्रमाणकम् ।

[पवित्राधिवासः[9]]

मण्डलस्थं [10]शिवं चैवाभ्यर्च्य हृन्मन्त्रमुच्चरन् ॥ १९ ॥

---

महापवित्रं वक्ष्यामि गङ्गागौर्यवतारकम् । पञ्चग्रन्थिसमायुक्तमामन्त्रणपवित्रकम् ॥
दूर्वाक्षतैः समभ्यर्च्य तस्मान्नित्यपवित्रकम् । गैरिकागरुकाश्मीरचन्दनै रक्तचन्दनैः ॥
हरिद्राकृष्णकतरै रञ्जयेद्ग्रन्थिमध्यमे । आत्मविद्याशिवेनैव त्रितयं लिङ्गमूर्धनि ॥
पवित्रं पिण्डिके त्वेवं परिवारामरादिषु । पवित्रमेकं कर्तव्यं महेशे तद्विशेषतः ॥
शिरोमाला उरोमाला बाहुमालोपवीतकम् । मणिबन्धाक्षमाला च सकलेऽप्येवमाचरेत् ॥
पवित्रमेकं सर्वेषामल्पतन्तु विधीयते । प्रासादं यागशालां च प्राकारं पचनालयम् ॥
त्रिगुणं त्रिगुणीकृत्य तन्तुना वेष्ट्य देशिकः ।

voir aussi *Rauravāgama*, vol I 25, 20b 23.

[11] ce demi-*śloka* est cité dans le *Pavitrotsavavidhi*, p. 124.

[12] A : कम्बलं pour क्लृप्तं ; *Pavitrotsavavidhi*: कलं

[1] B : रक्तकम्   [2] A : पञ्चादशं तु संख्या च   [3] A : इत्येते pour इत्येतद्   [4] B : वै pour तु

[5] B : गन्धपवित्रं कृत्वा तु   [6] A : तद्गुरुम्

[7] A : तत्त्वत्रयं समुच्चरेत् ; B : तत्त्वत्रयमुच्चरन्   [8] A : सौरनाद pour सौरे नाह

[9] cf. *Aṃśumad* 43, 51-58:

मण्डलेशं समभ्यर्च्य उपदेशस्य मार्गतः । कर्तरिं दन्तकाष्ठं च जिह्वाशोधनमेव वा ॥
सूचिकां श्रोत्रशोधं वा नखशोधनमेव वा । पूर्वभागे तु संस्थाप्य पुरुषमन्त्रमनुस्मरन् ॥
रजनीं पञ्चगव्यं च कौपीनं खण्डवस्त्रकम् । तैलमामलकं चैव पञ्चामृतं च दक्षिणे ॥
अघोरमन्त्रमुच्चार्य पूजयेत्तु विचक्षणः । ईक्षाहरं यूकहरं केशशोधनमञ्जनम् ॥
पुष्पमाभरणं चैव वस्त्रयज्ञोपवीतकम् । चन्दनं वारुणे चैव त्र्यक्षरं मन्त्रमुच्चरन् ॥
कमण्डलुं योगपट्टमोड्याणं भैक्षपात्रकम् । व्याघ्राजिनं वेदण्डं चामरं छत्रदर्पणम् ॥
पादुके भसितं चैव मात्रादण्डं च खड्गकम् । वामदेवमनुस्मृत्य सौम्ये तु स्थापयेद्बुधः ॥
एवं क्रमेण संस्थाप्य प्रोक्षयेच्छान्तिमन्त्रकैः । पश्चाद्धोमं प्रकर्तव्यमग्निकार्योक्तमार्गतः ॥

cf. *Kāraṇa* I 122, 28b-40:

स्थण्डिलं कारयेद्विद्वान्दशद्रोणैश्च शालिभिः । तण्डुलैः समलंकृत्य तिलदर्भैः सुपुष्पकैः ॥
तन्मध्ये पद्ममालिख्य साष्टपत्रं सकर्णिकम् । शिवकुम्भं न्यसेन्मध्ये अक्लेशमवर्धनीः ॥

दण्ड [1]तदक्षमाल्यं च कौपीनं [2]भैक्षपात्रकम् । दक्षपार्श्वे [3]तु संस्थाप्य तत्पात्रेण [4]तिरोहितम् ॥ २० ॥
[5]अन्येषु चापि पात्रेषु [6]गोरोचनकुशोदकम् । पाटीरकुङ्कुमं चैव नागवल्लीं च दर्पणम् ॥ २१ ॥
[7]शुद्धपात्रे तु निक्षिप्य ह्युत्तरेण तु सस्थिते । पादुकां योगवेष्टं[8] च [9]शुद्धपात्रे तु निक्षिपेत् ॥ २२ ॥
ईशकोणे स्थिते चैव तत्पात्रेण [10]तिरोहितम् । पवित्रं [11]दन्तशोधं च कर्णिकां [12]नखशोधनम् ॥ २३ ॥
शुद्धपात्रे तु[13] निक्षिप्य पूर्वदेशे [14]स्थिते बुधः । [15]पवित्रे गन्धमालिप्य शुद्धपात्रे तु[16] निक्षिपेत् ॥ २४ ॥
अस्त्रमन्त्रेण संप्रोक्ष्य संहितामभिमन्त्रयेत्[17] । कुण्डस्य[18] पश्चिमे भागे [19]मण्डलेषु तु निक्षिपेत् ॥ २५ ॥
दर्भासनोपरि न्यस्य पवित्रं देशिको बुधः । [20]पवित्ररक्षां विज्ञाप्य [21]यागेश्वरं तु दैवकम् ॥ २६ ॥
[22]मृगीचर्मणश्छादेन तन्तुनाभेन वेष्टयेत् ।

[होमः[23]]

कुण्डसंस्कारपूर्वेण [24]त्वग्निसंधानपूर्वकम् ॥ २७ ॥

---

कुम्भाग्रे मण्डलं चैव विधिवत्पूजयेद्गुरुः । गन्धादिकं समभ्यर्च्य पात्रं वेद्युपरि न्यसेत् ॥
शातकुम्भमयं वाथ ताम्रं वा कांस्यमेव वा । तन्मध्ये विन्यसेत्सूत्रं नववस्त्रेण वेष्टयेत् ॥
अभ्यर्च्य गन्धपुष्पाद्यैर्हृदयेनैव देशिकः । दर्शयेत्सुरभीमुद्रां तालमुद्रां तथैव च ॥
ईशाने तु पवित्रं च तैलामलकं पूर्वके । दण्डाक्षमालाशय्यादिभिक्षापात्राणि दक्षिणे ॥
शलाकां केशशोधं च कर्त्रिकां नखशोधनीम् । उत्तरे विन्यसेद्धीमान्पश्चिमे तु विशेषतः ॥
ताम्बूलं योगपट्टं च चामरं गजमालिकाम् । ईशानादीनि सद्यान्तं तत्तन्मन्त्रेण मन्त्रयेत् ॥
पादुकां दर्पणं वस्त्रं पञ्चमृत्पञ्चगव्यकैः । छत्रं मृगाजिनं चैव दन्तकाष्ठं तथैव च ॥
इन्द्रादीशानपर्यन्तं वेद्यां क्रमेण विन्यसेत् । नैर्ऋते त्वञ्जनं न्यस्त्वा भस्म चैशानगोचरे ॥
न्यसेद्दिक्पालबीजैश्च प्रत्येकं वस्त्रवेष्टितम् ॥ गन्धपुष्पादिभिः पूज्य हृदयेनैव देशिकः ॥
न्यस्त्वा शुद्धाख्यमेवं तु मूलेनैव शतं हुनेत् ॥

voir aussi *Rauravāgama* vol I, 25, 36-42 et 59-63.

10 A : शिवे चैव वलयं

[1] B : तु यक्षमालां च [2] A : भिक्ष pour भैक्ष [3] A : न pour तु [4] A : तिरोधकम्
[5] A : अन्येषाणां च पात्राणां [6] A : गोरोचके शोधनम् [7] A : शुद्धपात्रेण
[8] A : वेष्टा pour वेष्टं [9] B : शुद्धि pour शुद्ध [10] A : तिरोधकम् [11] A : दन्तशोधेन
[12] A : घन pour नख [13] A : पात्रेण pour पात्रे तु [14] A : स्थितं pour स्थिते
[15] A : पवित्रं गन्धमाश्रित्य [16] A : पात्रेण pour पात्रे तु [17] A : मन्त्रकम् pour मन्त्रयेत्
[18] A : कुण्डेन [19] A : मण्डलेन [20] A : पवित्रं रक्षविज्ञापे [21] A : यागेश्वरेण
[22] A : मृगीचर्मेमनश्चादेन तन्तुनासेन वेष्टयते
[23] cf. *Kāmika* II 18, 39-44:

कुण्डसंस्कारमारभ्य पूर्णान्तं होममाचरेत् । समिदाज्यचरूँल्लाजांस्तिलसस्येन्द्रसंयुतान् ॥
पलाशादुम्बराश्वत्थवटाः प्रागादिदिक्षु च । शमीखदिरश्रीवृक्षप्लक्षाः स्युर्वह्निकोणतः ॥
प्रधाने तु पलाशः स्याच्छतं सार्धं शिवस्य तु । शिवाद्दशांशतोऽङ्गानां कुण्डे प्राधानिके भवेत् ॥
तदर्धमन्यकुण्डेषु नरादिषु हृदादिषु । स्थालीपाकं हविः कृत्वा तद्वदा विभजेत्त्रिधा ॥

अग्निहृदयमध्ये तु [1]नित्येन पूजयेच्छिवम् । [2]पूजावैकल्यतार्थं च [3]पवित्रं तु निवेदयेत् ॥ २८ ॥
पवित्रेण निवेदार्थं मूलमन्त्रशताहुतिः । सर्वसाक्षिशिवं चात्र [4]पवित्रोपरि पूजयेत् ॥ २९ ॥
पञ्चब्रह्मषडङ्गानां[5] प्रत्येकमेकविंशति । [6]अतिरक्ताख्यजिह्वायां हुत्वा तु तिलसर्षपम् ॥ ३० ॥
लाजमाज्यं च माषं च कनकायां तु [7]होमयेत् ।

[गन्धपवित्रारोपणम्[8]]

पश्चात्तु पञ्चब्रह्मेण[9] षडङ्गेनाभिमन्त्रयेत् ॥ ३१ ॥

---

शिवांशमग्निभागं च मध्वाज्याभ्यां तु मिश्रितम् । कुर्यादात्मीयभागं तु केवलेन घृतेन च ॥
हृदा देवांशमभ्यर्च्य तमादाय शिवान्तिकम् । गत्वा संपूज्य देवेशम्''

*ibid.*, 55b-57a:

संवत्सरात्मकं सर्वकृत्यसाक्षिणमव्ययम् । गोप्तारं संश्रयं कर्मफलप्राप्तिनिबन्धनम् ॥
अनुस्मरञ्शिवं ब्रह्मषडङ्गशिवमन्त्रतः । त्रिःसप्तकृत्वः संपातं तथैव जुहुयात्ततः ॥

voir aussi *Rauravāgama* vol I, 25, 43-45.

24 A : अग्निजातेन पूर्वकम्

1 B : नित्यं वै pour नित्येन   2 A : प्रजा pour पूजा   3 A : पवित्रेण तु वेदयेत्

4 B : पवित्रं परिपूजयेत्   5 A : षडङ्गानि pour षडङ्गानां   6 A : अतिरिक्तेन जिह्वेन कृत्वा

7 A : होमकम्

8 cf. *Acintyaviśvasādākhya* 61, 10b-103a:

यागधामवृषस्थानप्रासादानलसंश्रयम् । कारकौघं च सूत्रेण वर्मणा परिवेष्टयेत् ॥
पूजितायाथ सूर्याय दत्त्वा गन्धपवित्रकम् । समाचम्य कृतन्यासः प्रणिपत्य कृतार्घ्यकः ॥
दद्याद्गन्धपवित्रं तु नन्यादिद्वारपालके । प्रविश्य वास्तुनाथाय ब्रह्मणेऽपि ददेत्ततः ॥
सास्त्रेभ्यो लोकपालेभ्यः पवित्राणि स्वनामभिः । शिवकुम्भादिवर्धन्यां दद्याल्लम्बोदराय च ॥
अभ्यर्च्य विघ्नराजं च देशिकाङ्घ्रिपदाम्बुजम् । पूजयेद्गन्धपुष्पेण दत्त्वान्नं च पवित्रके ॥
पञ्चाशदोषधीलिप्तं मानोन्मानविवर्जितम् । पुष्पदूर्वादिसंयुक्तं धूपितं च विशेषतः ॥
एकग्रन्थ्यल्पसूत्राढ्यं चतुर्वर्गफलोदयम् । मन्त्राभिमन्त्रितं तन्तु विधायाञ्जलिमध्यतः ॥
आमन्त्रणपदं ह्येतद्देशिकोऽपि यजेद्यथा । ओं समस्तविधिविच्छिद्रपूरणेश मखं प्रति ॥
प्रभो वामन्त्रयामि त्वां त्वदिच्छा व्याप्तिकारिका । तत्सिद्धिमनुजानीहि जातं च चिदचित्पदे ॥
सर्वथा सर्वदा शम्भो नमस्तेऽस्तु प्रसीद मे । आमन्त्रितोऽसि देवेश सह देव्या गणेश्वरैः ॥
मन्त्रैस्त्रैलोक्यपालैश्च सहितः परिवारकैः । निवेदयाम्यहं तुभ्यं प्रभाते तु पवित्रकम् ॥
नियमं च करिष्यामि परमेश तवाज्ञया । आमन्त्र्य देवमित्येवं रेचकेनामृतीकृतम् ॥
मूलं शिवान्तमुच्चार्य तच्छिवाय निवेदयेत् । जपैः स्तोत्रैः प्रणामैश्च तोषयेत्परमेश्वरम् ॥

cf. *Kāmika* II 18, 57b-67:

दत्त्वा गन्धपवित्रं च भानोराचम्य देशिकः । यागधामवृषस्थानप्रासादानलसंश्रयान् ॥
कारकान्पञ्चसूत्रेण वर्मणा परिवेष्टयेत् । दद्याद्गन्धपवित्रं तु नन्यादिभ्यः प्रदक्षिणम् ॥
प्रविश्य पूर्ववच्चान्तर्ब्रह्मणे च पवित्रकम् । तदेतानि पवित्राणि भगवन्संस्कृतानि हि ॥
अर्पयामि घटस्थाय शिवायाध्येषयेदिति । समर्प्य रक्षणायास्मै तेभ्यो गन्धपवित्रकम् ॥
आदौ वा कुम्भवर्धन्योर्दत्त्वा यायाच्छिवान्तिकम् । स्वमूर्तौ गुरुपङ्क्तौ च दद्याद्गन्धपवित्रकम् ॥

[1]दिग्बन्धं चास्त्रमन्त्रेण कवचेनावकुण्ठनम् [2]। मूलेन चामृतीकृत्या प्यर्घ्येणैव च योजयेत् ॥३२॥
शिवकुम्भं दक्षपार्श्वे [3]दर्भासने तु विवेशयेत । पश्चाद्गन्धपवित्रं तु गहीत्वा देशिको बुधः ॥ ३३ ॥
प्रथमं [4]मण्डपं पूज्य यथामार्गेण पूर्ववत् । [5]ऊर्ध्वकायस्तु पूजेत तन्मन्त्राणि समुच्चरन् ॥ ३४ ॥
[6]पवित्राणि तु दत्वा चाप्यर्घ्येणैव च योजयेत् । बालमग्निं तु संचिन्त्य पवित्रेण तु योजयेत् ॥ ३५ ॥
[7]कुण्डे देवं च संपूज्य दत्त्वैव तु पवित्रकम् । कुण्डे त्वन्यांश्च देवांश्च [8]पवित्रेण च योजयेत् ॥ ३६ ॥
पश्चाद्धूपं तु संपूज्य धातारमधिदैवतम् । पवित्रेण तु संयोज्याप्यर्घ्यं मूर्ध्नि [9]सुयोजयेत् ॥ ३७ ॥
[10]दीपं चैव तु संपूज्य [11]ह्यर्कं चैवाधिदैवतम् । [12]दीपदेवे तु संयोज्य [13]पञ्चब्रह्मेण पूजयेत् ॥ ३८ ॥

[घण्टायां गन्धपवित्रारोपणम् [14]]

दिग्बन्धनावकुण्ठेन पश्चाद्घण्टां [15]समुच्चरन् । मणिर्वासुकिर्दैवत्यः सुषिरं सोमदैवतम् ॥ ३९ ॥

---

एकग्रन्थिसमायुक्तमल्पतन्तुविनिर्मितम् । धूपितं पुष्पसंयुक्तं समादायाञ्जलौ गुरुः ॥
आमन्त्रणपवित्रं तत्सुधामुद्राप्ररोचितम् । शिवायारोप्य तन्मूर्ध्नि रेचकेन शिवाणुना ॥
आमन्त्रणात्मकं मन्त्रं पठेद्देवेशसन्निधौ । समस्तविधिविच्छिद्रपूरणेश मखं प्रति ॥
प्रभो वामन्त्रयामि त्वां त्वदिच्छा व्याप्तिकारिका । तत्सिद्धिमनुजानीहि यजतश्चिदचित्पदे ॥
सर्वथा सर्वदा शम्भो नमस्तेऽस्तु प्रसीद मे । जप्त्वा निवेद्य देवाय स्तुत्वा नत्वा क्षमापयेत् ॥
दद्यादाशाधिपानां तु तदस्त्राणां पवित्रकम् ॥
voir aussi *Rauravāgama* vol I, 25, 46-58.

[9] La forme grammaticale correcte est पञ्चब्रह्मणा ; mais le mètre ne serait pas respecté.

[1] A : दिग्बन्धनास्त्रमन्त्रेण [2] A : गुण्ठनम् pour कुण्ठनम् [3] A : दर्भासनं तु [4] A : मण्डपे
[5] A : ऊर्ध्वकायेन [6] A : पवित्रेण तु दत्तेन [7] A : कुण्डदेवेन pour कुण्डे देवं च
[8] A : पवित्रेणाक्रमेण च [9] A : सुयोजकम् [10] A : दीपेन तु च [11] A : अर्केण चाधिदैवतम्
[12] A : दीपदीपेन [13] voir p. 190 note 9
[14] cf. *Sakalāgamasaṃgraha* 768b-769:
घण्टायां वासु [वास्तु?] दैवत्यं जिह्वायां तु सरस्वती । अनन्तो वलये प्रोक्तो नाराचो मन्त्रनादकः ॥
शूलं त्रिमूर्तिदैवत्यं वृत्ताकारं नभो भवेत् ॥.........
*ibid.*, 771b-772a:
घण्टाशब्देन गच्छन्ति दानवाश्च भयंकराः । आगच्छन्ति च सुप्रीताः शिवेन सह देवताः ॥
cf. *Āgamavacanagrantha*, p. 56:
मणीनां वासु[वास्तु?] दैवत्यं जिह्वायां तु सरस्वती । दण्डं चैवाग्निदैवत्यं नाद ईश्वर एव च ॥
सुषिरं सोमदैवत्यं वलये वासुकिस्तथा । नालाग्रमिन्दुदैवत्यं दण्डे चैव तु भास्करः ॥
ब्रह्मा विष्णुश्च रुद्रश्च त्रिशूलस्याधिदेवताः । राक्षसाश्चासुराश्चापि पिशाचा ब्रह्मराक्षसाः ॥
गच्छन्ति घण्टाघोषेण देवसान्निध्यमेव च ॥
cf. *Kāraṇa* I 30, 188-189a:
पूजाकाले तु घण्टायास्ताडनात्किं प्रयोजनम् । यक्षराक्षसपैशाचदानवा ब्रह्मराक्षसाः ॥
देवसान्निध्यपूजार्थं गच्छन्ति मणिशब्दतः ॥

[15] A : समुच्चयेत्

जिह्वा सरस्वती चैव [1]नालमिन्द्राधिदैवतम्। [2]शूलं त्रिमूर्तिदैवत्यं [3]तत्तन्मन्त्रेण पूजयेत् ॥ ४० ॥
महाघण्टानिनादेन [4]राक्षसा असुरास्तथा। ब्रह्मराक्षसपैशाचपूर्वाश्च [5]तेन चिन्तिताः ॥ ४१ ॥
दूरं गच्छन्ति नादेन यान्ति देवाः सुसन्निधिम् । पवित्रेण तु निक्षिप्य चार्घ्येण तु सुयोजयेत् ॥ ४२ ॥

[भस्मपात्रे स्रुक्स्रुवयोश्च गन्धपवित्रारोपणम् ]

भस्मालयं तु संपूज्य शक्तिमन्त्रं समुच्चरन् । भस्मालये तु शक्तीनां तन्तु ब्रह्माधिदैवतम् [6] ॥ ४३ ॥
बन्धेन रज्जुहस्तेन भस्म तत्तच्छिवेन तु। गन्धपवित्रं संपूज्य [7]पश्चात्स्रुक्स्रुवपूजनम् ॥ ४४ ॥
[8]अधः कुम्भे तु रुद्रेण चेश्वरेण तु मध्यमम् । अग्रे सदाशिवं [9]चैव तत्त्वत्रयं तु पूजयेत् ॥ ४५ ॥
पवित्रेण तु संयोज्य चार्घ्यं मूर्ध्नि [10]सुयोजयेत् ।

[सौरादिगुर्वन्तं गन्धपवित्रयोजनम् ]

पश्चात्सौरादिदेवानां[11] पवित्राणि निवेदयेत् ॥ ४६ ॥
[12]पादौ प्रक्षाल्य चाचम्य भस्म [13]निक्षिप्य तद्गुरुः। सकलीकरणं कृत्वा समादायार्घ्यपात्रकम् ॥ ४७ ॥
द्वारतोरणदेवांस्तु[14] पवित्रेण तु योजयेत्। अष्टमङ्गलदेवांस्तु[15] पूर्वादीशान्तमर्चयेत् ॥ ४८ ॥
पवित्रेण तु युक्तेन [16]लोकपालांस्तु योजयेत्। [17]पवित्रेण तु योगस्तु वास्तुदेवे तथा भवेत् ॥ ४९ ॥
अङ्गुलत्रयमुच्छ्रित्य पवित्रे बलं योजयेत् । पश्चिमेन तु लक्ष्मीं च सरस्वतीं तु चोत्तरे ॥ ५० ॥
[18]पवित्राणां तु बन्धेन चार्घ्यं मूर्ध्नि तु योजयेत् । ब्रह्मविष्णू च संपूज्य पवित्रं तत्प्रकीर्तितम् ॥ ५१ ॥
[19]दशायुधानि संपूज्य पवित्रेण तु योजयेत् । कुम्भवर्धनीं संपूज्य पवित्रं गन्धयुक्तकम् ॥ ५२ ॥
[20]मण्डलस्थं तु देवं तु सद्यादिना तु पूजयेत् । पवित्रेण तु संयोज्य [21]चार्च्यं लिङ्गं तु पूजयेत ॥ ५३ ॥
अग्निकोणादि चेशान्तं [22]पवित्रमर्च्यं लिङ्गके। [23]पाद्याचमनार्घ्याणि दत्वा तु देशिको बुधः॥ ५४ ॥
[24]देशिकान् सप्त संपूज्य पवित्रेण तु योजयेत् ।

[देवदेवे गन्धपवित्रारोपणम् ]

[25]देवदेवं नमस्कृत्य पाद्यमाचमनार्घ्यकम् ॥ ५५ ॥

[1] A : नालमिन्द्रस्य दैवतम् [2] A : त्रिशूलं pour शूलं [3] A : तन्मन्त्रेण तु
[4] A : राक्षसानसुरं तथा [5] A : तन्तु pour तेन [6] A : ब्रह्म तु दैवतम्
[7] A : पश्चात्स्रुक्स्रुवौ पूजयेत् [8] A : अधोकुम्भेन [9] A : पूज्य pour चैव
[10] A : सुयोजकम् [11] A : देवेन pour देवानां
[12] Les śloka 47a, 48b, 49a, 50, 51, 52a est 54b sont citès dans le *Pavitrotsavavidhi*, pp. 157-158. [13] A : निक्षिप्यते गुरुः
[14] A : देवेन pour देवांस्तु [15] A : देवेन pour देवांस्तु [16] B : लोकपालान् सुयोजयेत्
[17] A : पवित्रेणाहं तु योगेन वास्तुदेवान् तथा भवेत् [18] A : पवित्रेण
[19] A : दशायुधेन [20] A : मण्डलस्थेन देवेन सद्यादीनां तु [21] A : अर्धलिङ्गे तु pour चार्च्यं लिङ्गं तु
[22] A : पवित्रमर्धलिङ्गकम् [23] A : पाद्याचमनमर्घ्येण [24] A : सप्तदेशिकं संपूज्य [25] A : देवं देवीं

[1]दद्यादर्घ्यं तथा मूर्ध्नि चास्ये त्वाचमनं तथा । [2]पादयोः पाद्यमित्युक्तं तत्तन्मन्त्रं समुच्चरन् ॥ ५६ ॥
अष्टत्रिंशत्कलान्यासमष्टपुष्पेण योजयेत् । गन्धपवित्रं संगृह्य शिवमन्त्रं समुच्चरन् ॥ ५७ ॥
देवेशं सहदेव्यर्कगणेशलोकपालकम् । सहितं परिवारेण [3]निवेदयामि तुभ्यकम् ॥ ५८ ॥
प्रभाते तु पवित्रं च तत्त्वमन्त्रं समुच्चरन् । नियमं च करिष्यामि परमेश तवाज्ञया ॥ ५९ ॥
गन्धपवित्रं बिल्वं च दूर्वाक्षतैस्तु युक्तकम् । देवदेवे तु दत्त्वा तु तत्त्वत्रयेण चिन्तितम् ॥ ६० ॥
[4]आत्मतत्त्वाच्छिवान्तं च गृहस्थानां विधीयते । शिवतत्त्वादि ह्यात्मान्तं मुक्तिकामः प्रकल्पयेत् ॥ ६१ ॥
[5]तत्तत्सर्वाणि त्वर्घ्येण दत्त्वा तु देशिको बुधः । धूपं दीपं च दत्त्वा तु पायसान्नं निवेदयेत् ॥ ६२ ॥
पाद्यमाचमनं दत्त्वा चोपचारं निवेदयेत् ।

[अग्निस्थशिवं प्रति क्रिया[6]]

कुण्डदेशे प्रदेशे चाग्नौ पवित्रं निवेदयेत् ॥ ६३ ॥

---

[1] A : दद्यादर्घ्यं तु मूर्ध्नेन [2] A : पाद्यं पादयमित्युक्तं [3] A : निवेदमात्मतुभ्यकम्

[4] Le *Rauravāgama* suit l'ordre des mantra d'*ātmatattva* à *Śivatattva* pour les *bhuktikāma* et de *Śivatattva* à *ātmatattva* pour les *muktikāma* Les autres āgama et les manuels suivent l'ordre inverse, de *Śivatattva* à *ātmatattva* pour les *bhuktikāma* et d'*ātmatattva* à *Śivatattva* pour les *muktikāma*; cf. *Kāmikāgama* II 18, 91b-94:

पूरयेति द्विरुच्चार्य मखव्रतपदं ततः । नियमेश्वरायेति पदं स्वाहेत्यन्तं समुच्चरन् ॥
आत्मतत्त्वाधिपतये शिवाय नम इत्यपि । तत्त्वविद्याशिवाख्यं च मुक्तिकामः पदं पठेत् ॥
पवित्रकत्रयं मूर्ध्नि दद्याद्भोगी शिवादिकम् । शिवाणमादावुच्चार्य शिवविद्यात्मकं पुनः ॥
सर्वतत्त्वेश्वरायेति दद्याद्ब्रह्मावतारकम् ॥

cf. *Acintyaviśvasādākhya* 61, 128b-137a:

आत्मतत्त्वे प्रकृत्यन्ते पालिते पद्मयोनिना । उच्चार्य मूलमाद्यन्तं पवित्रेणार्चयेच्छिवम् ॥
विद्यातत्त्वे च विद्यान्ते पालिते विष्णुकारणे । ईश्वरान्तं समुच्चार्य पवित्रमधिरोपयेत् ॥
शिवान्ते शिवतत्त्वेऽथ रुद्रकारणपालिते । शिवान्तं मूलमुच्चार्य पवित्रमधिरोपयेत् ॥
सर्वकारणपाल्येषु सर्वतत्त्वेषु सुव्रत । मूलं लया[न्तमुच्चार्य]दद्याद्ब्रह्मावतारकम् ॥
मुमुक्षूणां पवित्रं तु चात्मविद्याशिवैः क्रमात् । बुभुक्षूणां च संप्रोक्तं शिवविद्यात्मभिः क्रमात् ॥
स्वाहान्तं वा नमोऽन्तं वा मन्त्रैरेवमुदीरयेत् । देशिकः सर्वदेवानां पवित्रं कुर्यात्[कारयेत्?] पुनः ॥
ओं हां आत्मतत्त्वाधिपतये शिवाय स्वाहा । ओं हां विद्यातत्त्वाधिपतये शिवाय स्वाहा ॥
ओं हां शिवतत्त्वाधिपतये शिवाय स्वाहा । एवं क्रमेण देवाय पवित्रं कारयेत्पुनः ॥
ओं हां सर्वतत्त्वाधिपतये शिवाय स्वाहा । अनेनैव तु मन्त्रेण कुर्याद्ब्रह्मावतारकम् ॥

[5] Le ms. A omet les *śloka* 62 et 63.

[6] cf. *Kāmikāgama* II 18, 68-73a:

दत्त्वा बहिस्थदेवाय तृतीयांशं चरोर्गुरुः । आमन्त्रणपवित्रं च दद्यात्तस्यैव पूर्ववत् ॥
इन्द्राय प्रतिगृह्णेति नत्यन्तं प्रणवादिकम् । अन्येषां चैव मूर्तानां क्रमाद्दद्याद्बहिर्बलिम् ॥
वायव्यां क्षेत्रपालाय दत्त्वाचम्य बलिं पुनः । प्रायश्चित्तं ततो हुत्वा पूर्णां दत्त्वा ततो गुरुः ॥

पश्चान्मूलं तु संचिन्त्य शतं चार्धं तु होमयेत्[1] । अन्तर्बलिं च कृत्वा च बहिर्बलिं निवेदयेत् ॥ ६४ ॥
[2]तत्तन्मन्त्रेण संचिन्त्य चरुं पवित्रमिश्रकम् । पूर्णाहुतिं ततो हुत्वा[3] [4]त्वग्नौ पूर्वं तु मिश्रकम् ॥ ६५ ॥
पादौ प्रक्षाल्य चाचम्य पश्चाद्भस्म तु निक्षिपेत् । [5]मण्डलस्थे तु देवे तु नाडीसन्धानयोजनम्[6] ॥ ६६ ॥

[पवित्ररक्षा[7]]

पश्चाच्छुद्धे तु पात्रे चाप्यादाय मन्त्रशुद्धितम् । सूत्रेणाहतबन्धेन तत्तत्तन्तुमितं बुधः ॥ ६७ ॥
षडङ्गेन तु संपूज्य तन्मन्त्रेणाभिमन्त्रयेत्[8] । कुम्भदक्षिणभागे तु[9] [10]पवित्राणां तु संस्थितिः ॥ ६८ ॥

---

भूर्भुवःस्वःपदैर्व्यस्तैः समस्तैरपि होमयेत् । अग्नये त्वथ सोमाय ताभ्यां स्विष्टकृदाहुतिम् ॥
स्वाहान्तैर्दीर्घपूर्वैस्तु हुत्वा मन्त्रैर्यथोदितैः । मण्डलस्थशिवेनैव पावकस्थं शिवं ततः ॥
नाडीसंधानमार्गेण योजयेद्भावयेच्छिवम् ॥

cf. *Acintyaviśvasādākhya* 61, 103b-109:
तृतीयांशं चरोर्हुत्वा विददीत शिवाग्नये । पूर्वादिदिग्वासिभ्यो दिगीशमातृगणरुद्रक्षेत्रपालेभ्यः स्वाहेति ॥
आसां नाम्ना विभेदेन सर्वदिक्षु बहिर्बलिम् ॥
अथ दद्यात्तु वायव्यां क्षेत्रपालबलिं गुरुः । आचम्य विधिवच्छिद्रपूरकं होममाचरेत् ॥
पूर्णाहुतिं व्याहृतिं च हुत्वा रुन्धीत पावकम् ।
तत्र ओं हां अग्नये स्वाहा । ओं हां सोमाय स्वाहा ॥ ओं हां अग्नीषोमाभ्यां स्वाहा । ओं हां अग्नये स्विष्टकृते स्वाहा ॥
कुर्यादाहुतिभिश्चैवं चतुर्भिर्नन्दिकेश्वर । देवं तत्स्थण्डिलेऽभ्यर्च्य वह्नौ तु तदनन्तरम् ॥
नाडीसंधानविधिना योजयेन्नन्दिकेश्वर ॥

[1] A : होमकम् pour होमयेत्   [2] B : तन्मन्त्रेण तु चिन्त्येन   [3] A : च कृत्वा च pour ततो हुत्वा
[4] A : अग्निपूर्वं pour त्वग्नौ पूर्वं
[5] A : मण्डलस्थेन देवेन   [6] A : योजकम् pour योजनम्
[7] cf. *Acintyaviśvasādākhya* 61, 110-113:
अस्त्रमन्त्रेण संशुद्धिं शुद्धपात्रेण कङ्कणम् । हृदयाख्येन मन्त्रेण पवित्राण्यधिरोपयेत् ॥
षडङ्गेन कलामन्त्रैर्ब्रह्माङ्गैर्वा यथाविधि । अङ्गमन्त्रैर्विशेषेण जपं कुर्यात्समाहितः ॥
भक्तियुक्तः शिवं नत्वा रक्षणार्थं समर्चयेत् । पुष्पधूपादिभिश्चैव संपूज्य विधिना तदा ॥
सिद्धान्तपुस्तकं चार्च्य विधिना नन्दिकेश्वर । भक्त्या पदान्तिकं गत्वा गुरोर्दद्यात्पवित्रकम् ॥

cf. *Kriyākramadyotikā*, p. 81:
पूते वंशादिसंभवे पात्रे अस्त्रकवचहृदयानि विन्यस्य, तस्मिन्मूलेन पवित्राण्यारोप्य, पुनः हृदयकवचास्त्राणि विन्यस्य, अन्येन पिधाय, सूत्रैरावेष्ट्य, संपूज्य, संहितामन्त्रैः संपूज्य, कलशायतनस्थे रक्षायै समर्प्य, विज्ञाप्य, लोकपालांश्च यागरक्षणे सावधानांश्च संभाव्य, लिङ्गस्थमपि शिवं संपूज्यानुज्ञाप्य, सिद्धान्तपुस्तके गुरौ च पवित्रं दत्त्वा,

cf. *Iśānaśivagurudevapaddhati*, p 213:
सिद्धान्तपुस्तकाधिष्ठिते विद्यापीठे शिववद् विद्यानामभिरभ्यर्चिते दशाक्षरीवागीश्वर्या प्रणवहृदयमूलविद्यातत्त्वात्मने नमोऽन्तं गन्धपवित्रमारोप्यारात्रिकमुत्तार्यास्त्रवर्मसंपुटे पात्रे महापवित्राणि संस्थाप्य, मन्त्रसंहितयाभिमन्त्र्यास्त्रवर्मभ्यां संरक्ष्याभिपूज्य, कुम्भस्थाय रक्षां विज्ञाप्य,

[8] A : मन्त्रकम pour मन्त्रयेत्   [9] A : भागेन pour भागे तु   [10] A : पवित्रेण pour पवित्राणां

पवित्राणां तु रक्षार्थं विज्ञाप्य कुम्भदेवकम्[1] । [2]स्रुक्स्रुचौ धूपदीपौ च [3]पवित्रं पुष्पगन्धकौ ॥ ६९ ॥
अन्यद्रव्याणि चादाय पश्चिमेन तु [4]संस्थितिः । पश्चाद्गुरुं नमस्कृत्य तत्पत्न्यै तु नमस्कृतिः ॥ ७० ॥

[पञ्चगव्यचर्वाद्यासेवनम्[5]]

१ यागालयाद्बहिर्गत्वा चाचम्य भस्म निक्षिपेत् । सकलीकरणं कृत्वा त्रिःकृत्वा [6]मण्डलं गुरुः ॥ ७१ ॥
[7]दर्भासनं तु संकल्प्य दक्षिणेन तु मण्डले । [8]तदुपरि स्थितो वापि [9]पूर्वं चाभिमुखो गुरुः ॥ ७२ ॥
उत्तरे मण्डले शिष्यं पूर्वमुखं स्थितं परम् । पञ्चगव्यं तु [10]पीत्वा चाप्याचामयेत्तु शिष्यकम् ॥ ७३ ॥
[11]स्थितोत्तरमुखं शिष्यं पूर्वमेव तु कल्पयेत । चरुभागाष्टकवलं कृत्वा [12]पिण्डं तु भुक्तिवत् ॥ ७४ ॥
पश्चादास्यस्य शुद्धिं तु ह्याचाम्यं च ततः परम् । दन्तशुद्धिं च कृत्वा चाप्यास्य [13]शुद्धिमतः परम् ॥ ७५
भस्मपात्रं तु निक्षिप्य सकलीकरणं ततः । घोरमन्त्रं शतं जप्त्वा [14]नमस्कृत्य तु देशिकः ॥ ७६ ॥
प्रायश्चित्तास्त्रमन्त्रेण [15]शतमाज्येन होमयेत् । नृत्तगीतेन संतोष्य कृत्वा पूर्णाहुतिं बुधः ॥ ७७ ॥

---

[1] B : देशिक pour देवकम्  [2] Le demi-*śloka* 69b est cité dans le *Pavitrotsavavidhi* p. 163.
[3] A : पवित्रे पुष्पेण गन्धकम्  [4] A : संस्थितम्
[5] cf. *Kāmikāgama* II 18, 44-45a:
निःसृत्य यागधाम्नस्तु समाचम्य गुरुः शुचिः । पञ्चगव्यं चरुं दन्तधावनं च क्रमाद्भजेत् ॥
आचम्य पुनरप्यन्ते स्वपेच्छिवमनुस्मरन् ॥
cf. *Acintyaviśvasādākhya* 61, 114-117a:
बहिर्निर्गत्य चाचम्य गोमये मण्डलत्रये । पञ्चगव्यं चरुं दन्तधावनं च विनिक्षिपेत् ॥
विधिनाचम्य सान्निध्यकृतसंगीतको गुरुः । स्वपेदनुस्मरन्नीशं बुभुक्षुर्दर्भसंस्तरे ॥
मुमुक्षुरप्यनेनैव प्रकारेणाभिसंविशेत् । केवलं भस्मशय्यायां सोपवासः समाहितः ॥
पवित्रस्याधिवासोऽयं विधिरत्र समाहितः ॥
cf. *Kriyādīpikā* p. 125:
बहिर्निःसृत्याचम्य गृहस्थो गोमयानुलिप्तपश्चिमपूर्वकृतमण्डलत्रयेषु पूर्वास्यः पञ्चगव्यं चरुं दन्तधावनं च क्रमादासेव्याचामेत् । "गव्यमात्रं यतेरुक्तं न प्राश्यं चरुभोजनम् ।" इति वचनाद्विरक्तो मण्डलत्रयेषूत्तरास्यश्चरुं विना क्रमात्पञ्चगव्यप्राशनं दन्तधावनं शुद्धाचमनं च कुर्यात् । गृहस्थः शुचिः शय्यां दर्भैरास्तीर्य प्राकारत्रयेण तिलादिना रक्षां कृत्वा शिवमनुस्मरन्सुप्यात् । विरक्तस्तु एवं भस्मशय्यायां सुप्यात् ॥
[6] A : मण्डले कुरु  [7] Les *śloka* 72 et 74a sont cités dans le *Pavitrotsavavidhi* pp. 166-167.
[8] A : ततोपरि pour तदुपरि  [9] A : पूर्वे चापि मुखो गुरुः  [10] A : पीत्वा च आचम्येत तु शिष्यकम्
[11] A : स्थितोत्तरमुखे शिष्ये  [12] A : पिण्डेन भुक्तवत्  [13] A : शुद्धिरतः pour शुद्धिमतः
[14] A : नमस्कारं तु  [15] A : आज्यशतं तु होमकम्

पश्चात्तु मूलमन्त्रेण शतं जप्त्वा तु [1]तद्बुधः । पश्चात्तु भुक्तिकामे तु दर्भासनं तु मिश्रकम् ॥ ७८ ॥
दर्भासनं तु संकल्प्य [2]मुक्तिकामे त्वमिश्रकम् । मिश्रकेण तु तत्काले [3]शिवपादे तु दण्डवत् ॥ ७९ ॥

[अधिवासानन्तरेतिकर्तव्यता[4]]

इत्येतमधिवासं च कृत्वा तु देशिको बुधः । [5]प्रातः स्नात्वा शुचिर्भूत्वा प्रासादं तु [6]प्रविश्य च ॥ ८० ॥
पादौ प्रक्षाल्य चाचम्य सकलीकरणं ततः[7] । पूर्ववद्भूतशुद्धिं च स्थानशुद्धिं च पूर्ववत् ॥ ८१ ॥
अन्तर्यागं च कृत्वाथ[8] विशेषार्घ्यं [9]तु कल्पयेत् । द्वारदेवांश्च संपूज्य गर्भगेहं [10]प्रविश्य च ॥ ८२ ॥
वास्तुदेवांश्च संपूज्य देशिकान्सप्त पूजयेत् । [11]गन्धपवित्रं संगृह्य शुद्धपात्रे तु निक्षिपेत् ॥ ८३ ॥
विधाय मण्डलं मध्ये पवित्रं स्थापयेत्ततः । देवदेवेशपूजार्थं लोकपालांस्तु[12] पूजयेत् ॥ ८४ ॥
दशायुधानि संपूज्य [13]चार्घ्येणैव तु योजयेत् । [14]धूपदीपं तु दत्त्वा च यागरक्षां समुच्चरन् ॥ ८५ ॥

---

[1] B : देशिकः pour तद्बुधः [2] B : भुक्तिकाम्यं तु मिश्रकम् [3] A : शिवो पादेन दण्डवत्

[4] cf. *Aṃśumadāgama* 14, 65b-84a:

"प्रभाते स्नानमाचरेत् ॥
सकलीकरणं कृत्वा सामान्यार्घ्यकरो गुरुः । संप्रोक्ष्य बहुरूपेण पवित्राण्यवरोपयेत् ॥
तानीशमण्डले पात्रे चण्डेशार्थं प्रगृह्य च । अष्टपुष्पिकया देवं समभ्यर्च्य हृदाणुभिः ॥
यागशालां प्रविश्याथ सकलीकरणं कुरु[चरेत्?] । सामान्यार्घ्यं च संकल्प्य प्रोक्षयेदस्त्रमन्त्रतः ॥
भान्वादिगुरुपर्यन्तमर्चयेद्देशिकोत्तमः । कुण्डमस्त्रेण संप्रोक्ष्य हृदयेन समर्चयेत् ॥
प्रज्वाल्य वक्त्रमन्त्रेण अघोरेण शतं हुनेत् । अस्त्रेणैव शतं हुत्वा स्पृष्ट्वा गौर्यवतारकम् ॥
मूलेनाज्येन जुहुयात्संपातं पञ्चविंशतिम् । सर्वद्रव्यं समाहृत्य स्विष्टकृद्धोममाचरेत् ॥
नैवेद्यं दापयेच्छम्भोर्धूपदीपादिकं ददेत् । भान्वादिगुरुपर्यन्तं दद्याद्गौर्यवतारकम् ॥
ब्रह्मकुम्भे च वर्धन्यां दद्याद्गौर्यवतारकम् । पञ्चगव्यामृतं कल्प्य स्नपनं कल्प्य देशिकः ॥
विघ्नेश्वरं समभ्यर्च्य द्वारदेवान्समर्चयेत् । गर्भगेहं प्रविश्याथ लिङ्गं पीठस्थलेन च ॥
क्षालनं चास्त्रमन्त्रेण शिवमन्त्रैः समर्चयेत् । पूर्वभागे न्यसेद्द्रव्यमानीयान्तः प्रविश्य च ॥
कर्त्रिकां हृदयेनैव दद्यात्तेनैव देशिकः । शिरसा दन्तकाष्ठं च शिखया दन्तशोधनम् ॥
सूचिकां कवचेनैव नेत्रेण श्रोत्रशोधनम् । नखशोधनमस्त्रेण दद्यात्तेनैव देशिकः ॥
दक्षिणे स्थापितं द्रव्यमानीयान्तः प्रविश्य च । कौपीनादिरजन्यन्तं सद्यादीशान्तकं ददेत् ॥
व्योमव्यापि समुच्चार्य पञ्चगव्यामृतेन च । संस्नाप्य देवदेवेशं स्नपनैरभिषेचयेत् ॥
वस्त्रखण्डेन संमृज्य लिङ्गं पीठं विशेषतः । पश्चिमे स्थापितं द्रव्यं संगृह्यान्तः प्रविश्य च ।
ईक्षाहरं हृदा चैव यूकाहरमस्त्रमन्त्रतः । दद्यादघोरमन्त्रेण केशशोधनमञ्जनम् ॥
युवं वस्त्रेति मन्त्रेण वस्त्रेणाच्छादयेत्प्रभुम् । यज्ञोपवीतं हृदयात्पुष्पमाभरणं तथा ॥
चन्दनेन समालिप्य गन्धद्वारेतिमन्त्रतः । नैवेद्यं दापयेच्छम्भोर्धूपदीपादिकं ददेत् ॥
पश्चान्मण्टपमाविश्य हृदयात्षोडशं हुनेत् ॥

[5] Les *śloka* 80b à 83b sont cités dans le *Pavitrotsavavidhi* p. 171.

[6] A : प्रवेशयेत् [7] A : अतः परम् pour ततः [8] A : च pour अथ

[9] A : च pour तु [10] B : प्रवेशयेत् pour प्रविश्य च [11] A : गन्धं पवित्रं संग्राह्य

[12] B : च pour तु [13] B : चार्घ्येण तु सुयोजयेत् [14] B : धूपं दीपं तु

[1]स्नानवेदीं तु संकल्प्य पश्चात्स्नपनं कल्पयेत् । मण्डले पूर्वदेशे तु[2] धान्यासनं त कल्पयेत् ॥ ८६ ॥
पञ्चविंशत्पदं कल्प्य धान्यासने तु मध्यमे । [3]कोष्ठकानि च संकल्प्य मध्यकोष्ठे तु कुम्भकम् ॥ ८७ ॥
कुम्भपूर्वे तु तत्कोष्ठे वर्धनीं तु सुपूजयेत् । लोकपालांस्तु[4] संपूज्य पूर्वादीशान्तकोष्ठके ॥ ८८ ॥
[5]ब्रह्मविष्णू विपूज्याथ पूजयेत दशायुधम् । कलामन्त्रैस्तु संपूज्य तत्तन्मन्त्रेण पूजयेत् ॥ ८९ ॥
[6]शक्त्यादिशक्तिपर्यन्तं कुम्भमध्ये तु तं शिवम्[7] । धूपदीपं च दत्त्वा चाप्यर्घ्यं मूर्ध्नि सुयोजयेत् ॥९०
वर्धनीं पाशुपतास्त्रेण [8]पूर्वतस्तु सुपूजयेत् । [9]तत्तस्थाने तु पूर्वं तु[10] पञ्चगव्यं तु कल्पयेत् ॥ ९१ ॥
पञ्चामृतं च कल्पेन पूर्वमेव सुदेशिकः । [11]तत्स्थ नात्तु विवर्ज्याथ समादायार्घ्यपात्रकम् ॥ ९२ ॥
शिवस्थानं[12] समाश्रित्य पञ्चगव्येन स्नापयेत् । [13]त्रिफलं पञ्चामृतं चैव स्नापयेन्नालिकेरकम् ॥ ९३ ॥
[14]स्नानं तु गन्धतोयेन स्नानं सहस्रधारया । [15]स्नानवेदीं विसर्ज्याथ पद्मासने तु संस्थितम् ॥ ९४ ॥
शक्त्यादिशक्तिपर्यन्तं नित्यं सपूजयेच्छिवम् । [16]आसनं मूर्तिमूलं च कृत्वा त्रयं तथा बुधः ॥ ९५ ॥
विद्यादेहं तु [17]संकल्प्य [18]नेत्रमुद्रां तु दर्शयेत् । मूलेनावाहनं चैव [19]शिवयोगस्य चिन्तनम् ॥ ९६ ॥
स्थापनं संनिधानं च संनिरोधनयोजनम् । दिग्बन्धनावकुण्ठने धेनुमुद्रां तु दर्शयेत् ॥ ९७ ॥
पाद्याचमार्घ्यं दत्त्वा तु पञ्चवक्त्राय तद्बुधः । पुष्पदूर्वाक्षतैः पूज्य मूलमन्त्रं तु [20]चिन्तयन् ॥ ९८ ॥
पवित्रं [21]परिमृज्याथ [22]पञ्चस्नानं तु कल्पयेत[23]। [24]तोयं वस्त्रेण संवर्ज्य नववस्त्रेण योजयेत् ॥ ९९ ॥
उपवीतं च [25]लेपनं पट्टं [26]मकुटकुण्डलम् । हारकेयूरमालाश्च त्वर्घ्यं मूर्ध्नि [27]सुयोजयेत् ॥ १०० ॥
[28]गन्धपवित्रमादाय त्वस्त्रमन्त्रेण योजयेत । यागेश्वरे तु देवेशे कुम्भवर्धनिमण्डले[29] ॥ १०१ ॥

---

[1] Le demi-*śloka* est cité dans le *Pavitrotsavavidhi* p. 172.

[2] A : पूर्वदेशेन  [3] A : कोष्ठे केन तु  [4] B : च pour तु

[5] A : ब्रह्मा विष्णुश्च पूज्येन दशायुधानां पूजयेत्

[6] B : शक्रादि pour शक्त्यादि  [7] B : योजयेत् pour तं शिवम्  [8] A : पूर्वेण तु

[9] Le *ślokas* 91b, 92a, 94, 95, 96, 98b, 99, 100 101, et 102a sont cités dans le *Pavitrotsavavidhi* pp. 172 à 178.

[10] A : ततः स्थाने तु पूर्वेण  [11] A : तत्स्थानं तु  [12] A : स्नानं pour स्थानं

[13] B : पञ्चामृतं च त्रिफलं  [14] A : स्नानं गन्धं तु तोयेन सहस्रधारेण स्नानकम्

[15] B : स्नानवेदीविसर्ज्येन  [16] A : आसनं मूर्तिकल्पेन

[17] A : कल्पेन pour संकल्प्य  [18] B : नेत्रमन्त्रं च विन्यसेत्  [19] A : शिवभोगं तु pour शिवयोगस्य

[20] B : चिन्तयेत्  [21] A : परिमार्जेत  [22] A : पञ्चस्नानं

[23] cf. *Diptāgama* 58, 76:
संध्यापूजनकाले तु सूत्रमादाय बुद्धिमान् । पवित्रं पञ्चगव्येन प्रोक्षयेत्पञ्चमन्त्रकैः ॥

[24] B : पवित्रं तोयवर्ज्येन  [25] B : लेपेन  [26] B : मकुटमण्डलम्  [27] A : सुयोजकम्

[28] A : गन्धं पवित्रमादाय  [29] La forme grammaticale correcte est वर्धनीमण्डले.

इत्येतत्सर्वदेवानामष्टपुष्पं तु [1]विन्यसेत् । पञ्चब्रह्म षडङ्गं च मूलमन्त्रं समुच्चरन् ॥ १०२ ॥
सप्तसंख्याहुतिं हुत्वा चाज्यं [2]वै तण्डुलं तिलम् । प्रायश्चित्तास्त्रमन्त्रेण [3]चाष्टशतं तु [4]होमयेत् ॥ १०३ ॥
मूलेन वौषडन्तेन पूर्णाहुतिं तु [5]होमयेत् । पश्चात्पवित्रं पूर्वं तु वृषप्रासादवह्निके ॥ १०४ ॥
धूपदीपेन दत्त्वा च [6]पश्चाद्वह्नौ सपुष्पकम् । धूपदीपं तु दत्त्वा च समिद्धृतं च सर्षपम् ॥ १०५ ॥
तिलं चरुं च माषाढ्यं लाजमाषतिलं तथा । अष्टाविंशतिसंख्याकं स्वाहान्तं शिवमन्त्रकम् ॥ १०६ ॥
[7]अग्नौ होमं तु कृत्वा च पूर्णाहुतिं तु योजयेत् । अन्तर्बहिर्बलिं दत्त्वा तन्मन्त्रेण तु देशिकः ॥ १०७ ॥
पायसान्नं यथाशक्ति मूलेनाज्याहुतिं बुधः । ब्रह्ममन्त्रं समुच्चार्य [8]वक्त्रैकीकरणार्थकम्[9] ॥ १०८ ॥
द्वादशान्ते तु होमं च [10]पश्चाद्व्याहृतिहोमकम् । ब्रह्मादिकारणत्यागे [11]पञ्चग्रन्थि तु [12]चिन्तयन् ॥१०९

[पूर्णाहुतिः]

हृदयं चैव जिह्वां च भ्रूमध्यं ब्रह्मरन्ध्रकम् । सुषुम्नायास्तु मार्गेण बिन्दुस्थानं तु योजयेत् ॥ ११० ॥
अमृतं तु विचिन्त्याथ मूलेन वौषडन्तकम् । पञ्चविंशतिमात्रेण कुम्भकेन चतुष्पथम्[13] ॥ १११ ॥
तत्तत्स्थानं तु संगृह्य शङ्खसन्निभमुद्रया । आज्येन चामृतीकृत्य पूर्णाहुतिं तु देशिकः ॥ ११२ ॥
[14]पश्चादाचमनं दत्त्वा काम्यं विज्ञापयेद्गुरुः । पुष्पाञ्जलिं नमस्कृत्य [15]स्तोत्रेणैव तु योजयेत् ॥ ११३ ॥
[16]होमरक्षां च निक्षिप्य कुण्डदेशात्तु वर्जयेत् ।

---

[1] B : वर्जयेत्  [2] A : तु pour वै  [3] B : अष्टादशं तु  [4] A : होमकम्
[5] A : होमकम  [6] A : पश्चाद्वह्नौष्टपुष्पकम्
[7] A : अमोहेन तु  [8] A : वक्त्रेण करणार्थकम् ; B : वक्त्रेण कारणार्थकम्
[9] cf. *Kriyākramadyotikāvyākhyā prabhā*, p. 166 :
"कथ्यते च मुखैकता ।
सद्यादिपञ्चवक्त्रेभ्यो घृतधारां क्षिपेत्तया । अग्निकोणमथारभ्य वायुकोणान्तनीतया ॥
निर्ऋतेः कोणमारभ्य रुद्रकोणान्तनीतया । कुर्वीत वदनैकत्वमविच्छिन्नाज्यधारया ॥
[10] B : पश्चाद्वै व्याहृतिं हुनेत्
[11] cf. *Kāraṇāgama* I 30, 218b-220a:
पञ्चग्रन्थि तथाच्छेद्य प्रारभेदात्मयोजनम् । जानुग्रन्थिस्तु प्रथमं नाभिग्रन्थिर्द्वितीयकम् ॥
गलग्रन्थिस्तृतीयं तु ललाटे तु चतुर्थकम् । पञ्चमं तु शिरोग्रन्थि च्छेदयेत्तु हृदा पुरा ॥
[12] A : चिन्तितम्
[13] cf. *Jñānaratnāvali* (citée dans le *Kriyākramadyotikāvyākhyā prabhā*, p. 157) :
हृदा चतुष्पथं कार्यं सोमेश्वाग्रकुशद्वयात् ।
[14] Le *śloka* 113 est cité dans le *Pavitrotsavavidhi*, p. 174
[15] A : स्तोत्राणां तु  [16] A : होमरक्षणे

[पवित्रारोपणम्[1]]

[2]परिचारं च स्नानेन शुद्धवस्त्रेण योजयेत् ॥ ११४ ॥
यज्ञोपवीतं पवित्रं चोष्णीषं चोत्तरीयकम् । इत्येतैरभ्यलंकृत्य [3]तन्मूर्ध्नि चास्त्रशुद्धितः ॥ ११५ ॥
मूर्ध्नि पवित्रपात्रेण विन्यसेदर्घ्यपात्रकम् । परिचारकोऽस्त्रमुच्चार्य सर्वमङ्गलं घोषयेत् ॥ ११६ ॥
[4]प्रासादं प्रदक्षिणं कृत्वा पञ्चपञ्चप्रदक्षिणम् । द्वारादिवास्तुनाथान्तं[5] पवित्रेण तु योजयेत् ॥ ११७ ॥
पश्चाद्गर्भगृहं विश्य [6]त्वाचार्यः स्वात्मपूजनम् । [7]आत्मपवित्रं दत्त्वा चाप्युपचारं निवेदयेत् ॥ ११८ ॥
[8]पश्चाच्छिवाय चार्घ्येण दत्त्वा वै चाष्टपुष्पकम् । [9]पवित्राणि तु संगृह्य गन्धपुष्पेण पूजयेत् ॥ ११९ ॥
[10]दूर्वाक्षतैस्तु युक्तेन धूपदीपं निवेदयेत् । पवित्रं [11]शिवाय दद्यात्तु तत्त्वत्रयं समुच्चरन् ॥ १२० ॥
[12]शिवतत्त्वात्मतत्त्वान्तमुच्चरेन्मुक्तिकामकः । आत्मतत्त्वाच्छिवान्तं च भुक्तिकामे विधीयते ॥ १२१ ॥
[13]सर्वकार्ये तु शुद्ध्यर्थं गङ्गावतारं योजयेत् । [14]इत्थं पवित्रं दत्त्वा च कालव्याप्ते तु बुद्धिमान् ॥ १२२ ॥
आत्मतत्त्वादि मायान्तं सर्वतत्त्वं तु चिन्तयन् । [15]शिवात्मने निवेद्यैव गङ्गावतारं बुद्धिमान् ॥ १२३ ॥

---

[1] cf. *Aṃśumadāgama* 14, 84b-95a:

परिचारकमाहूय सोष्णीषं सोत्तरीयकम् । पवित्रं वाहयित्वा तु सर्वालंकारसंयुतम् ॥
हर्म्यप्रदक्षिणं कृत्वा द्वारदेशं प्रविश्य च । द्वारदेवान्समभ्यर्च्य दद्याद्गौर्यवतारकम् ॥
गर्भगेहं प्रविश्याथ पूजयेत्परमेश्वरम् । आत्मविद्यादिभिस्तत्त्वैर्दद्याद्गौर्यवतारकम् ॥
शङ्खघोषसमायुक्तं सर्वालंकारसंयुतम् । महेशप्रतिमादीनां परिवारामरादिषु ॥
प्राकारे बलिपीठे च दद्याद्गङ्गावतारकम् । प्रभूतहविषं दत्त्वा धूपदीपादिकं ददेत् ॥
ओड्याणमीशमन्त्रेण पुरुषाद्योगवेष्टनम् । भिक्षापात्रमघोरेण वामेनैव कमण्डलुम् ॥
व्याघ्राजिनं तु सद्येन हृदा च वेत्रदण्डकम् । चामरं शिरसा चैव छत्रं वै शिखयाणुना ॥
भसितं कवचेनैव पादुके नेत्रमन्त्रतः । मात्रादण्डमथास्त्रेण खड्गं तेनैव दापयेत् ॥
दद्यान्नित्यपवित्रं तु अस्त्रमन्त्रेण देशिकः । पश्चान्नित्याग्निकार्यादिसंध्याशेषं समाचरेत् ॥
महेश्वरं समभ्यर्च्य गन्धपुष्पस्रगादिभिः । सर्वालंकारसंयुक्तं बल्यन्तं चोत्सवं कुरु ॥
एकाहं त्रियहं वापि पञ्चसप्ताहमेव वा । नवाहं वा प्रकर्तव्यं यानमेवं समाचरेत् ॥

[2] Le demi-*śloka* 114b est cité dans le *Pavitrotsavavidhi* p. 179

[3] A : तन्मूर्ध्ने चास्त्रशुद्धिदम्  [4] A : प्रासादप्रदक्षिणं  [5] A : नाथं च pour नाथान्तं

[6] A : आचार्यात्मि पूजयेत्  [7] A : आत्मे पवित्रं  [8] A : पश्चाच्छिवमर्घ्येण

[9] A : पवित्रेण तु संग्राह्य  [10] A : दूर्वामक्षतयुक्तेन  [11] A : शिवदत्तेन

[12] voir p. 193, note 4.

[13] A : सर्वकार्यं तु

[14] cf. *Acintyaviśvasādākhya* 61, 125b-126a:

स्मरन्कालात्मकं देवं प्रत्र्यादिति शङ्करम् । कालात्मना त्वया देव यद्दृष्टं मामके विधौ ॥

*ibid*, 131b-132a:

सर्वकारणपाल्येषु सर्वतत्त्वेषु सर्वदा । मूलं लयान्तमुच्चार्य दद्याद्गङ्गावतारकम् ॥

[15] A : शिष्यात्मानं निवेदेन

पादुकं भस्मपात्रं च दण्डकौपीनभैक्षकम् । योगपट्टं केशशोधं शलाकाञ्जनपात्रकम् ॥ १२४ ॥
[1]इत्थं पवित्रं दत्वा च परिवारे पवित्रकम् । [2]निवेद्यार्घ्येण दत्वा च [3]पवित्राणि निवेदयेत् १२५ ॥
[4]क्षेत्रपालं विशेषेण पूजयेत्त्वमितं गुरुः । याग[5]गेहमुपागम्य प्रायश्चित्तार्थंहोमकम् ॥ १२६ ॥
अस्त्रमन्त्रं समुच्चार्यं शतं वार्धं तु होमयेत् । पूर्णाहुतिं तु कृत्वा च मूलमन्त्रं समुच्चरन् ॥ १२७ ॥
पश्चाद्देवं तु संपूज्य चाष्टपुष्पेण योजयेत् । [6]मन्त्रेणैव तु सर्वेषां शिवहस्तं प्रदापयेत् ॥ १२८ ॥
विशेषेण तु संपूज्याप्युपचारं निवेदयेत् । [7]पाद्यमाचमनं चार्घ्यं दत्वा जपं निवेदयेत् ॥ १२९ ॥
तत्त्वमन्त्रं समुच्चार्य दत्वा शुद्धपवित्रकम् । धूपदीपं च दत्वा तु स्तोत्रनृत्तं च योजयेत् ॥ १३० ॥

[चण्डेशे निर्माल्यपवित्रारोपणम्[8]]

निर्माल्यं तु पवित्रेण पुष्पेण [9]तु सुयोजयेत् । [10]उद्वाहयेत्तु चण्डेशे पश्चाद्धोमं समाश्रयेत् ॥ १३१ ॥
[11]तन्मन्त्रं तु समुच्चार्यं शतं वार्धं तु होमयेत् । चण्डे पवित्रं [12]दत्वा तु चास्त्रमन्त्रं समुच्चरन् ॥ १३२
तद्भस्म शुद्धपात्रेण चादायालिप्य[13] हस्तकम । तटाके भस्म निक्षिप्य पश्चात्स्नानं समाचरेत् ॥१३३॥

---

[1] B : इत्येवं pour इत्थं

[2] Le demi-*śloka* 125a est cité dans le *Pavitrotsavavidhi*, p. 185.

[3] A : पवित्रेण

[4] A : क्षेत्रपालाद् pour क्षेत्रपालं [5] B : गृह pour गेह [6] B : मन्त्रं सर्वेण सर्वेषां

[7] A : पाद्याचमनार्घ्यं दत्त्वा जपं तु विनिवेदयेत्

[8] cf. *Aṃśumadāgama* 14, 95-104:

लिङ्गात्पवित्रमुद्वास्य क्षालयेदस्त्रमन्त्रतः । तेन मन्त्रेण जुहुयात्समिदाज्यान्नकैः सह ॥
शतमर्धं तदर्धं वा प्रत्येकं जुहुयात्क्रमात् । एवं दिने दिने कुर्यात्क्रियामेनां समाचरेत् ॥
अवरोहदिने प्राप्ते नित्यपूजां समाचरेत् । जयादिरभ्याधानं च राष्ट्रभृद्धोममाचरेत् ॥
कुण्डेष्वग्निं विसृज्याथ कुम्भमध्ये तु योजयेत् । पश्चात्कुम्भं समुद्धृत्य गर्भगेहं प्रविश्य च ॥
संस्नाप्य देवदेवेशं प्रभूतहविषं ददेत् । नित्यहोमं समारभ्य नृत्तान्तं पूर्ववन्नयेत् ॥
अर्धयामावसानान्ते चण्डयागं समारभेत् । चण्डेश्वरं समभ्यर्च्य स्नपनाद्यैर्विशेषतः ॥
वस्त्रमाल्यैरलंकृत्य श्वेतचन्दनं लेपयेत् । आमन्त्रादिपवित्रं च चण्डनाथस्य रोपयेत् ॥
पायसं च निवेद्याथ धूपदीपादिकं ददेत् । ततो होमं प्रकर्तव्यं स्थण्डिले तु विशेषतः ॥
लीलावत्यग्निमार्गेण होमं कुर्याद्यथाविधि । अग्निमध्ये यजेच्चण्डं तन्मन्त्रेण हुनेत्क्रमात् ॥
मनसा पूज्य चण्डेशं दिवापूजावसानके । पवित्राणि हुनेत्तत्र चण्डनाथं विसर्जयेत् ॥

[9] B : च pour तु [10] A : उद्वाहनं तु [11] A : तन्मन्त्रेण समुच्चार्य [12] A : दत्तेन

[13] A : लिप्य pour लिप्य

[आचार्यपूजा[1]]

आचार्यं पूजयेत्सम्यग्वस्त्रहेमाङ्गुलीयकैः । जङ्गमेन तु संपूज्य नैवेद्यं तु निवेदयेत् ॥ १३४ ॥

[2]दत्त्वा द्रव्यं यथाशक्ति पश्चाच्छिष्यं तु भक्तवत् । इत्थं पवित्रं संपूज्य पश्चादुत्सवमाचरेत्[3] ॥ १३५ ॥

इति [4]श्रीमद्रौरवतन्त्रे [क्रियापादे] पवित्रारोपणविधिर्नाम[5] [6]पञ्चचत्वारिंशः पटलः ॥

---

[1] cf. *Aṃśumadāgama* 14, 105:

आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः । एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् ॥

cf. *Sahasrāgama* 26,56:

आचार्यदक्षिणां दद्याद्वस्त्रहेमाङ्गुलीयकैः । धातुपञ्चवसुनिष्कमाचार्याय प्रदापयेत् ॥

[2] A : यथाशक्ति द्रव्यं दत्त्वा च   [3] A : आश्रयेत् pour आचरेत्   [4] A : श्री pour श्रीमद्

[5] A omet नाम   [6] A : षट् pour पञ्च ; B : सप्त

# [षट्चत्वारिंशः पटलः]

## [अन्त्येष्टिविधिः[1]]

### [अन्त्येष्टिशब्दविवरणम्[2]]

अतः परं प्रवक्ष्यामि ह्यन्त्येष्टयाश्च विधिक्रमम् । अन्त्यत्वं[3] परतत्त्वं [4]चापीष्टिस्तत्त्वप्रवेशनम् ॥ १ ॥
विधिना योगमार्गेण ह्यन्त्येष्टिरभिधीयते ।

### [विपन्नस्य स्नानालंकारादि[5]]

[6]सायुज्ययोगात्तत्काले शिवदर्शन पूजयेत् ॥ २ ॥
देशिको ह्यात्मयोगे च तत्काले सव्यकर्णके । शिवमन्त्रं समुच्चार्य [7]भस्म सर्वाङ्गके क्षिपेत् ॥ ३ ॥

---

[1] Pour अन्त्येष्टिविधि voir *Acintyaviśvasādākhya* 67, *Kāmika* II 27, *Kālottara* 26, *Cintya* 28 à 30, *Makuṭa* 17 et *Svāyambhuva* 31.

[2] cf. *Cintya* 28, 16:
अन्त्यं च परमं तत्त्वमिष्टिश्च प्रविवेशनम् । विधिना योगमार्गेण संचिन्त्य परमं शिवम् ॥

[3] A : अन्त्यत्वं [4] A : च इष्टितत्त्वं प्रवेशकम्

[5]. cf. *Kāmika* II 27, 7b-20:
यस्य प्राणवियोगाख्यः कालो जन्तोः समागतः । विधाय स्नानमाग्नेयं मन्त्रसंनद्धविग्रहम् ।
मुमुक्षोश्च तथाग्नेयं मन्त्रकायं विधाय च । अष्टपुष्पिकया देवं पूजयित्वा मुमुक्षवे ॥
स्वकरेण परेषां वा कराभ्यां चन्दनादिभिः । संस्थाप्य तस्य हृदये लिङ्गरूपं महेश्वरम् ॥
स्पर्शयित्वाञ्जलिं तस्य मस्तके संनिधाप्य च । तदर्थमेतद्वाक्यं च देवदेवेशसंनिधौ ॥
दीक्षितोऽयं त्वया देव शिवाज्ञापरिपालकः । नेयः शिवत्वमचिरात्सपिण्डीकरणोत्तरम् ॥
एवं विज्ञाप्य देवेशं स्वस्थाने विनिवेशयेत् । एकधा बहुधा वापि क्रियामेनां समाचरेत् ॥
पठेदुत्क्रान्तिसमये कर्णोपान्तेऽणुसंहिताम् । विशेषाच्छिवमन्त्रं च मन्त्रं पञ्चाक्षरं तु वा ॥
एतत्सर्वं विधेयं तु देशिकेनेतरेण वा । तद्गोत्रजेन वान्येन वक्ष्यमाणं च कर्म यत् ॥
गतप्राणे नरे तस्य स्नानार्थं तीर्थसंभवम् । जलशतघटाद्यैस्तु सुस्नातैः परिगृह्य वा ॥
तैः स्नापयेद्गृहस्थश्चेल्लौकिकस्नानसंयुतम् । विधायैवं घटान्वापि कलशान्स्नपनोक्तितः ॥
संस्थाप्य वर्धनीहीनं केवलोदकसंयुतम् । स्थण्डिलाढ्यं सवस्त्रं च सहिरण्यं सकूर्चकम् ॥
पिधानाक्षतसंयुक्तं विद्याङ्गहृदयार्चितम् । स्नापयेद्वा गृहे त्वेतच्छमशाने वा समाचरेत् ॥
अथवा स्नपनोपेतं संस्नाप्याग्नेयमाचरेत् । कृत्वा संहारमार्गेण कौपीनं वसनं तथा ॥
परिवस्त्र्याक्षमालाद्यैर्भूषणैर्भूषणार्हकैः ।

cf. *Cintya* 28, 7-9a:
निर्देशं तु समासाद्य गोमयेनानुलेपयेत् । कृत्वा शरीरशुद्धिं तु रजन्यामलकादिभिः ॥
नववस्त्रैरलंकृत्य गन्धमाल्यैरलंकृतम् । सर्वगन्धानुलिप्ताङ्गं भस्मोद्धूलितविग्रहम् ॥
वस्त्रसूत्रोत्तरीयं च दर्भाणामुपरि न्यसेत् ।

[6] B : सायुज्ययोगी तत्काले [7] A : भस्म सर्वाङ्ग निक्षिपेत्

रुद्राक्षं [1]धारयेच्चैव पश्चात्स्नानं समाचरेत् । [2]रुचिरासनं संकल्प्य त्वात्मासनं तु पूजयेत् ॥ ४ ॥
[3]तदासनसमायुक्तो नववस्त्रं तु बन्धयेत् । गोमूत्रं गोमयं भस्म [4]वल्मीकमृत्तिकायुतम् ॥ ५ ॥
प्रक्षाल्य त्वस्त्रमन्त्रेण कलामन्त्रेण शुद्धितम् । ब्रह्मषडङ्गमुच्चार्य त्वभिमन्त्र्य तु देशिकः ॥ ६ ॥
[5]प्रेतस्नाने तु कृत्वा च तद्द्रव्येण तु मिश्रकम् । पादादिब्रह्मरन्ध्रान्तमस्त्रमन्त्रेण [6]चिन्तयन् ॥ ७ ॥
[7]स्नानतोयस्य शुद्धिं तु कलामन्त्रं समुच्चरन् । आत्ममन्त्रेण चास्त्रेण कृत्वा स्नानं समाचरेत् ॥ ८ ॥
[8]देहं तोयेन शुद्धं च कृत्वा कौपीनधारितम् । [9]नववस्त्रं च बध्वा तु भस्मरुद्राक्षधारणम् [10]॥ ९ ॥
[11]सर्वाभरणैरलंकृत्य [12]प्रेतोद्वासनमाचरेत् । गृहमध्ये तु [13]शुद्धे तु दर्भासने तु मिश्रयेत् ॥ १० ॥
गन्धमाल्यैश्च युक्तं च पवित्रं [14]सव्यनामिके । यज्ञोपवीतधरणं[15] दर्भसूत्रकयोजनम् ॥ ११ ॥
हस्ताङ्गुष्ठकबन्धं च पादाङ्गुष्ठकबम् । शुद्धवस्त्रतिरोधानं दिग्बन्धनावकुण्ठनम् ॥ १२ ॥

[चूर्णोत्सवः[16]]

चूर्णोत्सवार्थं कोष्ठे तु मध्ये गोमयशोधिते । कुम्भवर्धनीं संपूज्य स्थापयेदीशकोणके ॥ १३ ॥

---

[1] A : धारितं चैव

[2] Pour रुचिरासन voir *Kāraṇa* I 30, 69b-70:
ऊरुजानुद्वयं चैव पादाग्रं चैव संपुटम् । ईषन्नासाग्रदृष्टिस्तु देहदीर्घं तु तदृजु ॥
रुचिरासनमाख्यातं सर्वकार्येषु पूजितम् ।

[3] A : तत्तदासनमिश्रेण नववस्त्रेण बन्धकम्   [4] A : वल्मीकं मृत्तु उत्तमम्

[5] A : प्रातस्नानेन कृत्वा च   [6] A : चिन्तितम्   [7] A : स्नानतोयेन शुद्धेन

[8] A : देहतोयेन   [9] A : नववस्त्रेण बद्धेन   [10] A : धारयेत् pour धारणम्

[11] B : सर्वभूषैरलंकृत्य   [12] A : तत्तत्स्नानं तु वर्जयेत्   [13] A : शुद्धेन दर्भासनं तु

[14] A : सव्यनामिकाम् ; la forme grammaticale correcte est सव्यानामिकायाम्

[15] A : धारेण pour धरणं

[16] cf. *Cintyāgama* 28, 9b-23a:
वितानध्वजसंयुक्तं दर्भमालाभिरावृतम् । तदग्रे मण्टपं कृत्वा पिष्टचूर्णैरलंकृतम्॥
स्थण्डिलं तत्र कर्तव्यं शालितण्डुलकादिभिः । पञ्चकुम्भं तु संग्राह्यं वर्धनीसंयुतं भवेत् ॥
ससूत्रान्सापिधानांश्च सवस्त्रान्वारिपूरितान् । शिवकुम्भं च मध्ये तु वर्धनीं तस्य वामके ॥
चतुर्दिक्षु चतुष्कुम्भान्स्थापयेत्तु विशेषतः । देवमन्त्रमनुस्मृत्य कुम्भमध्ये तु विन्यसेत् ॥
देवीमन्त्रमनुस्मृत्य वर्धनीमध्यमे न्यसेत् । चतुरश्रार्धचन्द्रं च त्रिकोणं च षडश्रकम् ॥
सुवृत्तं च पृथिव्यादिमण्डलाकृतयः क्रमात् । पीतं शुक्लं च रक्तं च कृष्णाभं धूम्रवर्णकम् ॥
पृथिव्यादीनि बीजानि लवरयहकारकाः । पृथिव्यादीनि भूतानि सद्यादीशान्तं योजयेत् ॥
तत्तत्कुम्भे न्यसेद्देवं संहारक्रममेव हि । गृहद्वाराग्रतः स्थाने चूर्णोत्सवं समाचरेत् ॥
अथवा तु चितास्थाने चूर्णोत्सवं समारभेत् । भस्मशुभ्रतनुं कृत्वा त्रिपुण्ड्रं विधिना बुधः ॥
संहारन्यासमेवोक्तं स्थाने प्रोक्षणसंयुते । अग्रं तु गोमयैर्लिप्य सुस्थलं कारयेत्सुधीः ॥
पूर्वे तु स्थाप्य भेरीं तु गन्धादिभिरथार्चयेत् । ताडयेद्देशिकादिस्तु पश्चाल्लूखलमर्चयेत् ॥

[1]लोकपालकपूजा च गन्धपुष्पाणि योजयेत् । धूपदीपेन संपूज्य चार्घ्यं वै मूर्तियोजनम् ॥ १४ ॥
ताम्बूलं तण्डुलं चैव [2]हरिद्रां मन्त्रशुद्धिताम् । [3]लूखलं मुसलं चैव दर्भवस्त्रं तु योजयेत् ॥१५॥
त्रिमूर्तिदेवाः संपूज्याः कूर्चबन्धे तु तद्भवेत् । धूपदीपं तु देवानामर्घ्यं दत्ते यजेद्बुधः॥ १६ ॥
शाल्यासने च पूर्वं तु भेर्यां चैव सुपूजयेत् । वामे तु भद्रकालीं च सव्ये रुद्रं प्रपूजयेत् ॥ १७ ॥
यमतालं तु ताडेत [5]पश्चाद्भेरीं च ताडयेत् । [6]पञ्चघोषं तु कृत्वा च स्तोत्रनृत्तं तु योजयेत् ॥ १८ ॥
तैलं हरिद्रां निक्षिप्य प्रेतमूर्ध्नि च दापयेत् । [7]माहेश्वराणां दत्तं तु [8]तैलं ताम्बूलकं भवेत् [9] ॥ १९ ॥

[आसन्दिकामारोप्य प्रेतस्य श्मशाननयनम्[10]]

पश्चाद्विमानं कृत्वा चाश्वत्थजम्बुकचूतकैः । उदुम्बरेण पूगैश्च वह्निवृक्षेण युक्तकम् ॥ २० ॥

---

लूखलं मुसलं भेरीं वेष्टयेद्वस्त्रमेव च । शिवभक्तैर्विशेषेण शिववाचकघोषणम् ॥
शिवदासीं समभ्यर्च्य वस्त्रगन्धादिभिस्तथा । मुसलं पाणिसंयुक्तं लूखले च प्रवेशयेत् ॥
हरिद्रां चूर्णितां तैलं कल्पयेच्छिवशासने । भक्तेषु कल्पयेत्पश्चात्पारशैवेषु श्रेष्ठकम् ॥

[1] A : लोकपालकपूज्येन [2] A : हरिद्रं मन्त्रशुद्धिदम् [3] cf. *Rauravāgama* vol. I, p. 86, note 17
[4] A : त्रिमूर्तिदेवेन संपूज्य [5] A : पश्चाद्धरिं ताडयेत्
[6] Pour पञ्चघोष voir *Kāraṇa* I 31, 34b-37a:
कुर्यात्पञ्चमहाशब्दं तथाशुभनिवृत्तये । दारुजं पृथिवीजातं शङ्खजं चाब्जमुच्यते ॥
आग्नेयं लोहजं प्रोक्तं वायव्यं वंशजं भवेत् । गेयं गगनजातं स्यात्पञ्चैते शब्दमुच्यते ॥
सुषिरं गानकं चैव चर्मबन्धं तथैव च । तन्त्रीवाद्यसमायुक्तं शब्दं पञ्चमहान्तकम् ॥
[7] A : माहेश्वरेण दत्तेन [8] B : तैलं ताम्बूलवद्भवेत्
[9] cf. *Kāmikāgama* II 27, 21-22a:
दीक्षितानामथान्येषां शिवशासनधारिणाम् । अन्येषां च यथायोग्यं रात्रिचूर्णं च तैलयुक् ॥
ताम्बूलसहितं सर्वं जनेभ्यो दापयेत्तदा ॥
[10] cf. *Kāmikāgama* II 27, 22b-32:
आसन्दिकां नयेद्यज्ञवृक्षैरन्यैरनिन्दितैः । पुरुषायतमानं च षडङ्गुलविवर्धनात् ॥
त्रिहस्तान्तसमायामां त्रिचतुष्पञ्चमांशतः । सुविस्तारसमायुक्तामोजःसंख्यान्तविष्टराम् ॥
आसन्दिकां समारोप्य कूटान्तोर्ध्वकृतक्रियाम् । रक्तमालाम्बरक्लृप्तवितानालम्बनान्विताम् ॥
इतरं चेदथोत्क्रान्त्या संस्थितं शिवयोगिनम् । निःसारयेदलंकृत्य शुभैस्तं सर्वभूषणैः ॥
शिबिकां वेदशीं शुद्धामानीयारोपयेच्छिवम् । स्वनता मुखरेणोच्चैरातोद्येनाग्रगामिना ॥
सङ्घेन समयस्थानां पृष्ठतश्चाभिनन्दितम् । शङ्खध्वनिसमायुक्तं गानध्वनिसमायुतम् ॥
तज्ज्ञातयोऽनुगच्छेयुरनुद्घाटितमस्तकाः । निगृह्याक्षिजलं चाक्ष्णोः संसारासारभाविताः ॥
दक्षिणस्थशिरोयुक्तं बद्धाङ्गुष्ठद्वयान्वितम् । दर्भरज्ज्वा तमावेष्ट्य तदेशानीं दिशं नयेत् ॥
दीक्षितैस्तुल्यजातीयैरपसव्योपवीतकैः । जपद्भिरस्त्रमन्त्रैर्वा वाहयित्वोदकान्वितम् ॥
वह्निं च तत्पुरोऽन्येन सधूमं त्रिकटिस्थितम् । वाहयेदर्धविश्रामदक्षिणावनते मनाक् ॥
सुविशुद्धे भुवः पृष्ठे मृतं दक्षिणमस्तकम् ॥

अष्टहस्तप्रमाणेन चायाममिति कल्पयेत् । चतुर्हस्तप्रमाणेन विस्तारं तु तथा भवेत् ॥ २१ ॥

इति लक्षणकासन्दीं कृत्वा रक्तैस्तु वस्त्रकैः । [1]पुष्पदर्भैरलंकृत्यारोप्य प्रेतं च तद्बुधः ॥ २२ ॥

[2]चतुर्भिः पुरुषैस्तुल्यैर्दीक्षोपेतैस्तु निक्षिपेत् । [3]ग्रामप्रदक्षिणं [4]कुर्याच्छ्मशानासन्नसंस्थितौ ॥ २३ ॥

अन्तर्बलिं तु निक्षिप्य बहिर्बलिस्तथा भवेत् । प्रच्छन्नपटमादाय प्राङ्मुखं [5]यातु धावतु ॥ २४ ॥

[मण्टपः[6]]

शुद्धभूमौ श्मशाने तु शवं संस्थाप्य तद्बुधः । पश्चान्मण्डपं संकल्प्य षट्त्रिंशद्धस्तमानकम् ॥ २५ ॥

आयामविस्तरं प्रोक्तं चतुर्द्वारसमन्वितम् । मण्डपस्य तु मध्ये तु चायामं हस्तमात्रकम् ॥ २६ ॥

कुण्डं कृत्वाथ विस्तीर्णमष्टाङ्गुलसमन्वितम् । एकमेखलां कृत्वा तु चोर्ध्वे च चतुरङ्गुलम् ॥ २७ ॥

हस्तमात्रप्रमाणेन वेदिकां वायुकोणके । अष्टाङ्गुलप्रमाणेन कृत्वा विस्तीर्णमुच्यते ॥ २८ ॥

करमानविधानेन चैशान्यां दिशि कोणके । सप्ताङ्गुलं तु विस्तीर्णं कृत्वा तद्वेदिकां बुधः ॥ २९ ॥

[चिताकल्पनम्[7]]

कुण्डाग्निदिशि कल्पेत चतुर्हस्तं तु दीर्घकम् । विस्तीर्णं तु द्विहस्तेन चाष्टाङ्गुलं तु कल्पयेत् ॥ ३० ॥

---

[1] cf. *Acintyaviśvasādākhya* 67, 3b-4:
स्वर्गसोपानयुक्ते च शवमारोपयेत्ततः । अपसव्योपवीतिभिर्दीक्षितैस्तुल्यजातिभिः ॥
सस्कन्धैः शस्त्रमन्त्रस्य जपयुक्तैश्च धारयेत् ॥

[2] A : चतुष्पुरुषेण दीक्षेण उपवीतं तु निक्षिपेत् [3] B omet les *śloka* 23b à 169.

[4] A : कुर्यात् स्मशानासनसंस्थितम् [5] A : यास्तु

[6] cf. *Acintyaviśvasādākhya* 67, 6 7:
चतुर्हस्तयुतं कूटं तत्कुर्यात्प्रपयान्वितम् । सर्वालंकारसंयुक्तं सर्वमालासुशोभितम् ॥
कुण्डं कुर्याद्विधानेन चतुरश्रैकमण्डलम् । षडङ्गुलोच्छ्रितं वायौ तन्मृदा स्थण्डिलं भवेत् ॥

cf. *Kāmika* II 27, 37b-39:
अथ स्थानमदूरस्थमुदकस्य समं शुचि । प्राप्य कूटं प्रपां वापि विधायैवं तदन्तरे ॥
षडङ्गुलोच्छ्रयोपेतं मेखलैकं युगाश्रकम् । कृत्वा कुण्डं विधानेन ह्यग्तिकं तन्मृदानिले ॥
संकल्प्य स्थण्डिलं तद्वत् "

cf. *Cintya* 30, 2-5:
श्मशाने मण्टपं चाथ षोडशस्तम्भसंयुतम् । दर्भमालाभिरावेष्ट्य पुष्पमालासमन्वितम् ॥
द्वादशायामसंयुक्तं सक्तुकं तु क्रमेण तु । चतुर्द्वारसमायुक्तं दर्पणोदरसंनिभम् ॥
मण्टपे वायुदिग्भागे वेदिकां च प्रकल्पयेत् । तन्मध्ये त्वग्निकुण्डं च कल्पयेत्तद्विचक्षणः ॥

[7] cf. *Acintyaviśvasādākhya* 67, 8-9a:
चतुष्करं चिताखातं कुण्डदक्षिणतो भवेत् । विस्तीर्णाकारयुक्ताढ्यमष्टाङ्गुलविहीनकम् ॥
कुण्डादित्रयमालिप्य गोमयाम्बुभिरेव च ॥

cf. *Kāmika* II, 27, 39b-41a:
" चिताखातं चतुष्करम् ॥
हस्तद्वितयविस्तीर्णमष्टाङ्गुलगभीरकम् । कुण्डदक्षिणतः कुर्यान्निष्पाद्यैवं त्रयं गुरुः ॥
गोमयेनोपलिप्याथ "

cf. *Cintya* 30, 6a: कुण्डस्याग्नेयदिग्भागे चितास्थानं प्रकल्पयेत् ॥

चितास्थानं तु कृत्वा चाप्येतत्त्रयं तु तद्बुधः। चितास्थानं च कुण्डं च वेदीं गोमयशुद्धितम् ॥ ३१ ॥

[मण्डलकल्पनम्[1]]

पश्चाद्वर्णं च निक्षिप्य विजयास्त्रं जपेद्गुरुः । पञ्चविंशत्पदं चापि हरिद्रां मध्यपञ्चके ॥ ३२ ॥

नैर्ऋत्यां च चतुःश्वेतं रक्तमग्निचतुष्पदे । वायुकोणे चतुष्कृष्णमैशान्यां धूमवर्णकम् ॥ ३३ ॥

पूर्वं एकपदं स्वर्णं याम्यैकं कृष्णवर्णकम् । पश्चिमैकपदं श्वेतमुत्तरे रक्तवर्णकम् ॥ ३४ ॥

[द्रव्यसंकल्पनम्[2]]

सर्वद्रव्याणि संकल्प्य दर्भमाल्येन बन्धयेत् । पुष्पमाल्यैरलंकृत्य पश्चात्परिधिं कल्पयेत् ॥ ३५ ॥

द्वादशदर्भान्संगृह्य नवदर्भं तु कूर्चकम् । स्रुक्स्रुवौ चापि संकल्प्य पश्चात्स्नानं समाचरेत् ॥ ३६ ॥

वर्धन्यां तु जलं पूर्य चास्त्रमन्त्रेण शुद्धितम् ।मण्डपानुप्रदक्षिण्य वेदिकायां तु संस्थितः ॥ ३७ ॥

सर्वाङ्गोद्धूलनं कृत्वा त्रिपुण्ड्राणि तु निक्षिपेत् । उष्णीषोत्तरवस्त्राण्युपवीतं विपरीतकम् ॥ ३८ ॥

पवित्रं धारयेत्पश्चाद्दुर्विरासनसंस्थितः । उत्तराभिमुखो भूत्वा त्वाचमनार्घ्यपात्रकम् ॥ ३९ ॥

तिलसर्षपगोक्षीरं कुशकूर्चं तु तोयकम् । प्रणवार्घ्येण शुद्धं तु तत्तोयैर्द्रव्यशुद्धितम् ॥ ४० ॥

पञ्चग्रन्थिकशुद्धिं तु भूतशुद्धिमतः परम् । स्थानशुद्धिं च कृत्वा चाप्यन्तर्यागं तु पूर्वकम् ॥ ४१ ॥

[3]विपरीतन्यासं कृत्वा च पश्चाद्वर्धनीं पूजयेत् । वेदिकाग्रेशकोणे तु विकिरशालियुक्तके ॥ ४२ ॥

चलासने मूर्तिमावाह्य मूलेनावाहनं पुनः । गन्धाभरणवस्त्राणि पुष्पमाल्यं निवेदयेत् ॥ ४३ ॥

धूपदीपं तु दत्वा चाप्यर्घ्यं मूर्ध्नि च योजयेत् । पाशुपताह्वयास्त्रेण ज्ञानखड्गं सुयोजयेत् ॥ ४४ ॥

[चितावास्तुपूजा[4]]

अर्घ्यपात्रं समादाय नतोन्नतविवर्जितम् । चिताख्यासनं संपूज्य चास्त्रदण्डेन ताडयेत् ॥ ४५ ॥

---

[1] cf. *Cintya* 30, 10-12:

मध्यमे श्वेतवर्णं स्यादाग्नेय्यां रक्तवर्णकम् । निर्ऋतौ श्यामवर्णं स्याद्वायव्ये कृष्णवर्णकम् ॥

ऐशान्यां तु सितं प्राप्य एवमेव क्रमेण तु । पूर्वस्यां हेमवर्णं स्याद्दक्षिणे श्यामवर्णकम् ॥

पश्चिमे शुक्लवर्णं स्यादुत्तरे रक्तवर्णकम् । एतेषां मण्डलं प्रोक्तम् "

[2] cf. *Kāmika* II 27, 41-46a:

" तत्समीपस्थितां भुवम् । शुचिस्नातो गुरुर्मन्त्रकायश्चास्त्रालुकीकरः ॥

प्रदक्षिणक्रमाद्गत्वा स्थण्डिलान्तमुदङ्मुखः । विपरीतकृतन्यासो हेतिमन्त्रेण रक्षितः ॥

कृतान्तर्यजनोऽस्त्रेण समालभ्यास्त्रवर्धनीम् । तज्जलप्रोक्षितैर्द्रव्यैः पूजां संकल्प्य चात्मनः ॥

आवर्त्य संहितामन्त्रान्कलाः संहारवर्त्मना । ब्रह्मादिकारणोपेताः स्वस्मिन्विन्यस्य देशिकः ॥

संहारहरहस्तं च कृत्वा स्मृत्वा शिवं सकृत् । विकीर्य विकिरांस्तत्र कुशान्भस्मतिलानथ ॥

समाहृत्य विधानेन "

voir aussi *Kriyākramadyotikā*, *aparakriyāvidhi*, pp. 12-16 et *Kriyādipikā* pp. 237-238

[3] Pour अस्त्रवर्धनीपूजा voir *Kriyākramadyotikā* pp. 396-397:

[4] *Kāmika* II 27, 46-51a:

" चितिवास्तु प्रपूजयेत् । पञ्चभागीकृते क्षेत्रे पञ्चपञ्चककोष्ठके ॥

पृथिव्यादौ यथारूपैः पञ्चवर्णैर्विचित्रिते । वंशरज्ज्वादिसंपन्ने विन्यसेद्वास्तुदेवताः ॥

[1]पञ्चवर्णेन सूत्रेण बन्धेत्पृथ्व्यादिकोणकान् । ईशादि चाग्निकोणान्तमप्रदक्षिणतः पुरः ॥ ४६ ॥
पृथ्वीं प्रथममभ्यर्च्य ब्रह्माणं तु समर्चयेत् । द्वितीयं जलं संपूज्य विष्णुदेवं तु पूजयेत् ॥ ४७ ॥
अग्निभूतं तु संपूज्य रुद्रदेवं समर्चयेत् । मरुत्तत्त्वं तु संपूज्य चेश्वरं तु समर्चयेत् ॥ ४८ ॥
आकाशं तु समर्चेत सदाशिवं तु पूजयेत् । पूर्वं एकपदे त्विन्द्रं यममेके च दक्षिणे ॥ ४९ ॥
सद्योजातं प्रतीच्यां तु चोत्तरे सोममर्चयेत् । पाद्याचमनार्घ्यं दत्त्वा धूपदीपं निवेदयेत् ॥ ५० ॥
तत्तन्त्रेण बलिं दत्त्वा पञ्चघोषेण घोषयेत् । पश्चाद्द्वारे तु देवांस्तु विपरीतं समर्चयेत् ॥ ५१ ॥

[अस्त्रपूजा[2]]

धूपदीपं तु दत्त्वा च ह्यायुधानि तु पूजयेत् । वज्रादिचक्रपर्यन्तं विपरीतं तु पूजयेत् ॥ ५२ ॥

[मण्टपे शिवपूजा[3]]

द्वारेषु दण्डं संस्थाप्य तत्तु सूत्रेण बन्धयेत् । वेदिकावायुदिग्भागे रुचिरासनसंस्थितः ॥ ५३ ॥
संहारन्यासं कृत्वा च मूर्तिमासनं कल्पयेत् । सद्यादीशान्तं कृत्वा च नेत्रं विद्यां तु कल्पयेत् ॥५४॥
अस्त्रादि हृदयान्तं चाप्यस्त्रं कवचकं बुधः । इत्युक्तस्तु करन्यासः[4] पश्चाद्देहे तु न्यासकम्[5]॥ ५५ ॥
मूर्तिहृदयं संकल्प्य चासनं चाभिकल्पयेत् । जान्वादिब्रह्मरन्ध्रान्तं सद्यादीशान्तं कल्पयेत् ॥ ५६ ॥

---

तत्र मध्ये भुवा सार्धं ब्रह्माणं पञ्चकोष्ठके । नैऋत्यां वारिणा सार्धं विष्णुं कोष्ठचतुष्टये ॥
आग्नेय्यामग्निना सार्धं रुद्रं कोष्ठचतुष्टये । वायुकोणे चतुष्कोष्ठे वायुना सममीश्वरम् ॥
गगनेन सदेशानमैशकोष्ठचतुष्टये । पूर्वादिवेदकोष्ठेषु शक्रादींश्चतुरो यजेत् ॥
निजनाम्नार्चनां नित्यां स्वाहान्तेन बलिं क्षिपेत् ॥

[1] Pour पञ्चवर्ण voir *Kālottara* cité dans la *Kriyākramadyotikā, aparakriyāvidhi* p. 18.
पीतं शुक्लं च रक्तं च कृष्णं च हरितं तथा । श्वेतं स्याच्छालिपिष्टेन रक्तमिष्टिकया तथा ॥
श्यामं पलाशचूर्णेन मूलेनैव हरिद्रकम् । तुषाकारं कृष्णवर्णं पञ्चचूर्णमिति स्मृतम् ॥

[2] cf. *Kāmika* II 27, 51b-52:
ऐशान्यां दिशि वर्धन्यामिष्ट्वा पाशुपतास्त्रकम् । शूलात्कुलिशपर्यन्तान्यस्त्राण्यष्टासु दिक्षु च ॥
निधाय पूजयेदूर्ध्वमधः पद्मारिकावपि ॥

[3] cf. *Kāmika* II 27, 53-54:
तिलदर्भान्तरे सम्यग्यजेन्मण्डलके भवम् । ऐश्वर्याद्यासनं दत्त्वा सदलाम्भोजमध्यमे ॥
मनोन्मन्यादिवामान्तशक्तिचक्रं प्रपूजयेत् । व्युत्क्रमासनमिष्ट्वैवं साङ्गं संपूज्य शंकरम् ॥

[4] cf. *Kāmika* I 4, 38b-50a:
यथेष्टमासनं बध्वा ऋजुकायोत्तराननः । चन्दनालिप्तहस्तौ द्वौ शोधयेदस्त्रमन्त्रतः ॥
परस्परौ च संस्पृश्य तलकौ हस्तपृष्ठकौ । अमृतीकृत्य मूलेन वौषडन्तेन मन्त्रतः ॥
विद्याशरीरतां ध्यात्वा तयोः शक्त्यन्तमुत्तमम् । मूलेन शिवमावाह्य ब्रह्माण्यङ्गानि विन्यसेत् ॥
गृहस्थः सृष्टिमार्गेण करन्यासं तु कारयेत् । वानप्रस्थयतीनां च संहारन्यासमुच्यते ॥
अङ्गुष्ठादिकनिष्ठान्तमीशात्सद्यावसानकम् । सृष्टिन्यासः समाख्यातः सद्यादीशावसानकम् ॥

नेत्रं नेत्रेण योजेत्त हृदयं हृदा कल्पयेत् । हृदयाद्यस्त्रपर्यन्तं कल्पयेत्तदिदं गुरुः ॥ ५७ ॥
दिक्पालबन्धनं कृत्वा विपरीतं तु तद्बुधः । [1]प्राणायामं तु कृत्वा च रेचकं पूरकुम्भकम् ॥ ५८ ॥
पश्चादर्घ्यादिपात्रं तु प्रक्षाल्य मन्त्रमुच्चरन् । हृदयमनुचिन्त्याथ ह्यमृतेन तु पूरयेत् ॥ ५९ ॥
पञ्चब्रह्मषडङ्गेन दूर्वाक्षतं च पुष्पकम् । एलालवङ्गकर्पूरतिलसर्षपचन्दनम् ॥ ६० ॥
कुशकूर्चेन शाल्यन्नं क्षीरतोयेन युक्तकम् । तोयमध्ये तु संपूज्य तन्मन्त्रेणाभिमन्त्रणम् ॥ ६१ ॥
दिग्बन्धनावकुण्ठने धेनुमुद्रां तु दर्शयेत् । तत्तोयेन तु संप्रोक्ष्य वेदिकोपरि कल्पयेत् ॥ ६२ ॥
भस्मदर्भेण लाजैश्च तिलशाल्यन्नयुक्तकम् । वेदिकोपरि पूर्वं तु विपरीतं द्वारं पूजयेत् ॥ ६३ ॥
लक्ष्म्यादिगणपान्तं च गङ्गादिनन्दिकान्तकम् । यमुनादि महाकालमासनं मूर्तिमूलकम् ॥ ६४ ॥
पाद्याचमनार्घ्यं दत्वा धूपदीपं तु योजयेत् । गङ्गां गणपतिं लक्ष्मीं नन्दिनं च सरस्वतीम् ॥ ६५ ॥

---

कनिष्ठाद्यङ्गुष्ठान्तं च संहारन्यासमुच्यते । जगतः सृष्टिसंहारक्रम एवात्र च क्रमः ॥
नेत्रं हस्ततले न्यस्य पश्चादङ्गानि विन्यसेत् । अङ्गुष्ठादिकनिष्ठान्तकनिष्ठाद्यङ्गुष्ठकावधि ॥
तर्जन्याङ्गुष्ठके न्यासः सर्वास्वङ्गुष्ठतो भवेत् । तर्जन्यन्तं न्यसेद्धीमांस्तर्जन्या मस्तकं न्यसेत् ॥
यद्वास्त्रवर्मचूडाकहृदोऽङ्गुष्ठादितो न्यसेत् । सृष्टौ प्रतीपको न्यासः संहारो मोक्षकाङ्क्षिणाम् ॥
मूर्धादिः सृष्टिरित्युक्ता पादादिः संहृतिर्भवेत् । विद्येश्वराणां बीजानि चाङ्गुष्ठादि पुनर्न्यसेत् ॥
अमृतीकृत्य भावेन कवचेनावकुण्ठयेत् । एवं शिवीकृतौ हस्तौ समर्थौ सर्वकर्मसु ॥
सकलीकरणे संध्याकाले चाचमने तथा । करन्यासो विधातव्यस्तद्विशेषविधावपि ॥

[6] cf. *Kāraṇa* I 30, 132b-136a:

अङ्गन्यासं ततः शृणु । मूर्धादि सृष्टिरप्रोक्तं पादादिः संहृतिर्भवेत् ॥
स्वमूर्ध्नि विन्यसेदीशं वक्त्रे वक्त्र तु विन्यसेत् । न्यस्त्वाघोरं हृदि स्थाने वामं गुह्ये तु विन्यसेत् ॥
सद्यमन्त्रं न्यसेत्पादे ततस्त्वङ्गानि विन्यसेत् । हृदयं हृदये न्यस्य शिरः शिरसि विन्यसेत् ॥
शिखायां तु शिखां न्यस्य कवचं स्तनमध्यतः । लोचने तु न्यसेन्नेत्रमस्त्रमस्त्रप्रदेशके ॥

[1] Pour प्राणायाम voir *Śivadharmottara* cité dans le *Sakalāgamasārasaṃgraha* pp. 27-28:

प्राणो वायुः शरीरस्थस्तस्य यामो निरोधनम् । रेचकः पूरकश्चैव कुम्भकस्त्रिविधाः स्मृताः ॥
रेचयेदूर्ध्ववायुं च द्वात्रिंशन्मात्रया गुह । पूर्ववत्पूरयेद्धीमान्वामेन तु समाहितः ॥
दृतिवत्पूरयेद्धीमाञ्जठरं बाह्यवायुना । पूर्वं षोडशमात्रं तु पूरयेत्कुम्भकं ततः ॥
चतुष्षष्टिकमात्रं वा सम्यक्कुम्भेन पूरयेत् । आपूर्यैव ततो ध्यायेदात्मानममृतेन तु ॥
रेचयेद्दक्षिणे वायुं वामेनापूरितोदरम् । कुम्भकं तु समं कुर्यात्प्राणायामस्य लक्षणम् ॥
रेचनात्सुमुखं पद्मं पूरकात्पुष्पशोभितम् । कुम्भकाच्छिवसायुज्यं प्राणायामफलं स्मृतम् ॥
इडा चन्द्रकला ज्ञेया पिङ्गला भास्करांशिका । द्वयेन पूरयेद्वायुं नासिकामण्डलद्वयम् ॥
प्रणवाद्दशकं मात्रं प्रत्येकं कल्पितं तु वा । संहितामन्त्रसंयुक्तं पूरकादि क्रमात्कुरु ॥
न मुञ्चति न गृह्णाति वायुमन्तर्बहिस्स्थितम् । संपूर्णकुम्भवत्तिष्ठेदचलः स तु कुम्भकः ॥

महाकालं च यमुनां स्थितांस्तु चिन्तयेद्बुधः । भूमिष्ठादिकशुद्धिं च प्राकारासुरशुद्धिकाम् ॥ ६६ ॥
द्वारपालान्वृषभादि विपरीतं तु पूजयेत् । सप्तदेशिकान्संपूज्य विपरीतं तु तान्क्रमात् ॥ ६७ ॥
शक्त्यादिशक्तिपर्यन्तं विपरीतं समर्चयेत् । कुटिलोपरि कल्पेत विमलासनं चिन्तयन् ॥ ६८ ॥

[पञ्चासनानि[1]]

सिंहासनं चतुष्कोणमनन्तासनं त्रिकोणकम् । पद्मं वर्तुलं विज्ञेयं षट्कोणं विमलासनम् ॥ ६९ ॥
योगासनं चाष्टकोणमेवमेवं प्रकल्पयेत् । आवाहनासनं पद्ममनन्तं स्नानकारणम् ॥ ७० ॥
विमलं चार्चने चैव नैवेद्ये योगमासनम् । वस्त्राभरणलेपे तु सिंहासनं तु कल्पयेत् ॥ ७१ ॥
मूर्तेरावाहनं कृत्वा मूलेनावाहयेद्बुधः । अष्टत्रिंशत्कलान्यासं बहिर्मातृकमुच्यते ॥ ७२ ॥
अनन्तमातृकान्यासं विपरीतं न्यसेद्बुधः । पञ्चब्रह्मषडङ्गं च संहारं तु समर्चयेत् ॥ ७३ ॥
धूपदीपेन संयोज्य चास्याचमनयोजनम् । षडङ्गं तु यजेत्पश्चाद्दिग्बन्धनावकुण्ठनम् ॥ ७४ ॥
पाद्याचमनार्घ्यं दत्वा पञ्चवक्त्रेषु बुद्धिमान् । विपरीतं च चिन्तेत सद्यादीशान्तमुच्यते ॥ ७५ ॥
पुष्पदूर्वाक्षतं चैव मूलमन्त्रेण पूजयेत् । पञ्चासनानि कृत्वा च विपरीतं तु कल्पयेत् ॥ ७६ ।
गन्धपुष्पदीपधूपवस्त्राभरणसंयुतम् । सर्वोपचारं दत्वा च पवित्रं नित्यं योजयेत् ॥ ७७ ॥
[2]जपकालेऽक्षमालां च न गुरोरपि दर्शयेत् । प्रच्छन्नपटमास्थाय विपरीताक्षमाल्यकम् ॥ ७८ ॥
जपनिवेदनं कृत्वा सव्यहस्ते तु मध्यके । पश्चाद्धृदि जपं दत्वा चार्चेत्संहार उच्यते ॥ ७९ ॥

[अग्निकार्यम्[3]]

अग्निकार्यार्थं विज्ञाप्य तत्स्थानं तु विवर्जयेत् । अर्घ्यपात्रं समादाय चाप्रदक्षिणं वेदिकाम् ॥ ८० ॥

---

[1] cf. *Kāraṇa* I 30, 252-254:
सिंहासनं चतुष्कोणमनन्तं च त्रिकोणकम् । पद्मं च वर्तुलाकारं षट्कोणं विमलासनम् ॥
योगासनं चाष्टकोणमासनं परिकल्पयेत् । आवाहनासनं योगं स्नाने सिंहासनं भवेत् ॥
अर्चनायां महापद्मं विमलाख्यं तु भोजने । स्तोत्रसंगीतनृत्तेष्वनन्तासनमिहोच्यते ॥

cf. *Kāmika* I 4, 284b-285:
आवाहनासनं पद्ममनन्तं स्नानकर्मणि । विमलं चार्चने विद्यान्नैवेद्ये योगमासनम् ॥
वस्त्रादीन्यन्यकर्माणि सिंहासने प्रकल्पयेत् ॥

[2] cf. *Kālottara* cité dans le *Sakalāgamasārasamgraha*, p. 113:
तथा मन्त्रं चाक्षसूत्रं गुरोरपि न दर्शयेत् । जपकाले तु गोप्तव्या जपमाला च षण्मुख ॥
परदृष्टिगता माला यदि स्यान्निष्फला भवेत् ॥

[3] cf. *Kāmika* II 27, 55-57a:
संस्कृत्य पूर्ववत्कुण्डं शक्तिमभ्यर्च्य तत्र च । क्रव्यादांशोज्झितं वह्निं विनिक्षिप्य प्रदक्षिणम् ॥
संस्कारैः पञ्चभिर्जातजातवेदोहृदम्बुजे । भवं जल इवाभ्यर्च्य तर्पयित्वासितैस्तिलैः ॥
साज्यैः पूर्णाविशिष्टैश्च चिनुयात्तु चितिं ततः ॥

cf. *Acintyaviśvasādākhya* 67, 24:
प्रक्षिप्य दक्षिणे कुण्डे जनयेत्प्रागिवानलम् । ईशं संपूज्य हुत्वाग्नौ हुनेत्पूर्णावसानकम् ॥

पश्चात्कुण्डसमीपे तु रुचिरासनसंयुतः । उत्तराभिमुखो भूत्वा कृत्वा न्यासमतः परम् ॥ ८१ ॥
कुण्डसंस्कारं कृत्वा चाप्यग्नेश्च जननान्तकम् । विपरीतं पूर्ववत्कृत्वा वह्नाग्निं तु विचिन्तयेत् ॥ ८२ ॥
अग्नेर्हृदयपद्मे तु नित्यं संपूजयेच्छिवम् ।

[होमः[1]]

मूलैः शताहुतिं हुत्वा शिष्यस्य जननार्थकम् ॥ ८३ ॥
देशिकस्तु सुतं कृत्वा चाध्वशुध्या तु युक्तकम् । [2]अध्वशुद्धिं विवर्जेत समयिनां तु तद्बुधः ॥ ८४॥
आत्मजातार्थहोमे तु मूलमन्त्रशताहुतीः । पाशत्रयैः पशुश्चैव मलाद्यैर्व्याप्त उच्यते ॥ ८५ ॥
तत्कालेऽनलं प्रज्वाल्य चात्मभोगं विचिन्तयेत् । नवावस्था तु सा प्रोक्ता चात्ममन्त्रं समुच्चरन् ॥८६
[3]महाजालप्रयोगेण शिवानुग्रहयुक्तके । उदकं क्षीरयुक्तं चाप्यात्मभोगः स उच्यते ॥ ८७ ॥
आवाहनं तु चाद्यस्य व्याप्तिः स शिवभोगकः । आत्मभोगं शिवे भोगं सर्वं मन्त्रेण दर्शयन् ॥ ८८ ॥

---

[1] cf. *Kāmika* II, 27, 65b-70a:

आग्नेय्यां शवमिष्ट्वाग्नेर्दक्षिणस्यां कुशासने । वीक्षणादिविशुद्धस्य धारणाभिश्च पञ्चभिः ॥
ततोऽस्य मन्त्रकायस्य हृत्सरोरुहकोटरे । भोग्यकर्माशया रक्तमप्राप्ताधारदेहकम् ॥
महाजालेन तल्लिङ्गं संहृत्य विनिवेशयेत् । ओं हूं हामथ हं हां हूं महाजालमिदं मतम् ॥
उक्त्वान्ते मृतदीक्षाख्यां नत्यन्तां भावितो गुरुः । विद्यादेहं च तद्देहे संहृत्य पञ्च ताः कलाः ॥
सषडङ्गं शिवं न्यस्त्वा मूलेन जुहुयाच्छतम् । चैतन्यसंनिधानार्थम्"

*ibid.* 75b-76a:

अग्नेरुद्धृत्य होमान्ते योजयेदमले पदे । यद्युक्तो न पुनर्जातु पराधीनो भवेदणुः ॥

cf. *Acintaviśvasādākhya* 67, 28b-31:

अथात्र धारणाशुद्धे गन्धपुष्पादिपूजिते । महाजालप्रयोगेण जीवमादाय विन्यसेत् ॥
ओं हुं हां हं हां हुं अमुकात्मने नमः । विद्यादेहं च तद्देहे मस्तके वदने हृदि ॥
नाभावधःशरीरे च शान्त्यतीतादिकाः कलाः । विन्यस्य विद्यातत्त्वं च शक्तिचक्रं तथा शिवम् ॥
चैतन्यसंनिधानाय शतं मूलेन होमयेत् ॥

voir aussi *Kriyādipikā*, p. 241.

[2] cf. *Kāmika* II. 27, 1-3:

अन्त्येष्टिं तु प्रवक्ष्यामि दीक्षितानां द्विजोत्तमाः । ब्राह्मणः क्षत्रियो वाथ वैश्यः शूद्रोऽनुलोमजाः ॥
आचार्याः साधका वा स्युः पुत्रकाः समयस्थिताः । गतासवो यदा तेषां कार्यान्त्येष्टिस्तु दीक्षितैः ॥
आचार्यादित्रयाणां स्यादध्वशुद्धिसमन्विता । अन्त्येष्टिरितराणां स्यादध्वशुद्धिविवर्जिता ॥

[3] Pour महाजालप्रयोग voir *Kriyākramadyotikāvyākhyā prabhā*, p. 409:

एतल्लक्षणमुक्तं मुद्रालक्षणे "अथ महाजालप्रयोगः—मृतशरीरे जीवन्यासार्थं प्रणवोच्चारसमुत्थितं नादं मुष्ट्या द्वादशान्तं नीत्वा, तेन नादेनैकीभूतहस्तः स्वकर्मानुगुणमितस्ततो गच्छन्तमात्मानमाकलय्य, नादशक्त्या जालमिव सर्वतः प्रसृतया गृहीतं विभाव्य, आत्ममन्त्रं समस्तं सुसूक्ष्ममुच्चरन्नादरूपां तर्जनीं त्रिधा भ्राम्य, दूरस्थितमात्मानमासन्नं विभाव्य, तमङ्गुष्ठमूलकन्यासाद्यङ्गुलिसंयोजनाद्गृहीत्वा, सृणिमुद्रया हृन्मन्त्रेण स्वहृदये समाकृष्य, स्वनादादात्मानं विभज्य, आत्ममन्त्रेण संहारमुद्रया गृहीत्वा, प्राणप्रवाहेण बहिर्निर्गत्य, बाह्यद्वादशान्ते पुनः संगृह्य, उद्भवमुद्रया तस्य देहे नियोज्य क्षिपेत्" इति ॥

तदावाहने त्वात्मनो देहं त्वप्रतिमं ज्वलेत् । प्रेतं च ज्ञानचक्षुषा दर्शयेद्देशिको बुधः ॥ ८९ ॥
पश्चाद्धृदयं ताडेत्तु नाराचमुद्रया बुधः । अर्घ्यं दत्त्वा च शिष्ये तु विद्यादेहं तु कल्पयेत् ॥ ९० ॥
आत्मानं तत्र संपूज्य तन्मन्त्रं तु समुच्चरन् । विशेषसंस्कारार्थं तु मूलमन्त्रशताहुतीः ॥ ९१ ॥
सर्वाङ्गोद्धूलनं कुर्यात्त्रिपुण्ड्राणि तु निक्षिपेत् । अष्टत्रिंशत्कलान्यासं विपरीतं तु तद्बुधः ॥ ९२ ॥
नेत्रबन्धनं कृत्वा च मण्डपाप्रदक्षिणं कुरु । शिवहस्तं च संकल्प्य शिष्यमूर्धनि योजयेत् ॥ ९३ ॥
दक्षिणे कर्णे शिष्यस्य शिवमन्त्रं समुच्चरन् । नेत्रबन्धं विसृज्याथ कृत्वा पुष्पाञ्जलिं बुधः ॥ ९४ ॥
नेत्रबन्धनं कृत्वा च मण्डपे तु समाचरेत् । [1]नाडीसंधानं शिष्ये तु देशिको जानु बन्धयन् ॥ ९५ ॥
दर्भेण नाडीं चित्ते तु कल्पयेत्संहारमुद्रया । शिष्यात्मानं समादाय त्वग्निहृदये योजयेत् ॥ ९६ ॥
मूलमन्त्रं समुच्चार्य कृत्वा विंशतिहोमकम् । अग्न्यात्मानं समादाय प्रेतदेहं प्रवेशयेत् ॥ ९७ ॥
पश्चाद्दर्भं च संवर्ज्य प्रायश्चित्तान्तहोमकम् । अघोरमन्त्रं संचिन्त्य शतं वार्धं तु तत्पदे ॥ ९८ ॥

[अध्वशोधनम्]

[2]पश्चान्निर्वाणसद्ये तु मूलमन्त्रशताहुतीः । शतं वार्धं तु होमेत्तु घटिकामूलमन्त्रकैः ॥ ९९ ॥
[3]अष्टाशताहुतीः कृत्वा षट्कोणे चापि कुण्डके । मन्त्राध्वदर्शनार्थं तु वृत्तकुण्डे च शिष्यके ॥ १०० ॥
मूलमन्त्रेण संचिन्त्य [4]विंशदाहुतिं सद्गुरुः । पदाध्वदर्शनार्थं तु पद्मकुण्डे तु होमयेत् ॥ १०१ ॥
मूलमन्त्रेण शतं होमं पश्चाद्वर्णाध्वदर्शनम् । त्रिकोणकुण्डे होमं च मूलमन्त्रं समुच्चरन् ॥ १०२ ॥
भुवनाध्वदर्शनार्थं योनिकुण्डेन चिन्तिते । मूलैः शताहुतीः कृत्वा पश्चात्तत्त्वाध्वदर्शनम् ॥ १०३ ॥
त्रिकोणकुण्डे हुत्वा च त्वात्ममन्त्रं समुच्चरन् । मूलमन्त्रेण युक्तं च शतं वार्धं तु होमयेत् ॥ १०४ ॥
कलाध्वदर्शनार्थं तु चतुष्कोणे च कुण्डके । कलामन्त्रैः शिवमन्त्रमष्टाशतं[5] तु होमयेत् ॥ १०५ ॥
चतुष्कोणेषु कुण्डानि तत्कुण्डानि तु चिन्तयन् । उत्तराभिमुखो भूत्वा रुचिरासनसंस्थितः ॥ १०६ ॥
प्रथमं तत्त्वदर्शनं चाध्वनां दर्शनं तथा । द्वितीयमात्मदर्शनं तृतीयं शिवदर्शनम् ॥ १०७ ॥

---

[1] Pour नाडीसन्धान voir *Kriyākramadyotikā* p. 409:

ततो नाडीसंधानं कुर्यात् । तद्यथा—दर्भमूलं मूलमन्त्रेण शिष्यकरतले दत्त्वा, तदग्रं स्वजङ्घासंधौ संनियोज्य, कुशाच्छलेन बिसतन्तुनिभां शिष्यनाडीं पिङ्गलया विनिःसृत्य, शिष्यहृदयं तत्पूरकेण प्रविश्य, रेचकेन विनिःसृत्य, स्वहृदयं पूरकेण प्रविश्य, एवं कुम्भवह्नीशाभ्यामपि नाडीं संधाय, तत्संधानार्थं मूलेनाहुतित्रयं जुहुयात् ।

[2] La forme grammaticale correcte est पश्चात्सद्योनिर्वाणे

[3] La forme grammaticale correcte est अष्टाधिकशताहुतीः

[4] La forme grammaticale correcte est विंशत्याहुतिं.

[5] La forme grammaticale correcte est अष्टाधिकशतं

षडध्वमार्गाविघ्नार्थं [1]पञ्चास्त्रं तु मनुं स्मरन् । [2]पञ्चब्रह्मेण मूलेन शतं वार्धं तु होमयेत् ॥ १०८ ॥

[कलाशोधनम् [3]]

मूर्धादिपादपर्यन्तं कलासूत्रेण बन्धयेत् । पञ्चभागं च कृत्वा च मूर्धवक्त्रं तु कल्पयेत् ॥ १०९ ॥
हृदयं नाभिगुह्यं च शान्त्यतीतां तु विन्यसेत् । शान्तिविद्याकले चैव प्रतिष्ठदीनि विन्यसेत् ॥ ११० ॥
शिष्ये हृदयपद्मे च पञ्चासनं तु विन्यसेत् । शक्त्यादिशक्तिपर्यन्तं पूजयेच्छाश्वतं शिवम् ॥ १११ ॥
पाद्याचमनार्घ्यं दत्वा धूपदीपं सुयोजयेत् । पश्चात्कुम्भं तं संपूज्य तन्मन्त्रेण जपं बुधः ॥ ११२ ॥

[निवृत्तिकलाशोधनम् [4]]

निवृत्त्यादिसन्निधानार्थममन्त्रेणाहुतित्रयम् । ब्रह्म चावाह्य संपूज्य द्वादशाज्यं तु होमयेत् ॥ ११३ ॥
प्रथमं वागीश्वरौ वाह्य[5] द्वितीयं वा तथा भवेत् । तन्मन्त्रेण तु संपूज्य पञ्चपञ्चाहुतिर्भवेत् ॥ ११४ ॥
शिवं हृदये संभाव्य शिवमन्त्रेण वर्धयन् । अङ्कुशमुद्रयाकृष्य चात्ममन्त्रं समुच्चरन् ॥ ११५ ॥
मन्त्रेण शिवे संयोज्य चात्मानं ग्राह्य हस्तके । मन्त्रे पदे च वर्णे च व्यापयेद्भूततत्त्वकम् ॥ ११६ ॥
[6]वागीं वागीश्वरं चैव संयोजयेत्तु जीवके । आत्ममन्त्रेण संपूज्य कृत्वा पञ्चाहुतिं बुधः ॥ ११७ ॥

---

[1] Pour पञ्चास्त्र voir *Vātulaśuddhākya* 8, 103b-106a:

अस्त्रभेदमथ शृणु ।
शिवास्त्रं क्षुरिकास्त्रं च तथा पाशुपतास्त्रकम् । व्योमास्त्रं चैव घोरास्त्रमस्त्रं पञ्चविधं भवेत् ॥
षडक्षरं शिवास्त्रं स्यात्क्षुरिका त्वष्टवर्णकम् । पाशुपतं तु पञ्चार्णं व्योमास्त्रं तु दशार्णकम् ॥
चत्वारिंशदघोरास्त्रमेवं पञ्चास्त्रमुच्यते ॥

[2] La forme grammaticale correcte est पञ्चब्रह्मणा

[3] cf. *Kāmikāgama* II 27, 70-77:

ततस्तत्त्वानि शोधयेत् ।
निवृत्त्यादिकमादाय युगपद्वा क्रमेण वा । कलाः स्वस्वाधिपाः प्राग्वद्वह्नौ संपूजयेत्ततः ॥
ताडनादिविभेदेन लिङ्गादादाय लिङ्गिनम् । योजयेत्पूर्ववत्तत्र जन्मकर्माधिकारिताम् ॥
भोगो लयोऽथ सशुद्धिस्तत्त्वानां स्रोतसामपि । तिरोभावः पशुत्वस्य पाशविश्लेषभेदने ॥
तद्दाहो व्युत्क्रमे कृत्यं कारणाद्वा पशूद्धृतिः । विश्लिष्य तेन पूर्वेण पशुं निर्वाणकर्मणा ॥
एवमेवोपरिष्टाच्च पाशानन्यान्विशोधयेत् । उक्तया कर्मपद्धत्या तानप्येवं शिवावधि ॥
अग्नेरुद्धृत्य होमान्ते योजयेदमले पदे । यद्युक्तो न पुनर्जातु पराधीनो भवेदणुः ॥
कृतनिःशेषपाशान्तमिष्टेशं च विसर्जयेत् । विद्यादेहं च तद्देहे संहृत्य स्वपदे गुरुः ॥
स्थण्डिलेशानमप्येवं संहृत्य स्वपदे गुरुः ॥

[4] Pour निवृत्तिकलाशोधन voir *Kriyākramadyotikā* pp. 417-422.

[5] La forme grammaticale correcte est वागीश्वरावावाह्य ; la première lettre du mot आवाह्य a été omise ici pour une raison métrique.

[6] On trouve ici dans ce *paṭala* la mot वागी pour वागीशी ; le lettre शी dans वागीशी a été omise pour une raison métrique.

निश्शेषकरणार्थाय हृदयद्वादशाहुतिम् । पाशविमोचनार्थाय पञ्चपञ्चाहुतित्रयम् ॥ ११८ ॥
गुह्ये तु पाशसूत्रं तु विच्छिन्नमस्त्रमुच्चरन् । स्रुवमध्ये तु तत्सूत्रं वर्तुलं घृतपूर्णकम् ॥ ११९ ॥
शिखायां मुण्डकेशे वा चाहुतीरस्त्रमुच्चरन् । पश्चादर्घ्यं तु दद्यात्तु वागीशे योग उच्यते ॥ १२० ॥
जन्माधिकारभोगार्थं शिखास्त्रमूलमन्त्रकैः । पञ्चपञ्चाहुतिं कुर्यादर्घ्यं दत्वा तु नाग्निकम् ॥ १२१ ॥
पश्चाद्ब्रह्म तु पूजेत ब्रह्माणं तु विसर्जयेत् । कुण्डादात्मानमादाय पूर्वसूत्रेण योजयेत् ॥ १२२ ।
वागीं वागीश्वरं पूज्य पश्चाद्विसर्जनं बुधः । वौषडन्तेन मूलेन कृत्वा पूर्णाहुतिं बुधः ॥ १२३ ॥
एवं निवृत्तिकलाशुद्धिः शुद्धाध्वानं तु चिन्तयेत् ।

[प्रतिष्ठाकलाशोधनम्[1]]

प्रतिष्ठाकलां च पूर्वेण मन्त्रादिभुवनान्तकम् ॥ १२४ ॥
योगयुक्तां तु चिन्तेत्तु विष्णुमावाह्य पूजयेत् । वागीवागीश्वरौ चैव तन्मन्त्रेण त पूजयेत् ॥ १२५ ॥
पञ्चपञ्चाहुतिं कृत्वा तन्मन्त्राणि समुच्चरन् । शिवं हृदये पूर्वेणात्मानमाकृष्य हस्तके ॥ १२६ ॥
वागीवागीश्वरयोश्च संयोगमथ चात्मनि । निश्शेषकरणार्थाय शिरोमन्त्रदशाहुतीः ॥ १२७ ॥
पाशविमोचनार्थं तु चास्त्रमन्त्रशताहुतीः । नाभिसूत्रं तु छिन्देत्तु पूर्ववत्स्रुवमध्यगम् ॥ १२८ ॥
आज्यपूर्णं तु स्रुग्वद्धं चास्त्रमन्त्रेण होमयेत् पश्चादर्घ्यं च दत्वा तु चात्मानं तु सुपूजयेत् ॥ १२९ ॥
जन्माधिकारभोगार्थं शिखास्त्रमूलमन्त्रकैः । पञ्चपञ्चाहुतिं कृत्वा क्षुरिकास्त्रं समुच्चरन् ॥ १३० ॥
विष्णुं च कुण्डे संपूज्य तन्मन्त्रेणाहुतित्रयम् । पश्चाद्विष्णोर्विसर्गार्थमात्मानं तत्र पूजयेत् ॥ १३१ ॥
कुण्डादात्मानमादाय पूर्वसूत्रेण योजयेत् । आत्मनार्घ्यं च दत्वा तु वाग्वागीशौ विसर्जयेत् ॥ १३२ ॥
पूर्वेण चैव संयोज्य कृत्वा पूर्णाहुतिं बुधः । प्रतिष्ठाकलायाः शुद्धिस्तु पृथग्रुद्रं तु पूजयेत् ॥ १३३ ॥

[विद्याकलाशोधनम्[2]]

तन्मन्त्रेणाहुतिं हुत्वा चार्घ्यं दत्वा च रुद्रके । वागीवागीश्वरौ[3]वाह्य तन्मन्त्रेणाहुतित्रयम् ॥ १३४ ॥
पूर्वेणात्मानमादाय कुण्डके तं तु पूजयेत् । निःशेषकरणार्थाय शिखामन्त्रशताहुतीः ॥ १३५ ॥
तिरोधपाशमोक्षार्थं पञ्चाहुतिं तु मूलकम् । हृदयसूत्रं विच्छिन्नं वर्तुलं घृतपर्णकम् ॥ १३६ ॥
स्रुवमध्ये तु निक्षिप्य त्वस्त्रमन्त्राहुतिं बुधः । पाद्याचमनार्घ्यं दत्वा चात्मानं तु सुपूजयेत् ॥ १३७ ॥

---

[1] Pour प्रतिष्ठाकलाशोधन voir *Kriyākramadyotikā* pp. 422-426.

[2] Pour विद्याकलाशोधन voir *Kriyākramadyotikā* pp. 426-429.

[3] La forme grammaticale correcte est वागीशीवागीश्वरावावाह्य ; voir p. 212 note 5.

जन्माधिकारभोगार्थं शिखास्त्रमूलमन्त्रकैः । पञ्चपञ्चाहुतिं कृत्वा पूर्णां रुद्रं विवर्जयेत् ॥१३८॥
प्रायश्चित्तं तु होमेत्तु ह्यघोरमन्त्रमुच्चरन्[1] ।

[शान्तिकलाशोधनम्[2]]

निःशेषकरणार्थाय कवचेन शताहुतिः ॥ १३९ ॥
तिरोधपाशमोक्षार्थं स्वस्त्रमन्त्रेण होमयेत् । अष्टाहुतिं तु कृत्वा च कल्पयेत्संहारमुद्रया ॥ १४० ॥
[3]आत्ममादाय हस्ते तु तन्मन्त्रं तु समुच्चरन् । अग्निहृदये संयोज्य चात्मानं तु समर्चयेत् ॥ १४१ ॥
तन्मन्त्रेणाहुतिं हुत्वा द्वादशाहुतिलाजकैः । निःशेषार्थं तु होमेत्तु पञ्चपञ्चाहुतिं बुधः ॥ १४२ ॥
वक्त्रसूत्रं तु विच्छिन्नं शिवास्त्रमन्त्रमुच्चरन् । वर्तनात्स्रुवमध्ये तु चाज्यपूर्णं तु होमयेत् ॥ १४३ ॥
वागीं वागीश्वरं वर्जेत्प्रायश्चित्तं तु होमयेत् । अस्त्रमन्त्रं समुच्चार्य चाष्टाशतं[4] तु होमयेत् ॥ १४४ ॥

[शान्त्यतीतकलाशोधनम्[5]]

एवं शान्तिकलाशुद्धिः शान्त्यतीतमतः परम् । सदाशिवं समावाह्य तन्मन्त्रेणाहुतित्रयम् ॥ १४५ ॥
वागीवागीश्वरौ वाह्य पञ्चाहुतिं तु होमयेत् । निःशेषकरणार्थाय मूलमन्त्रशताहुतिम् ॥ १४६ ॥
तिरोधपाशमोक्षार्थं कवचमन्त्रं तु चिन्तयन् । पञ्चपञ्चाहुतिं कृत्वा त्रिविधेन तु होमयेत् ॥ १४७ ॥
[6]आत्ममादाय पूर्वेण त्वग्निहृदये योजयेत् । पाशसूत्रं शिखाच्छेदं गोमयेनाविलं बुधः ॥ १४८ ॥
वर्तुलं तत्तु स्रुङ्मध्ये त्वाज्यपूर्णं च होमयेत् । पश्चात्स्रैश्चापि मूलेन पूर्णाहुतिं तु देशिकः ॥ १४९ ॥
प्रायश्चित्तार्थमस्त्रेण त्वष्टाहुतीस्तु होमयेत् । सदाशिवं तु संस्पृश्य पूर्णाहुतिं तु होमयेत् ॥ १५० ॥
कुण्डादात्मानमादाय शिवतत्त्वेन योजयेत् । त्रिविधव्याप्तिं चिन्तेत्तु शिवभोगं तथात्मके ॥ १५१ ॥
आत्मभोगं शिवे भोगं चिन्तयेत्तु सुयोजयेत् । पश्चात्कुण्डे शिवं पूज्य पराङ्मुखं च वर्जयेत् ॥ १५२ ॥
पराङ्मुखार्घ्यं दत्त्वा चाप्युद्वासनं तु पूर्ववत् । अग्नेर्देवांस्तु संवर्ज्य वागीं वागीश्वरं तथा ॥ १५३ ॥
पराङ्मुखं च संपूज्य सर्वदेवांस्तु तद्बुधः । अन्तर्बलिं तथा कृत्वा बहिर्बलिस्तथा भवेत् ॥ १५४ ॥

---

[1] Ce *paṭala* se trouve dans les manuscrits A et B seulement ; mais le ms. B omet les *śloka* 23 à 169. Il semble qu'il y a ici une lacune. On peut supposer, d'après le contenu d'autres *paṭala* semblables que la portion manquante consiste en *śloka* sur la dernier portion de प्रतिष्ठाकलाशोधन et la première portion du शान्तिकलाशोधन.

[2] Pour शान्तिकलाशोधन voir *Kriyākramadyotikā* pp. 429-432.

[3] La forme grammaticale correcte est आत्मानमादाय

[4] La forme grammaticale correcte est अष्टाधिकशतं

[5] Pour शान्तिकलाशोधन voir *Kriyākramadyotikā* pp. 442-435.

[6] voir note 3.

[दहनविधिः[1]]

अर्घ्यपात्रं समादाय कुण्डदेशात्तु वर्जयेत् । चितास्थानप्रवेशे तु काष्ठशुद्ध्यर्थं च देशिकः ॥ १५५ ॥
गोमयेनार्घ्यतोयेन त्वस्त्रमन्त्रं समुच्चरन् । उत्तराभिमुखो भूत्वा रुचिरासनसंस्थितः ॥१५६ ॥
चक्रादींश्चापि वज्रान्तं विपरीतांस्तु पूजयेत् । ईशानादग्निपर्यन्तं तन्मन्त्रेण बलिं तथा ॥ १५७ ॥
धूपदीपं तथा दत्वा तद्देवांस्तु विवर्जयेत् । शिवस्थाने च तन्मध्ये चात्मनैनं तु पूजयेत् ॥ १५८ ॥
इन्धनोपरि मध्ये तु नववस्त्रेण युक्तके । तथोपरि तिलान्दर्भान्परिस्तीर्यास्त्रमन्त्रकैः ॥ १५९ ॥
तत्स्थाने चापि तन्मध्ये पाशुपतास्त्रमर्चयेत् । धूपदीपं तथा दत्वा चास्त्रदेवांस्तु वर्जयेत् ॥ १६० ॥
पश्चाच्छवं समादाय त्वप्रदक्षिणं मिश्रयेत् । कुम्भवर्धनिकं देवं पराङ्मुखं च पूजयेत् ॥ १६१ ॥
अस्त्रदेवांस्तु द्वारेषूद्वासयेत्तु तदा बुधः । शवशिरसि दीप्तेन कुण्डाग्निना च प्रज्वलेत् ॥ १६२ ॥
स्रुक्स्रुवं च समादाय त्वाज्यपर्णं तु देशिकः । शिरःस्थानादिपादान्तं होमयेत्तु तदा गुरुः ॥ १६३ ॥
त्वमग्ने मन्त्रमुच्चार्य स्रुक्स्रुवेणाज्ययुक्तकम् ।

[दहनानन्तरकरणीयविधिः[2]]

वर्धनीं भुजयुक्तां च कृत्वा तद्धारयेज्जलम् ॥१६४॥
प्रेताप्रदक्षिणं कृत्वा कवचमन्त्रं समुच्चरन् । शिरःस्थाने च ताडेत्तु वर्धनीं त्वमितं गुरुः ॥ १६५ ॥
मण्डपादीनि संवर्ज्य पराङ्मुखं च देशिकः । अस्त्रमन्त्रं च संचिन्त्य पश्चात्स्नानं समाचरेत् ॥ १६६ ॥
ईशं सदाशिवं रुद्रं स्कन्दं नन्दीशमेव च । पञ्चास्त्रेण च घोरेण तर्पयेत्त्वमितं बुधः ॥ १६७ ॥
मन्त्रहीनं क्रियाहीनं द्रव्यहीनं च [पूरयेत्] । मूलं च पञ्चब्रह्माणि पञ्चास्त्रं च मनुं स्मरन् ॥ १६८ ॥
एवं समुच्यतेऽन्त्येष्टिः पञ्चपातकनाशनी ॥ १६९ ॥

इति [3]श्रीमद्रौरवतन्त्रे [क्रियापादे] अन्त्येष्टिविधिर्नाम[4] [5]षट्चत्वारिंशः पटलः

[1] cf. *Kāmikāgama* II 27, 78-84a:
शवमभ्येत्य शय्यायामारोप्य प्रावृतं कुशैः । याम्यशीर्षमुदक्पादं मुक्तानां स्रुक्स्रुवान्वितम् ॥
आचार्यं साधकं चैव ताभ्यामन्यं तदुज्झितम् । तुरुष्कागरुकर्पूरचन्दनोत्तरदारुभिः ॥
संछाद्यानीय कुण्डाग्निं शिरोदेशे विनिक्षिपेत् । मधुसत्तैलसर्पींषि प्रक्षिप्योज्ज्वलितेऽनले ॥
सर्पिर्मधुपयःपूर्णां स्रुचमुत्क्षिप्य पूजिताम् । गुरुः स्थित्वा शिरोदेशे सौम्याशाभिमुखाननः ॥
पावकास्ये क्षिपेद्धारामिति वाक्यमुदीरयन् । "त्वमग्ने दक्षिणः कालः कालेनैवोपपादिताम् ॥
गृहाण मन्त्रसंपूतां शय्यामेनां महाहुतिम् । प्रक्षिप्यावाङ्मुखौ तत्र स्रुक्स्रुवावप्यनन्तरम् ॥
नियुज्य संस्क्रियाकर्मकुशलांश्चतुरो गुरुः ॥

[2] cf *Kāmikāgama* II 27, 84b-8?a:
अप्रदक्षिणमादाय गृहीत्वा खड्गवर्धनीम् । उत्क्षिप्यारोप्य वामांसे छन्नमूर्धा पराङ्मुखम् ॥
धारां विमुञ्च्य संयुक्तस्वधर्मस्थैः प्रदक्षिणम् । अपसव्यक्रमात्कृत्वा वर्धनीं तामधोमुखीम् ॥
क्षिपेत्तत्र यतो देशादुद्धृता सास्त्रवर्धनी । । ततो जलाशयं गत्वा स्नात्वा प्रस्तीर्य सत्कुशान् ॥
तदूर्ध्वमपसव्येन प्रणवं हृदयं पुरा । शुद्धात्मन्निति चेशाने शान्तपर्यन्तनामयुक् ॥
स्कन्दपूर्वं गणेशान्तं नमो वा भवपश्चिमम् । उक्त्वा यथार्हं मन्त्री त्रिः स्वधान्तं तर्पयेत्पुनः ॥

[3] A ; श्री pour श्रीमद् [4] A omet नाम [5] A ; सप्त pour षट्

## APPENDICE

Dans les deux manuscrits utilisés pour cette édition du *Rauravāgama* nous trouvons après le *paṭala* 26, un *paṭala* intitulé *Pañcasādākhyavidhi*; mais il est très difficile de l'accepter comme faisant partie de cet *āgama* pour les raisons suivantes :

(1) La version présente a été enseignée par Īśvara au sage Ruru; c'est ce nom seul qui se trouve à diverses reprises invoqué dans le texte, et c'est de lui que ce dernier dérive son nom. Or le *paṭala* en question est adressé à Ṣaṇmukha. cf. *Śloka* 1a et 22a.

(2) Le dernier śloka du *paṭala* indique que le *paṭala* suivant traite de la *śaivotpatti*: cependant nous ne trouvons rien de tel ensuite.

(3) A propos des formes de Maheśa, ce *paṭala* énumère 25 formes, ce qui n'est pas en accord avec le *pratimālakṣaṇapaṭala* (paṭala 35) qui ne donne l'énumération et la définition que de 14 formes.

(4) La plupart des *śloka* de ce même *paṭala* se trouvent dans le *Vātulaśuddhākya*, un *upāgama*. Les *śloka* 1 à 86 du *Pañcasādākhyavidhipaṭala* et les *śloka* 18b à 127a du *Vātulaśuddhākhya* sont, à l'exception de quelques variantes, presque semblables même pour les *śloka* qui sont adressés à *Ṣaṇmukha*. Les *śloka* 87a à 107 de ce *paṭala* et les *śloka* 127b à 140 du *Vātulaśuddhākhya* sont de contenu presque semblable avec une expression différente.

Toutes ces raisons font qu'il est difficile d'accepter ce *paṭala* comme partie intégrante du *Rauravāgama*; il est très probablement une interpolation faite au manuscrit original. Pourtant comme il se trouve dans les deux manuscrits: A (Kiḷvelūr), et B (Dharmapuram) nous le donnons en appendice.

### [पञ्चसादाख्यविधिः[1]]

शिवस्य लक्षणं वक्ष्ये समासाच्छृणु षण्मुख । शिवं परात्परं सूक्ष्मं नित्यं सर्वगमव्ययम् ॥ १ ॥

---

[1] pour पञ्चसादाख्यविधि voir *Aṃśumatkāśyapa* 51, *Acintyaviśvasādākhya* 29, 30 et 37, *Ajita* 1 à 3, *Kāmika* I 4 at II 3, 37 et 43, *Kāraṇa* I 30, 64, 71, et 73 et II 8, *Kiraṇa* I 3 et 4 *Cintya* 27 et 33, *Dipta* 53, *Niśśvāskārikā*, *Jñānakāṇḍa* 49, *Pauṣkara*, *vidyāpāda* 1, *Makuṭa*, 4, *Mataṅgapārameśvara*, *vidyāpāda* 3, 4 et 5, *Mṛgendra*, *vidyāpāda* 3, *Yogaja* 6, *Raurava*, *vidyāpāda* 1, 2, 4 et 5, *Vātulaśuddha* 1, *Vīra* 38, *Sahasra* ', *Suprbheda* I 33 et 34 et IV 1 et *Svāyambhuva* 35 et 36.

[1]अनिन्द्रतमनौपम्यमप्रमेयमनामयम् । [2]शुद्धत्वाच्छिवमित्युक्तं परादूर्ध्वं परात्परम् ॥ २ ॥
व्योमातीतं सुसूक्ष्मं हि नित्यं कारणशून्यकम् । व्याप्तेः सर्वगतं प्रोक्तमक्षीणं चाव्ययं भवेत् ॥ ३ ॥
अमलं [3]स्यादनिन्द्यं चाप्यसादृश्यमनूपमम् । प्रमाणव्यतिरिक्तत्वादप्रमेयमिति स्मृतम् ॥ ४ ॥
अप्रमेयमनाकारमदृश्यत्वादनूपमम् [4]। [5]निर्गुणत्वाद्विशेषेण त्वनामयमिति स्मृतम् ॥ ५ ॥
इत्येतैर्लक्षणैर्युक्तं शिवरूपमिहोच्यते ।

[शिवसृष्टिः]

सृष्ट्यर्थं सर्वतत्त्वानां लोकस्योत्पत्तिकारणम् ॥ ६ ॥
योगिनामुपकाराय स्वेच्छया [6]चिन्तयते शिवः । तच्छिवस्य पराशक्तिः [7]सहस्रांशेन जायते ॥ ७ ॥
[8]तच्छक्तेस्तु सहस्रांशादादिशक्तिसमुद्भवः । आदिशक्तिसहस्रांशादिच्छाशक्तिसमुद्भवः ॥ ८ ॥
इच्छाशक्ति [9]सहस्रांशाज्ज्ञानशक्तिसमुद्भवः । ज्ञानशक्तिसहस्रांशात्क्रियाशक्तिसमुद्भवः ॥ ९ ॥
एताश्च शक्तयः पञ्च निष्कलाश्चेति कीर्तिताः ।

[शक्तिसृष्टिः, तत्र पञ्चसादाख्यम्]

शिवसृष्टिरिति प्रोक्ता ; शक्तीनां सृष्टिरुच्यते ॥ १० ॥
योगिनां च यतीनां च ज्ञानिनां मन्त्रिणां तथा । ध्यानपूजानिमित्ताय निष्कलं सकलं भवेत् ॥ ११ ॥
प्रथमं शिवसादाख्यममूर्तं तु द्वितीयकम् । तृतीयं [10]मूर्तसादाख्यं चतुर्थं कर्तृनामकम् ॥ १२ ॥
पञ्चमं कर्मसादाख्यं पञ्चसादाख्यमुच्यते । सदाशिवस्तथेशश्च [11]ब्रह्मा वै चेश्वरः स्मृतः ॥ १३ ॥
ईशानश्चैव विज्ञेयास्तत्त्वभेदेन कीर्तिताः । ईशसदाशिवयोर्मूर्तिरीशान इति चोच्यते ॥ १४ ॥
[12]मूर्तिर्ब्रह्मेति संप्रोक्तं कर्ता चैवेश्वरो मतः । कर्म चेशान इत्युक्तमित्येवं हि द्विधा भवेत् ॥ १५ ॥
परात्परं परं चैव सूक्ष्माच्च सूक्ष्ममेव हि । स्थूलं चैव तु सूक्ष्मं हि शिवादि परिलक्ष्यते ॥ १६ ॥

[पञ्चतत्त्वेषु तत्त्व-मूर्ति-प्रभावाः]

एतेषु पञ्चतत्त्वेषु विशेषस्त्वधुनोच्यते । तत्त्वं मूर्तिः प्रभावश्च त्रिभेदो विद्यते क्रमात् ॥ १७ ॥
शिवादि तत्त्वमित्युक्तं मूर्तिः सदाशिवादयः । तयोर्योगेन यद्रूपं तद्रूपं भाव इष्यते ॥ १८ ॥
भावः सादाख्यमित्युक्तमित्येवं परिलक्ष्यते । सन्ततं शिवभावत्वात्सादाख्यमिति कीर्तितम् ॥ १९ ॥
निष्कलं देहि चेत्युक्तं सकलं देह उच्यते । देहिदेहस्य [13]बन्धत्वं भावरूपमिति स्मृतम् ॥ २० ॥

---

1 A : अतीन्द्रियमनोगम्यमनामयमिहोच्यते  2 A : पशुत्वात् pour शुद्धत्वात्
3 A : चाद्भुतं ज्ञेयं pour स्यादनिन्द्यं च  4 A : अदृश्यं च मनोपमम्  5 A : निर्गुणत्वाविशेषेण
6 B : गृह्यते तनुम्  7 A : सहस्रांशेषु  8 A : तच्छक्तेषु  9 A : सहस्रांशे pour सहस्रांशात्
10 A : मूर्ति pour मूर्तं  11 B : ब्रह्माङ्गे वेश्वरः  12 A : मूर्तिर्ब्रह्ममिति  13 A : बन्धुत्वं

सर्वेषां [1]ध्यानपूजार्थं [2]सकलं निष्कलं भवेत् ।[3]एवं ज्ञात्वा विशेषेण सर्वकर्म समाचरेत् ॥ २१ ॥

[पञ्चसादाख्यतत्त्वानामुद्भवः, तेषां वर्णः रूपं च]

पञ्चसादाख्यतत्त्वानामुद्भवं हि पृथक् पृथक् । एषां वर्णं च रूपं च समासाच्छृणु षण्मुख ॥ २२ ॥

[शिवसादाख्यम्]

शान्त्यतीता पराशक्तिस्तस्याः पर्यायवाचकौ । [4]पराशक्तेर्दशांशेन शिवसादाख्यसंभवः ॥ २३ ॥
[5]पराशक्त्युद्भवत्वाच्च शुद्धत्वाच्छिवमुच्यते । तद्रूपं सूक्ष्मरूपेण परं ज्योतिरिति स्मृतम् ॥ २४ ॥
[6]विद्युद्रूपमिवाकाशे प्रत्यक्षं सर्वतोमुखम् । शिवतत्त्वमिदं प्रोक्तं तत्त्वानामखिलालयम् ॥ २५ ॥
शिवसादाख्यमेवोक्तममूर्तं[7] च तथैव च । आदिशक्तिश्च शान्तिश्च तस्याः पर्यायवाचकौ ॥ २६ ॥

[अमूर्तसादाख्यम्]

आदिशक्तेर्दशांशेन ह्यमूर्तस्य समुद्भवः । आदिशक्तेरमूर्तत्वादमूर्तं चेति कीर्तितम् ॥ २७ ॥
[8]अमूर्तत्वात्कलाहीनं भमध्ये [9]लिङ्गवद्भवेत् । सूर्यकोटिप्रतीकाशं ज्योतिस्तम्भाकृतिर्भवेत् ॥ २८ ॥
तस्यान्तर्गतमूर्तित्वान्मूर्तितत्त्वाद्यगोचरम् । एतद्वै दिव्यलिङ्गं तु मूलस्तम्भ इहोच्यते ॥ २९ ॥
लिङ्गे वै सर्वमुत्पन्नं लयस्तत्रैव चोच्यते । [10]अमूर्तमेवमाख्यातं [11]समूर्तं तु तथा शृणु ॥ ३० ॥

[मूर्तसादाख्यम्]

इच्छाशक्तिश्च विद्या च तस्याः पर्यायवाचकौ । तच्छक्तेस्तु दशांशेन यथामूर्तिरिहोच्यते ॥ ३१ ॥
[12]इच्छामूर्तेर्गुणित्वाच्च तस्मान्मूर्तिरुदाहृता । [13]मूर्तिमत्वात्कलायुक्ता रूपं चेति प्रकीर्तितम् ॥ ३२ ॥
ज्वालाग्निसदृशप्रख्यं दिव्यालिङ्गाकृतिर्भवेत् । तस्योर्ध्वांशैकभागे तु चैकवक्त्रेण संयुतम् ॥ ३३ ॥
त्रिनेत्रं चारुवदनं सर्वावयवसंयुतम् । द्विहस्तं च द्विपादं च सर्वलक्षणसंयुतम् ॥ ३४ ॥
दक्षहस्तेन शूलं च वामहस्ते कपालकम् । सर्वावयवसंयुक्तं सर्वाभरणभूषितम् ॥ ३५ ॥
सर्वज्ञानगुणोपेतं [14]लिङ्गमूर्तमुदाहृतम् । मूर्तसादाख्यमेवोक्तं कर्तृसादाख्यमुच्यते ॥३६ ॥

[कर्तृसादाख्यम्]

ज्ञानं चैव प्रतिष्ठा च तस्याः पर्यायवाचकौ । ज्ञानशक्तेर्दशांशेन कर्तृसादाख्यमुच्यते ॥ ३७ ॥
ज्ञानकर्तृस्वभावत्वात्कर्तृनामेति [15]कीर्तितम् । ज्ञान[16]चिच्छुद्धरूपत्वात्स्फटिकाभं तदुच्यते ॥ ३८ ॥

---

[1] A : ज्ञान pour ध्यान   [2] B : निष्कलं सकलं भवेत्
[3] Dans le ms. A le demi-*śloka* 21b se trouve après 22a.
[4] A : पराशक्तिदशांशेन   [5] B : पराशक्त्यात्मकत्वाच्च   [6] A : विद्यारूपम् pour विद्युद्रूपम्
[7] A : अमूर्तिं pour अमूर्तं   [8] A : अमूर्ति pour अमूर्त   [9] A : योग pour लिङ्ग
[10] A : अमूर्तिरिति विख्याता   [11] B : समूर्तिं तु ततः शृणु   [12] A : इच्छामूर्तिगुणत्वाच्च
[13] A : मूर्तितत्त्वात्   [14] B : लिङ्गमूर्तिरुदाहृतम्   [15] B : कीर्त्यते   [16] B : स्फिक pour चित्

दिव्यलिङ्गं महादीर्घं महास्थूलं तथाश्रितम् । तस्य मध्यस्थिता मूर्तिरीश्वरांशे तु कारणम् ॥ ३९ ॥
चतुर्मूर्धचतुर्वक्त्रनेत्रद्वादशभिर्युतम् । चतुरास्यचतुर्नासावसुश्रोत्रसमन्वितम् ॥ ४० ॥
अष्टहस्तं द्विपादं च सर्वलक्षणसंयुतम् । त्रिशूलं परशुं खड्गमभयं दक्षिणे करे ॥ ४१ ॥
पाशं नागं च घण्टां च वरदं वामहस्तके । सर्वालंकारसंयुक्तं सर्वाभरणभूषितम् ॥ ४२ ॥
एवं रूपसमोपेतं लिङ्गाकारमिहोच्यते । कर्तृसादाख्यमेवोक्तं कर्मसादाख्यमुच्यते ॥ ४३ ॥

[कर्मसादाख्यम्]

निवृत्तिश्च क्रियाशक्तिस्तस्याः पर्यायवाचकौ । क्रियाशक्तेर्दशांशेन कर्मसादाख्यमुच्यते ॥ ४४ ॥
[1]क्रिया कर्मेति विज्ञेया तस्मात्कर्मेति नामतः । लिङ्गं [2]शम्भुरिति ज्ञेयं पीठं शक्तिरुदाहृतम् ॥ ४५ ॥
बिन्दुमध्यगतो नादो नादमध्ये ध्वनिः स्मृतः । ध्वनिमध्यगतं तत्त्वं तत्त्वमध्यगतं शिवम् ॥ ४६ ॥
तस्माच्छिवमयं लिङ्गं सर्वतत्त्वालयं स्मृतम् । लिङ्गे तु जायते तत्र जगत्स्थावरजङ्गमम् ॥ ४७ ॥
तस्माँल्लिङ्गं विशेषेण कर्मरूपमुदाहृतम् । कर्मोदये तु सृष्टिः [3]स्यात्क्रियान्ते संहृतिर्भवेत् ॥४८ ॥
एतत्कर्मेशरूपं च सृष्टिस्थितिलयात्मकम् । पञ्चसादाख्यसंयोगात्कर्मसादाख्यमुच्यते ॥ ४९ ॥
शिवसादाख्यभेदेन शिवरूपं समाश्रितम् । [4]अमूर्तं हि स्वभावेन शिवसादाख्यमाश्रितम् ॥ ५० ॥
[5]मूर्तरूपं विशेषेण त्वमूर्तादीन्समाश्रितम् । कर्तृसादाख्यरूपं हि[6] [7]मूर्ताद्यपि तथा विदुः ॥ ५१ ॥
[8]कर्मरूपं क्रमेणैव कर्त्रादि च समाश्रितम् । प्रति[9]वक्त्रक्रमेणैव चैकैकं तु समाश्रितम् ॥ ५२ ॥
तस्मात्कर्मस्वरूपं च मूर्तादेराश्रितं विदुः । सर्वतत्त्वात्मकं ज्ञेयं सर्वाधारमिति स्मृतम् ॥ ५३ ॥

[कर्मसादाख्यस्य पिण्डरूपत्वम्]

तत्त्वे तु मूर्तिपिण्डत्वात्पिण्डाकारमुदाहृतम् । पिण्डस्थं पिण्डमध्यस्थं पिण्डेन तु [10]पुटीकृतम् ॥ ५४ ॥
पिण्डेन पिण्डितं पिण्डं पिण्डरूपमिहोच्यते । एतच्छिवमयं पिण्डं [11]सर्वतत्त्वमयं विदुः ॥ ५५ ॥

[कर्मसादाख्यात् सर्वतत्त्वादिसंभवः]

[12]पञ्चमूर्तं पञ्चवक्त्रं पञ्चतत्त्वात्मकं विदुः । मूर्तीनां देहभेदेन गुणपञ्चात्मकैर्युतम्[13] ॥ ५६ ॥
तद्देहे तु समासेन [14]सर्वतत्त्वादिसंभवः । तस्य वक्त्रे तु [15]संभूतान्सिद्धान्ताञ्छैवकान्विदुः ॥ ५७ ॥

---

[1] A : क्रिया कर्म इति ज्ञेया [2] A : शुभमिति [3] A : स्यात्क्रिया कर्महृतिर्भवेत् [4] A : अमूर्तिर्हि
[5] A : मूर्तिरूपं [6] A : मूर्तिर्हि pour रूपं हि [7] A : मूर्तादि वितथां विदुः
[8] A : कर्मरूपक्रमेणैव वक्त्रादि च [9] A : वर्ण pour वक्त्र [10] A : पदीकृतम् [11] A : सर्वतत्त्वमलं
[12] A : पञ्चमूर्ति पञ्चवक्त्रे [13] B : धृतम् pour युतम [14] B : सर्वतत्त्वानि संभवेत्
[15] A : संभूता सिद्धान्तानि शिवं विदुः

सर्वज्ञानमयं देवं सर्वकारणकारणम् । एवं लिङ्गे तु कर्म स्यान्निष्कलं सकलं शिवम् ॥ ५८ ॥

[कर्मसादाख्यं सकलनिष्कलम्]

देहस्थं सकलं ज्ञेयं निष्कलं देहवर्जितम् । देहं चाहुः कलोपेतं [1]धातुर्देहमिति स्मृतम् ॥ ५९ ॥
[2]तत्कलादि च धातूंश्च षडङ्गैस्तु प्रकल्पयेत् । [3]सर्वाङ्गैरपि संपूर्णा सर्वावयवसंयुता ॥ ६० ॥
एवं तु स्थितिमात्रेण मूर्तिः सकलरूपधृक् । भावे तु लिङ्गपीठस्य तस्मात्सकलनिष्कलम् ॥ ६१ ॥
सौन्दर्यं नास्ति तद्देहे मांसास्थिरुधिरं न हि । [4]इन्द्रचाप इवाकाशे दर्पणे प्रतिबिम्बवत् ॥ ६२ ॥
इत्येवं मनसा कल्प्यं निष्कलं सकलं भवेत् ।

[अङ्गम्]

त्रिगुणं सत्यखड्गं च दुर्भेद्योऽनुग्रहस्तथा[5] ॥ ६३ ॥
ऋद्धिर्माया विवर्णं च नादः संहृतिरेव च । एते दशगुणाः प्रोक्तास्तेषां लक्षणमुच्यते ॥ ६४ ॥
त्रिगुणं शूलमित्युक्तं सत्यं परशुरुच्यते । [6]खड्गमीशप्रतापोऽयमभेद्यं वज्रमिष्यते ॥ ६५ ॥
ईशस्यानुग्रहश्चैव ह्यभयं तु [7]प्रशस्यते । ऋद्धिः स्यान्नागरूपं तु पाशं मायास्वरूपकम् ॥ ६६ ॥
विवर्णमङ्कुशं चैव घण्टां नादात्मकं विदुः । संहारस्त्वग्निरूपं तु पाशानां भस्मसात्कृतिः ॥ ६७ ॥

[उपाङ्गम्]

[8]एतद्वै गुणरूपं च साङ्गं चेति प्रकीर्तितम् । वस्त्रोपवीतमालाश्च गन्धमाभरणं तथा ॥ ६८ ॥
आसनावरणं चैवाप्युपाङ्गं चेति कीर्तितम् । अङ्गभाव इति प्रोक्तस्तस्य रूपमिहोच्यते ॥ ६९ ॥

[रूपम्]

कुन्देन्दुस्फटिकाभासं जटामकुटमण्डितम् । पञ्चवक्त्रसमायुक्तं पञ्चवर्णसमन्वितम् ॥ ७० ॥
दशबाहुयुतोदग्रं द्विपादं [9]पद्मसंस्थितम् । शूलं परशुखड्गौ च [10]वज्राभयं च दक्षिणे ॥ ७१ ॥
[11]नागं पाशाङ्कुशं चैव घण्टां वह्निं च वामके । सर्वलक्षणसंयुक्तं सर्वाभरणसंयुतम् ॥ ७२ ॥
दिव्याम्बरधरं देवमूर्ध्वबाहुं महोज्ज्वलम् । [12]दिव्यगन्धानुलिप्ताङ्गं दिव्यवस्त्रेण वेष्टितम् ॥ ७३ ॥
शान्तरूपमिदं प्रोक्तं विशेषस्त्वधुनोच्यते । कर्मेशं पूर्ववक्त्रं स्यात्कर्तृ तद्दक्षिणं भवेत् ॥ ७४ ॥
अपरं [13]मूर्तवक्त्रं स्यादमूर्तं चोत्तराननम् । ऊर्ध्वं च शिवसादाख्यं पञ्चसादाख्यमुच्यते ॥ ७५ ॥
ईशानादीनि मूर्धानि [14]सृष्टिरेवाकृतिर्भवेत् । प्राग्वक्त्रं पूर्वमुद्दिष्टं पश्चिमायां तु पश्चिमम् ॥ ७६ ॥
दक्षिणाभिमुखं याम्यमुत्तरायां तथोत्तरे । एवं पञ्चात्मतत्वाच्च सर्वकारणकारणम् ॥ ७७ ॥

---

[1] B : धातुभेदमिति [2] A : तत्करादि चतुर्धा च विध्यत्वे तु [3] A : सर्वाङ्गानि च संपूर्णा
[4] A : इन्द्रचापमिवाकाशे [5] A : ततः pour तथा [6] B : खड्गमीशप्रतापाय महेशं वज्रमिष्यते
[7] B : प्रदर्श्यते [8] B : एते च गुणरूपाश्च सांशाश्चति [9] A : पद्मसंहतम् [10] A : वज्रं चाभयं दक्षिणे
[11] A : पाशं चैवाङ्कुशं चैव [12] B : दिव्यगन्धेन लिप्ताङ्गं दिव्यवस्त्रोपवेष्टितम् [13] A : मूर्ति pour मूर्त
[14] B : सृष्टिरेवाहुतिर्भवेत्

[स्थापनादिकर्म कर्मसादाख्ये कर्तव्यम्]

लिङ्गरूपमिदं प्रोक्तमिति शास्त्रस्य निर्णयः। एतद्धै कर्मरूपत्वात्कर्मकर्मेति कारयेत् ॥ ७८ ॥
कर्मादीनि कलादीनि कर्म चेति निगद्यते। तस्माद्धै स्थापनादीनि कर्मकर्मेति कारयेत् ॥ ७९ ॥
लिङ्गे वा स्थण्डिले वापि मण्डले हृदयेऽपि वा। ध्यात्वा सदाशिवं पूज्य विधिवत्स्थापनं कुरु ॥ ८० ॥
कर्तकादिचतुर्णां तु[1] [2]स्थापनादि न कारयेत्। योगिनां मन्त्रवज्ज्ञेयं वक्त्रदेवं [3]भवं विदुः ॥ ८१ ॥
एतैश्च लक्षणैर्युक्तं कर्मसादाख्यमुच्यते[4]। शिवादिकर्मपर्यन्तं क्रमेण परिकीर्तितम् ॥ ८२ ॥

[महेशः]

सादाख्यलक्षणं प्रोक्तं महेशं शृणु तत्त्वतः। कर्मेशस्य सहस्रांशान्महेशस्य समुद्भवः ॥ ८३ ॥
महेशं सकलं विद्यात्सृष्टिस्थितिलयात्मकम्। पञ्चविंशतिभेदैस्तु तन्मूर्तिः पञ्चविंशतिः ॥ ८४ ॥

[महेशरूपभेदाः]

पञ्चविंशति संप्रोक्तमेकवक्त्रं त्रिनेत्रकम्। एतच्छिवमयं पिण्डं रूपभेदमथ शृणु ॥ ८५ ॥
प्रथमं च सोमधारि द्वितीयमुमया सह[5]। तृतीयं तु वृषारूढं चतुर्थं [6]नृत्तरूपकम् ॥ ८६ ॥
[7]पञ्चमं वैवाहमूर्ति षष्ठं पाशुपतं तथा। गङ्गाधरं [8]सप्तमं च त्वष्टमं [9]त्रिपुरान्तकम् ॥ ८७ ॥
नवमं [10]गौरिसंवादं दशमं गौर्यनुग्रहम्। [11]उमयालिङ्गितं पश्चाद्गुहोमासहितं तथा ॥ ८८ ॥
त्रयोदशमुमाराध्यं[12] सुखासीनं चतुर्दशम्। [13]कङ्कालं तु पञ्चदशं केशवार्धं च षोडशम् ॥ ८९ ॥
किरातं च सप्तदशमर्धनारीश्वरं तथा। [14]चक्रप्रसादमेकोनविंशं विघ्नप्रसादकम् ॥ ९० ॥
एकविंशं चैकपादं दक्षिणामूर्तिकं तथा। भिक्षाटनं त्रयोविंशं [15]चतुर्विंशं च कालहम् ॥ ९१ ॥
[16]लिङ्गोद्भवमुमाकान्तं पञ्चविंशतिभेदकम्।

[रुद्ररूपम्]

प्रोक्तो महेशभेदस्तु रुद्रभेदमतः शृणु[17] ॥ ९२ ॥
सहस्रांशान्महेशस्य रुद्रोद्भवस्ततः शृणु। चतुर्भुजं त्रिनेत्रं च जटामकुटमण्डितम् ॥ ९३ ॥
ज्वालाग्निसदृशप्रख्यं [18]टङ्कशूलसमन्वितम्। वरदाभयसंयुक्तं रुद्ररूपमिति स्मृतम् ॥ ९४ ॥

[रुद्रब्रह्मविष्ण्वाद्युत्पत्तिः)

तद्देवस्य सहस्रांशाद्ब्रह्मविष्णुसमुद्भवः। तच्छिवे दक्षिणांशे तु ब्रह्माभूत्सृष्टिकारणम् ॥ ९५ ॥

---

1 B : च pour तु  2 A : स्थापनादीनि कारयेत्  3 A : भवाद्विदुः  4 B : उत्तमम् pour उच्यते
5 B : युतः pour सह  6 A : द्रव्यकारणम्  7 B : पञ्चमोद्वाहमूर्तिस्तु
8 A : तथा चैव pour सप्तमं च  9 A : त्रिपुराननम्  10 B : गौरीसंवाहो
11 A : उमया सहितं  12 A : उमासाद्यं pour उमाराध्यं  13 A : कङ्कालं केशवार्धं च षोडशं त्रिपुरान्तकम्
14 A omet les demi-*śloka* 90b et 91a.  15 A : चतुर्विंशति कालहा  16 A : सुखासनमुमाकान्तं
17 A : अतः परम् pour अथ शृणु  18 A : टङ्कशूलधरान्वितम्

तच्छिरे वामपार्श्वे तु [1]विष्णुर्ह्यासीत्तथैव च । आदित्यो दक्षिणे नेत्रे चन्द्रो वै वामलोचने ॥ ९६ ॥
जातवेदा ललाटे तु ह्यास्ये वेदसमुद्भवः । घ्राणे वायुः समुत्पन्नः श्रोत्रे [2]कृतयुगादयः ॥ ९७ ॥
गले गणेशः संभूतो हृदये षण्मुखस्तथा । नाभेर्वै द्वादशादित्याः सर्वलोकर्षिसंज्ञकाः ॥ ९८ ॥
रुद्राश्चैव तु सर्वे वै पश्चात्रं [3]क्षेत्रपालकः । विद्याङ्गानि[4] च देवस्य मूलाधारे समुद्भवाः ॥ ९९ ॥
कटिदेशे तु वसवो गुह्यदेशे [5]भवादयः । [6]ऊरुभ्यामश्विनौ जातौ [7]तद्देशे त्वष्टमङ्गलम् ॥ १०० ॥
धर्माधर्मादिदेवाश्च जङ्घाजाता दशायुधाः । क्षुरिका बीजमुख्यं च [8]पादपङ्कजयोस्तथा ॥ १०१ ॥
अधिरक्षोगणाः सिद्धा नागा विद्याधरास्तथा । गन्धर्वाप्सरसश्चैव [9]पादमूलसमुद्भवाः ॥ १०२ ॥
अष्टाविंशतिकोटयस्तु देवा रोमसमुद्भवाः । [10]नद्यश्च सागराः सर्वे रोममूलसमुद्भवाः ॥ १०३ ॥
[11]यत्स्थाने जननं तेषां तत्स्थाने च लयो भवेत् । तत्वानामासनं तत्र तच्छिवाकृतिरुच्यते[12] ॥ १०४ ॥
सशीर्षं प्रणवान्तस्तु प्रणवः सर्वकारणम् । [13]रुद्राद्भूम्यादिदेवान्तमीश्वरस्थितिरैश्वरम् ॥ १०५ ॥
शिवात्सदाशिवोद्भूतिस्तस्माच्चैव महेश्वरः । [14]महेश्वराच्छिवाद्रुद्रो रुद्राद्विष्णुसमुद्भवः ॥ १०६ ॥
विष्णोर्ब्रह्मा समुद्भूतः [15]कृत्यदेवसमुद्भवः । तस्माद्वै देवतादीनां शृणुष्व [16]जनकाञ्जनिम् ॥ १०७ ॥
शिवस्य लक्षणं प्रोक्तं शैवोत्पत्तिविधिं शृणु ॥ १०८ ॥

इति [17]श्रीरौरवतन्त्रे [18]पञ्चसादाख्यविधिपटलः सप्तविंशः ॥

---

[1] A : विष्णुस्वामी तथैव च [2] A : कृतयुगादिकम् [3] A : क्षेत्रलाभकम् [4] A : विद्याङ्गश्चैव देवानां [5] A : भवोदयः [6] B : ऊर्वोश्च त्वश्विनौ [7] A : तद्देशे तु स्वमङ्गलम् [8] A : पादयोः पङ्कजस्तथा [9] B : पादमूले pour पादमूल [10] B : रुद्रेशः pour नद्यश्च [11] A : यत्स्थाने गणयेद्येषां [12] B : इष्यते pour उच्यते [13] A : रुद्यद्भूमादिदेवोंश ईश्वरस्थितिरैश्वरम् [14] A : महेश्वराच्छिवो रुद्रो [15] A : कृत्यदेवैःसमुद्भवाः [16] A : कनकाञ्जनः [17] B omet श्रीरौरवतन्त्रे
[18] B : पञ्चसादाख्यो नाम सप्तविंशः पटलः

# BIBLIOGRAPHIE

## I

### IMPRIMÉS

*Ajitāgama*, éd. par N. R. Bhatt, vol. I, 1964; Vol. II, 1967, Publications de l'Institut Français d'Indologie, N° 24.

*Aparājitapṛcchā* par Bhuvanendra; éd. par P. A. Mankad, Gaekwad's Oriental Series, Baroda N° 115, 1950.

*Āpastambamantrapāṭhaḥ*: *Apastambamantrabrāhmaṇa* éd. par M. Winternitz, Oxford, 1897.

*Brahmāṇḍapurāṇa*, Veṅkṭeśvara Steam Press, Bombay 1957.

*Īśānaśivagurudevapaddhati* par Īśānaśivagurudevamiśra; éd. par T. Gaṇapatiśāstri, vol. I *Sāmānyapāda*, vol. II Mantrapāda, vol. III *Kriyāpāda, paṭala* 1-30; vol. IV *Kriyāpāda, paṭala* 31-64 et *Yogapāda*, Trivandrum Sanskrit Series n° 69, 72, 77 et 83, 1925.

*Kāmikāgama*, 2 vols., CivañāNapotayantraçālai, Cintātiripēṭṭai, Madras, 1909 (car. grantha).

*Kāraṇāgama*, CivañāNapotayantraçālai, Cintātiripēṭṭai, Madras (vol. I *Pūrvakāraṇāgama*, 1921; vol. II *Uttarakāraṇāgama*, 1901) (car. grantha).

*Kiraṇāgama*, Śivāgamasiddhāntaparipālanāsaṃgha, Dēvakōṭṭai, 1932 (I *Vidyāpāda*; II *Kriyāpāda*; III *Caryāpāda*; IV *Yogapāda*) (car. grantha)

*Kriyādīpikā*, par Śivāgrayogīndrajñānaśivācārya, éd. par Muttukumara tampirān, Madras, 1929 (car. grantha).

*Kriyākramadyotikā* (ou *Aghoraśivācāryapaddhati*) par Aghoraśivācārya, avec le commentaire *Prabhā* de Nirmalamaṇideśika, Chidambaram, 1927 (car. grantha).

*Kriyākramadyotikā, aparakriyāvidhi*, par Aghoraśivācārya, Tenintiya arcakar caṅkam, Madras, 1971.

*Mahānārāyaṇopaniṣad*, éd. par G. A. Jacob, Bombay Sanskrit and Prakrit Series, N° 35, 1888.

*Mṛgendrāgama (vidyāpāda* et *yogapāda)*, avec les commentaires de Bhaṭṭanārāyaṇakaṇṭha et Aghoraśivācārya; Śivāgamasiddhāntaparipālanāsaṅgha, Devakoṭṭai, 1928.

*Nāṭyaśāstra*, de Bharata, avec le commentaire *Abhinavabhāratī* par Abhinavagupta; éd. par M. Ramakrishna Kavi et J. S. Pade; 4 vols. Gaekwad's Oriental Series, Baroda, N° 36, 68, 124 et 145; 1934-1964.

*Pavitrotsavavidhi*, CivañāNapotayantraçālai, Cintātiripēṭṭai, Madras, 1929 (car. grantha).

*Rauravāgama* vol. I éd. par. N. R. Bhatt, Publications de l'Institut Français d'Indologie N° 18, 1961.

*Sakalāgamasārasaṅgraha*, CivañāNapotayantraçālai, Cintātiripēṭṭi, Madras, 1912, (car-grantha)

*Śilparatna* de Śrīkumāra, 2 vols, Trivandrum Sanskrit Series, N° 75 et 98 Trivandrum 1922-1929.

*Somaśambhupaddhati* par H.B. Lachaux; 2 vols; Publications de l'Institut Français d'Indologie, n° 25, 1963-1969

*Śrītattvanidhi*, 3 vols., Tanjāvūr Sarasvati Mahāl Library Series, N° 104, 1963-1966.

„ Veṅkaṭeśvara Steam Press, Bombay, Śaka 1823.

*Suprabhedāgama* CivañāNapotayantraçālai. Cintātiripēṭṭai, Madras, 1907 (I *Kriyāpāda*; II *Caryāpāda*; III *Yogapāda*; IV *Jñānapāda*) (car. grantha).

*Taittirīyabrāhmaṇa*, 3 vols., Ānandāśrama Sanskrit Series n° 37, Poona, 1934.

*Taittirīyāraṇyaka*, avec le commentaire de Bhaṭṭabhāskara, 3 vols., Government Oriental Library Series, N° 26, 27 et 29, Mysore, 1902.

*Taittirīyasaṃhitā*, 6 vols., Ānandāśrama Sanskrit Series, n° 24, Poona, 1940.

*Vātulaśuddhākhyam*, CivañāNapotayantraçālai, Cintātripēṭṭai, Madras 1912.

id. (ou Āgamarahasyam) éd. par Talakāḍu āgamika Krishna dīkṣita, Bangalore 1958.

## II

## MANUSCRITS

*Acintyaviśvasādākhya*, copies des manuscrits de M. K. Sundareśa Baṭṭar, Madurai et de A. Rāmanātha gurukkal, Kaṇḍanūr (T n° 7 et 8)

*Aṃśumadāgama*, copies des manuscrits de Akṣaya gurukkaḷ, KīLvelūr et de M. K. Sundareśa Baṭṭar, Madurai (T n° 3 et 6)

*Aṃśumatkāśyapa*, copies des manuscrits de Akṣaya gurukkaḷ KīLvelūr et Nāgarāja gurukkaḷ, Periyakuḷam (T n° 1 et 2)

*Cintyāgama*, copies des manuscrits de Akṣaya gurukkaḷ, KīLvelūr et de Svāminātha Śivācārya, Tiruvāḍudurai (T n° 13 et 14)

*Dīptāgama*, copies des manuscrits de Akṣaya gurukkaḷ, KīLvelūr et de M. K. Sundareśa Baṭṭar, Madurai (T n° 15 et 16).

*Jñānaratnāvali*, copie du manuscrit R. No. 11898 de Madras Government Oriental Manuscripts Library (T n° 231)

*Kālottara*, copies des manuscrits R. No. 14343 et 16805 de Madras Government Oriental manuscripts Library, (T n° 59 et 60).

*Makuṭāgama*, copies des manuscrits de Akṣaya gurukkaḷ, KīLvelūr, de Kanaka dīkṣitar, Tirunelvēli et de A. Rāmanātha gurukkaḷ, Kaṇḍanūr (T n° 18, 19 et 20).

*Mataṅgapārameśvara*, copie du manuscrit R No. 16794 de Madras Government Oriental Manuscripts Library (T n° 136)

*Pārameśvarāgama*, copie du manuscrit de S. Sambanda gurukkaḷ, Madras (T n° 141).

*Rauravāgamapaddhati*, copie du manuscrit de Svaminatha Śivācārya Mylapore, Madras (T n°. 120)

*Sahasrāgama*, copie du manuscrit de Akṣaya gurukkaḷ, KīLvelūr (T n° 33)

*Sakalāgamaprāyaścittam*, copies des manuscrits du Kailāsa Bhaṭṭar, Tirunelveli (T n° 160, 181 et 203).

*Santānasaṃhitā*, copie du manuscrit d'Adyar Library and Research centre, Madras (T n° 67).

*Sūkṣmāgama*, copies des manuscrits de Akṣaya gurukkaḷ, KīLvelūr, de Kanaka dīkṣitar, Tirunelvēli et de J. Viśvanātha gurukkaḷ, Mēlmaṅgalam (T n° 36, 37 et 38).

*Svāyambhuvāgama*, copies des manuscrits de Akṣaya gurukkaḷ, KīLvelūr et de Kanaka dīkṣitar, Tirunelvēli (T n° 39 et 40).

*Siddhāntadīpikā*, copie du manuscrit de Svaminatha Śivacārya, Mylapore, Madras (T n° 120).

*Śivālayanirmāṇasthāpanadīpikā*, copie du manuscrit de Svaminatha Śivācārya, Mylapore, Madras (T n° 122).

*Vīrāgama*, copies des manuscrits de Akṣaya gurukkaḷ, KīLvelūr, de Subrahmaṇya gurukkaḷ, KuNRakkuḍi et de Rāmanātha gurukkaḷ, Kaṇḍanūr (T n° 29, 30 et 31).

*Yogajāgama*, copies des manuscrits de M. K. Sundarseśa Baṭṭar, Madurai et de J. Viśvanātha gurukkaḷ, Mēlmaṅgalam (T n° 24 et 26)

## TABLE DES PLANCHES

# TABLE DES MATIÈRES

# ERRATA

| *page* | *ligne* | *au lieu de* | *lire* | *page* | *ligne* | *au lieu de* | *lire* |
|---|---|---|---|---|---|---|---|
| xvii | 17 | ०पादिष्टा: | ०पदिष्टा: | 13 | 6 | राष्टं | राष्ट्रं |
| ,, | 24 | ०हृता | ०हृता: | 15 | 1 | कनिष्ठाशां | कनिष्ठानां |
| xviii | 5 | पुन्नवं | पुङ्गवं | 19 | 2 | त्रिरात्रवाधि० | त्रिरात्रं वाधि० |
| ,, | 14 | चोदित | चोदितो | 22 | 2 | पाशाड्कुशं | पाशाङ्कुशं |
| ,, | 18 | कर्तारौ | कर्तारो | 26 | 1 | हृदयेन | हृदयेन |
| ,, | 19 | ऽन्यादि | ऽग्न्यादि | 27 | 5 | स्यादिरभागं | स्यादिभागं |
| xix | 27 | रुरुण | रुरुणा | 32 | 4 | ०र्यष्ठा | ०र्यष्ठा |
| xxi | 20 | प्रातिपादितौ | प्रतिपादितौ | 33 | 4 | ०धानाधिकं | ०धानादिकं |
| xxiii | 1 | निर्दिष्टेत्रऽत्र | निर्दिष्टेऽत्र | 37 | 14 | 72b-47 | 72b-74 |
| ,, | 28 | व्यत्सासो | व्यत्यासो | 43 | 1 | व्याहृतिं | व्याहृतिं |
| xxiv | 1 | पतिसंवत्सरं | प्रतिसंवत्सरं | 45 | 1 | सम⋯र्यं | समभ्यर्च्यं |
| ,, | 3 | निवेदितव्य० | निवेदन० | 46 | 7 | समर्चयेत ॥ | समर्चयेत् ॥ |
| ,, | 13 | पतिमादीनां | प्रतिमादीनां | 49 | 1 | हृदा | हृदा |
| ,, | ,, | पायश्चित्त० | प्रायश्चित्त० | 62 | 5 | वषोच्चं | वृषोच्चं |
| xxviii | 28 | सोमस्कन्द० | सोमास्कन्द० | 66 | 1 | प्रत्येक | प्रत्येकं |
| ,, | ,, | कामरि | कामारि | 67 | 4 | स्नोमेश० | सोमेश० |
| xxix | 5 | हर्यध | हर्यर्धं | 74 | 1 | घतशिरो० | घृतशिरो० |
| xxx | 11 | गेयमूति० | गेयमूर्ति० | 75 | 27 | śloka 16 | śloka 1b |
| ,, | 2६ | भवितव्यति | भवितव्यमिति | 76 | 20 | 34, | 36, |
| xxxi | 3 | वणनं | वर्णनं | 79 | 3 | यवान्वितम । | यवान्वितम् । |
| xxxii | 15 | गन्धापवित्रा० | गन्धपवित्रा० | 80 | 3 | कटिंपार्श्वा० | कटिपार्श्वा० |
| ,, | 27 | सप्रपचं | सप्रपञ्चं | 83 | 3 | दीघ० | दीर्घ० |
| xxxiii | 24 | कृतवद्भयो | कृतवद्भय: | 112 | 6 | द्वयाङ्गुलम | द्वयाङ्गुलम् |
| xxxiv | 3 | कृतवद्भयो | कृतवद्भय: | 113 | 3 | वेददद्राङ्गुलं | वेदरुद्राङ्गुलं |
| 4 | 4 | समम | समम् | ,, | 5 | वसुनन्द० | वसुनन्द० |
| 7 | 16 | 22 | 29 | 115 | 6 | नतम | नतम् |
| 8 | 1 | शिवद्विजा: | शिवद्विज: | 130 | 10 | 101, b-6: | 101, 5b-6: |
| 9 | 6 | स्वस्वानम्नैव | स्वस्वनाम्नैव | 133 | 13 | हृदादिभि: | हृदादिभि: |
| ,, | 22 | 35-33 | 35-43 | 134 | 6 | घटाद्बीज हृदि | घटाद्बीजं हृदि |
| 11 | 6 | शिखण्डयन्त | शिखण्डयन्तं | 135 | 7 | वर्धनीम | वर्धनीम् |
| 13 | 1 | सुवत्तं | सुवृत्तं | ,, | ,, | स्थापयेद्वध: | स्थापयेद्बुध: |

| page | ligne | au lieu de | lire |
|---|---|---|---|
| 146 | 2 | ०परिष्ठात्तु | ०परिष्टात्तु |
| 147 | 3 | कुर्याद्विप्राशे | कुर्याद्विप्रांशे |
| ,, | 21 | 12, 6-65a | 12, 61-65a |
| 148 | 19 | 13, 18-10 | 13, 8-10 |
| 159 | 6 | ओज ०ख्या | ओजस्संख्या |
| 165 | 1 | खण्डवर्धि | खण्डविधि |
| 172 | 1 | चरेत । | चरेत् । |
| 173 | 1 | द्विगुण | द्विगुणं |
| 175 | 2 | कुवा | कृत्वा |
| 188 | 1 | क्षरिका० | क्षुरिका० |
| 190 | 1 | अग्निहदय० | अग्निहृदय० |
| ,, | 17 | 10b-103a | 90b-103a |
| 191 | 2 | विवेशयेत । | विन्यसेत् । |
| ,, | ,, | गहीत्वा | गृहीत्वा |
| ,, | 22 | *Sakalāgama-saṃgraha* | *Sakalāgama-sārasaṃgraha* |
| 194 | 26 | P. 81 | P. 181 |
| 195 | 7 | कल्पयेत । | कल्पयेत् । |
| 196 | 9 | योजयेत । | योजयेत् । |
| 197 | 1 | त कल्पयेत् | तु कल्पयेत् |
| ,, | 6 | ततस्थाने | ततस्स्थाने |
| ,, | 7 | तत्स्थ नात्तु | तत्स्थानात्तु |

| page | ligne | au lieu de | lire |
|---|---|---|---|
| 197 | 12 | धेनुमुद्रा | धेनुमुद्रां |
| ,, | 14 | कल्पयेत । | कल्पयेत् । |
| ,, | 16 | योजयेत । | योजयेत् । |
| 198 | 11 | वौषडन्तकम | वौषडन्तकम् |
| 199 | 6 | त्वाचाय: | त्वाचार्यः |
| 200 | 11 | हस्तकम । | हस्तकम् । |
| 202 | 13 | अन्त्यत्वं | अन्यत्वं |
| 207 | 6 | तत्तन्त्रेण | तन्मन्त्रेण |
| 212 | 4 | प्रतिष्ठदीनि | प्रतिष्ठादीनि |
| ,, | 6 | तं संपूज्य | तु संपूज्य |
| ,, | 8 | । नवृत्त्यादि० | निवृत्त्यादि० |
| 213 | 10 | ०वागीश्वरो | ०वागीश्वरौ |
| ,, | ,, | त पूजयेत् | तु पूजयेत् |
| ,, | 13 | पूर्वववत् | पूर्ववत् |
| ,, | 22 | घृतपर्णकम् | घृतपूर्णकम् |
| 215 | 10 | त्वाज्यपर्णं | त्वाज्यपूर्णं |
| 218 | 17 | दिव्यालिङ्गा० | दिव्यलिङ्गा० |
| ,, | 18 | त्रनेत्रं | त्रिनेत्रं |
| 220 | 24 | मूर्धानि | मूर्धादि |
| 221 | 23 | [रुद्रब्रह्म० | [ब्रह्म० |
| ,, | 30 | अथ शृणु | अतः शृणु |
| 235 | 6 | १६२-१६९ | १६२-१६८ |
| 238 | 3 | रुद्रब्रह्मविष्णवा० | ब्रह्मविष्णवा० |

Shaivi. Sm.





## PUBLICATIONS DE L'INSTITUT FRANÇAIS D'INDOLOGIE

Nos.

1. Kārāvelane—*Kāreikkālammeiyār*, œuvres éditées et traduites. Introduction par Jean Filliozat. 1956.
2. Jean Filliozat—*Les relations extérieures de l'Inde* (1)
   1. *Les échanges de l'Inde et de l'Empire Romain aux premiers siècles de l'ère chrétienne.*
   2. *La doctrine brahmanique à Rome au IIIème siècle.* 1956.
3. Madeleine Biardeau—*Le Tattvabindhu de Vācaspatimiśra.* Edition critique traduction et introduction. 1956.
4. J. Monchanin, J. Filliozat, A. Bareau—*Entretiens* 1955. 1956.
5. Louis Renou—*Etudes sur le vocabulaire du Ṛgveda.* Première série. 1958
6. Suzanne Siauve—*La voie vers la connaissance de Dieu* (*Brahma-Jijñāsā*) *selon l'Anuvyākhyāna de Madhva.* 1957.
7. Dev Raj—*L'esclavage dans l'Inde ancienne d'après les textes palis et sanskrits.* Avec une préface du Dr. Jean Filliozat. 1957.
8. Alain Daniélou—*Tableau comparatif des intervalles musicaux.* 1958.
9. Alain Daniélou—*La musique du Cambodge et du Laos.* 1957.
10. André Bareau—*La vie et l'organisation des communautés bouddhiques modernes de Ceylan.* 1957.
11. Alain Daniélou et N. R. Bhatt—*Textes des Purāṇa sur la théorie musicale.* Vol. I, Edition critique, traduction française et introduction. 1959.
12. Charlotte Vaudeville—*Kabīr Granthāvali* (*Doha*). Avec introduction traduction et notes. 1957.
13. Madeleine Biardeau—*Sphoṭa Siddhi* (*La Démonstration du Sphoṭa*) *par Maṇḍana Miśra.* Introduction, traduction et commentaire. Texte sanskrit établi par N. R. Bhatt avec la collaboration de T. Ramanujam 1958.
14. Suzanne Siauve—*Les noms védiques de Viṣṇu dans l'Anuvyākhyāna de Madhva* (*Brahma-Sūtra* I, 1, *adhikaraṇa* 2 à 12). Texte avec traduction et notes. 1959.
15. Charlotte Vaudeville—*Etude sur les sources et la composition du Rāmāyāṇā de Tulsi-Dās.* Traduction en hindi par J. K. Balbir. तुलसीदास रचित रामचरितमानस का मूलाधार व रचनाविषयक समालोचनात्मक एक अध्ययन, fasc. I. 1959 fasc. II. 1965.
16. Alain Daniélou et N. R. Bhatt—*Le Gītālaṃkāra.* L'ouvrage original de Bharata sur la musique. Edition critique, traduction française et introduction. 1959.
17. Rasik Vihari Joshi—*Le rituel de la dévotion kṛṣṇaïte.* Préface par Jean Filliozat 1959.
18. N. R. Bhatt—*Rauravāgama,* édition critique, Vol. I. Introduction : Les Āgama çivaites, par Jean Filliozat. 1961. Vol. II 1972.
19. R. Dessigane, P. Z. Pattabiramin et J. Filliozat—*La légende des jeux de Civa à Madurai d'après les textes et les peintures* Vol. I Texte—Vol. II Planches. 1960.
20. Claude Jacques—*Gayāmāhātmya.* Introduction, édition critique et traduction française. 1962. 1962.
21. Charlotte Vaudeville—*Les duhā de Dhola Mārū.* Avec introduction traduction et notes. 1962.

